॥ निर्णयसिन्धोस्सूचिः॥१

शेषः

अथ शुद्धपत्रं लिख्यते॥

| पत्र | पंक्ति | अशुद्धं | शुद्धं |
|---|---|---|---|
| १३९ | ९ | चर्थदिन | चतुर्थदिन |
| २९० | ९ | पत्रवा | पत्न्यावा |
| १८६ | १४ | क्लिवाद्या | क्लीवाद्या |
| ३१६ | १९ | दासीना | दीक्षिता |
| २४६ | १२ | एकपंक्ति द्विरावृत्ति भई है सो व्यर्थ है | |
| ५६ | २२ | स्तोत्रपाठमपि दृष्ट्वा वारं कुर्यान्न डुक्तभविष्ये तस्माद्दशम्यामेन च स्नानं गंगा: इति वृद्धिः॥ | |
| ११३ | २२ | कार्तिकस्नानं | कार्तिकमासः॥ |

श्रीगणेशायनमः कारुण्यैकनिकेतं रामंसीतालतायुक्तं विश्वामित्रान्ववायव्रततिसमाल
वशाखिनंवंदे १ लक्ष्मीसहायंकल्पद्रुतलरंजितगोकुलं वर्हापीडंघनश्यामंमहःकिंचिदु
पास्महे २ यत्पादसंस्मृतिःसर्वमंगलप्रतिभूर्मता तानूभट्टरामकृष्णाख्यान्श्रीतातचरणा
न्तुमः ३ सर्वकलागणसंदोहनिदानंयत्पदद्वयं घुनदीसोदरीमंवामुमाख्यांनौमिसादरं
४ विंदुमाधवपादाब्जरोलंवीकृतविग्रहं ज्यायांसंभ्रातरंभट्टदिवाकरमुपास्महे ५ हे
द्रिमाधवमतेप्रविचार्यसम्यगालोच्यतत्वमथतीर्थकृतांपरेषां श्रीरामकृष्णतनयक
मलाकराख्यःकालेयथामतिविनिर्णयमातनोति ६ संतियद्यपिविद्वांसस्तन्निबंधाः
कोटिशः तथाप्यमुष्यवैदग्धीकेचिद्विज्ञातुमीशते ७ तत्रसंक्षेपतःकालःषोढा अय
नमृतुर्मासःपक्षोदिवसइति तत्राद्योमाधवमतेपंचधा सावनःसौरश्चांद्रोनाक्षत्रोवा
र्हस्पत्यइति गुरोर्मध्यराशिभोगेनवार्हस्पत्यः सचज्योतिःशास्त्रप्रसिद्धःहेमाद्रिस्त्वस्य
योर्धर्मशास्त्रेऽनुपयोगात्त्रिरएवविधाश्चाह तत्रवक्ष्यमाणैःसावनादिद्वादशमासैरु
तदहं मलमासेतुसतिषष्टिदिनात्मकएकोमासाइतिद्वादशमासत्वमविरुद्धं०तथा
चव्यासःषष्ट्यातुदिवसैर्मासःकथितोबादरायणैरिति तत्रचांद्रोब्दःषष्टिभेदः तदा
गर्गः प्रभवोविभवःशुक्लःप्रमोदोथप्रजापतिः अंगिराःश्रीमुखोभावोयुवाधातात
थे
वच ईश्वरोवहुधान्यश्चप्रमाथीविक्रमोवृषः चित्रभानुस्सुभानुश्चतारणःपार्थिवो
ऽव्ययः सर्वजित्सर्वधारीचविरोधीविकृतःखरः नंदनोविजयश्चैवजयोमन्मथदुर्मु
खौ हेमलंवोविलंवोथविकारीशार्वरीप्लवः शुभकृच्छोभनःक्रोधीविश्वावसुपराभ
वौ प्लवंगःकीलकःसौम्यःसाधारणविरोधकृत् परिधावीप्रमाथीचआनंदोराक्षसो
नलः पिंगलःकालयुक्ताश्चसिद्धार्थीरौद्रदुर्मती दुंदुभीरुधिरोद्गारीरक्ताक्षःक्रोधनःक्ष
यइति यद्यप्यज्योतिषेगुरोर्मध्यमराशिभोगेनप्रभवादीनांमाघादौप्रवृत्तिरुक्ता तथा
पिप्रभवादीनांचांद्रत्वमप्यस्ति॥०चांद्राणांप्रभवादीनांपंचकेपंचकेयुगइतिमाधवो
क्तेः तेनचांद्रःप्रभवादिश्चैत्रसितेप्रवर्त्तते वार्हस्पत्यस्तुमाघादौ तयोर्विनियोगेज्योति
र्निबंधेब्रह्मसिद्धांतेव्यावहारिकसंज्ञोयंकालःस्मृत्यादिकर्मसु योज्यःसर्वत्रतत्रापिजै
वोवानर्मदोत्तरे आर्ष्टिषेणःस्मरेत्सर्वत्रकर्मादौचांद्रंसंवत्सरंसदा नान्यंयस्माद्वत्सरा
दौप्रवृत्तिस्तस्यकीर्त्तितेति अयनंतुसौरर्तुत्रयात्मकं॥सौरर्तुत्रितयंप्रदिष्टमयनमितिदी
पिकोक्तेःतद्द्विविधं दक्षिणमुत्तरंचेति कर्कसंक्रांतिर्दक्षिणं मकरेन्यं अनयोर्विनियोगमा
हमदनरत्नेसत्यव्रतः।।देवतारामवाप्यादिप्रतिष्टोदङ्मुखेरवौ दक्षिणाशामुखेकुर्वन्न
तत्फलमवाप्नुयात् वैखानसःमातृभैरववाराहनारसिंहत्रिविक्रमाः महिषासुरहंत्रीच८
स्थाप्यावैदक्षिणायने वैशब्दोप्यर्थे नतुदक्षिणायनएवेतिनियमःएवंवचनेदक्षिणा
यनेनिषिद्धायादेवप्रतिष्ठायादेवविशेषेप्रतिप्रसवात् तथाचोक्तंरत्नमालायां गृहप्रवे
शत्रिदशप्रतिष्ठाविवाहचौलव्रतबंधपूर्वं सौम्यायनेकर्मशुभंविधेयंयद्गर्हितंतत्खलुद

शिरोचेति अस्यापवादः काशीखंडे सदाकृतयुगं चास्तु सदा चास्तूत्तरायणं सदा महोदय
श्चास्तु काश्यां निवसतां सतां इत्ययनम् ऋतुर्मासद्वयात्मा मलमासे तु मासद्वयात्मकए
कोमासस्तेन मासद्वयात्मकत्वमविरुद्धं सद्वेधा चांद्रः सौरश्च चैत्रारंभो वसंतादिश्चां
द्रः मीनारंभो मेषारंभो वा सौरः ॥ मीनमेषयोर्मेषवृषयोर्वा वसंत इति बौधायनोक्तेः-
अनयोर्विनियोगमाह त्रिकांडमंडनः श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चांद्रेषु ऋतुषु तदभा
वे तु सौरेषु त्विति ज्योतिर्विदां मतं सद्विविधोपि षोढा वसंतो ग्रीष्मो वर्षा शरद्धेमंतः शि-
शिर इति इति ऋतुः मासश्चतुर्धा सावनः सौरश्चांद्रो नाक्षत्र इति त्रिंशद्दिनः सावनः अर्कसं
क्रांतेः संक्रांत्यवधिः सौरः यद्यपि हेमाद्रिमाधवकालादर्शाद्यालोचनेन मेषसंक्रांत्यासमा
प्तायाममावास्याकत्वं चैत्रत्वमिति लक्षणाच्च मेषसंक्रांतेश्चैत्रत्वं प्रतीयते तथापि मेष
संक्रमे दर्शद्वये सति वैशाखस्यैवाधिक्यात् पूर्वभावित्वेन मीनस्यैव चैत्रत्वमुक्तं एवं मेषा
द्योर्वैशाखाद्याः अतो मीनसंक्रांत्यमध्यस्थपौर्णमासीकत्वं आद्यांत्यकत्वं वा चैत्रत्व
मिति लक्षणात् मीन एव सौरश्चैत्रः एवं वैशाखादयोपि मेषाद्या ज्ञेयाः ॥ अथ सौरमास
प्रसंगात्संक्रांतिनिर्णय उच्यते तत्र पूर्वतोपि परतोपि संक्रमात्पुण्यकालघटिकास्तु
षोडशेति सामान्यतः पुण्यकालः सर्वैरुक्तः विशेषस्तूच्यते अत्र मामकाः संग्रहश्लोकाः
प्रागूर्ध्वा दश पूर्वतः षडवनिलद्वत्पराः पूर्वतस्त्रिंशत्षोडश पूर्वतोथ परतः पूर्वाः परा-
स्तु दश पूर्वाः षोडश चोत्तरा ऋतुभुवः पश्चात्खवेदाः पुनः पूर्वाः षोडश चोत्तराः पुनरा
द्याः पुण्यास्तु मेषादितः ॥ अस्यार्थः ॥ मेषे प्रागूर्ध्वं च दश घटिकाः पुण्यकालः वृषे पू-
र्वाः षोडश मिथुने पराः षोडश कर्के पूर्वास्त्रिंशत् सिंहे पूर्वाः षोडश कन्यायां पराः षो
डश तुलायां प्राग् ध्वं दश वृश्चिके पूर्वाः षोडश धनुषि पराः षोडश मकरे चत्वारिं
शत्पराः इदं च हेमाद्रिमतेनोक्तं माधवमते त्वत्र परा विंशतिः पुण्याः कुंभे पूर्वाः षो
डश मीने पराः षोडशेति १२ याम्युत्तरापुण्यतमा मयोक्ता सायं भवेत्सा यदि सापि
पूर्वा पूर्वा तु योक्ता यदि सा विभाते साप्युत्तरा रात्रिनिषेधतः स्यात् अर्वाङ्निशीथा
द्यदि संक्रमः स्यात्पूर्वेन्हि पुण्यं परतः परेन्हि आसन्नयामद्वयमेव पुण्यं निशीथम
ध्ये तु दिनद्वयं स्यात् कर्कैणषेष्येवमिति ध्रुवा च हेमाद्रिसूरिश्च तथापरार्कः क्रमः प्र
दोषे यदि वार्द्धरात्रे परेन्हि पुण्यं त्वथ कर्कटस्य तु प्रभातकाले यदि वा निशीथे पूर्वे
न्हि पुण्यं त्विति माधवार्यः अत्र मूलवचनानि माधवापरार्कहेमाद्र्यादिषु द्रष्टव्या
नि सर्वासु संक्रांतिषु दानविशेषो हेमाद्रौ दानकांड उक्तः । विश्वामित्रः मेषसंक्रमणे
भानोर्मेषदानं महाफलं वृषसंक्रमणे दानं गवां प्रोक्तं तथैव च वस्त्रान्नपानदा
नानि मिथुने विहितानि तु घृतधेनुप्रदानं च कर्कटेपि विशिष्यते ससुवर्णं छत्र
दानं सिंहेपि विहितं तथा कन्याप्रवेशे वस्त्राणां वेश्मनां दानमेव च तुलाप्रवेशे
धान्यानां गोरसानामपीष्टं अन्नकीचलिते भानोर्दीपदानं महाफलं अन्नकीट

श्चिकः धनुःप्रवेशे वस्त्राणां यानानां च महाफलं गषप्रवेशे दारूणां दानमग्नेस्तथैव च कुं
भप्रवेशे दानं तु गवामंबु तृणस्य च मीनप्रवेशे स्नानानां मालानामपि चोत्तममिति अ
त्र उपवासमाह हेमाद्रौ वायत्लवः अयने विषुवे चैव त्रिरात्रोपोषितो नरः। स्नात्वायस्तु वेदे
द्रानुं सर्वकामफलं लभेत् असतो तु ट्टद्ध वसिष्ठः अयने संक्रमे चैव ग्रहणे चंद्रसूर्ययोः अ
होरात्रोषितः स्नात्वा सर्व पापैः प्रमुच्यते अत्रोपवासः संक्रांतिदिने दानादिं तु पुण्यकालदि
न इत्याचार्यचूडामणिः विधिलाघवात् पुण्यकालदिन एवोभयमिति दृष्टाः इदं च पुत्रिगृहस्था
तिरिक्तविषयम् आदित्येहनि संक्रांतौ ग्रहणे चंद्रसूर्ययोः उपवासो न कर्तव्यः पुत्रिणा गृहि
णा सदेति जैमिनिवचनात् अत्र श्राद्धमुक्तं हेमाद्रौ विष्णुधर्मे श्राद्धं संक्रमणे भानोः प्रशस्तं
पृथिवीपते अपरार्के विष्णुः आदित्यसंक्रमं चैव विषुवं चायनद्वयं जन्मभमभ्युदयश्च एतां
स्तु श्राद्धकालान्वैकाम्यानाह प्रजापतिरिति यदाहादशादिने र्वा गयनांशप्रवृत्तिर्भवति त
दा पुण्यं वक्तुमयनग्रहणं अन्यथा संक्रमेण सिद्धेरयनग्रहणमर्थं स्यादित्यपरार्कः हेमा
द्रावपि गालवः अयनांशकतुल्येन कालेनैव स्फुटं भवेत् मृगकर्कादिगे सूर्ये याम्योदगय
ने सति तदा संक्रांतिकाले तु रुक्ता विष्णुपदादयः इति अयनांशकच्युतिस्पष्टे संक्रांतिका
लेपि तत्प्रयुक्तं पुण्यकालादि ज्ञेयमिति स एव व्याचख्यौ तच्च मेषायनं वृषायनमित्यादि स
र्वत्र ज्ञेयं माधवीयेपि जाबालिः संक्रांतिषु यथाकालस्तदीयेष्वयने तथा अयने विंश
तिः पूर्वा मकरे विंशतिः परा इति मकरायणे पूर्वा विंशघटिकाः पुण्याः मकरसंक्रांतौ
तु पश्चाद् विंशतिः पुण्याः अन्यत्रायनेनान्तसंक्रांतिवत् विष्णुपदादयः प्रवर्तन्ते तेन तत्प्र।
युक्तं पुण्यकालादि तत्रापि ज्ञेयमिति स एव व्याचख्यौ विष्णुपदादि स्वरूपं दीपिकायामु
क्तं हर्य्यंघ्रिर्वृषसिंहवृश्चिकघटेष्वर्कस्य यः संक्रमः कन्यामीनधनुर्नृयुक्षु षडशीत्यास्यं तु
लामेषयोः प्रोक्तं तद्विषुवं गृषेऽयनमृगमुदक्कीटके दक्षिणमिति। हर्यंघ्रिर्विष्णुपदं नृयु
ग्मिथुनम्॥ अत्र च पिंडरहितं श्राद्धं कुर्यात् तथा चापरार्के मात्स्ये अयनद्वितये श्राद्धं
विषुवद्वितयेन तथा संक्रांतिषु च सर्वासु पिंडनिर्वपणाद्दृतेइति श्राद्धशूलपाणिस्त्वस्य
निर्मूलत्वात्समूलत्वेऽपि। ततः प्रभृतिसंक्रांतावुपरागादिपर्वसु त्रिपिंडमाचरेच्छ्रा
द्धमेकोद्दिष्टं मृताहनीति मात्स्योक्तग्रहणग्रहणवद्विकल्पइत्याह तन्न असप्रा
णानुवादकत्वेन पिंडाविधायकत्वात् पिंडोक्तिः अन्यथैकपदे पिंडानुवादत्वित्व वि
धौ च मट्टकर्त्तुः प्रथमभक्षवद्देरप्यापत्तेः मंगलकृत्येषु विशेषमाह ज्योतिर्निबंधे ना
रदः त्याज्याः सूर्यस्य संक्रांतेः पूर्वतः परतस्तथा विवाहादिषु कार्येषु नाड्यः षोडश
षोडश एतत्पुण्यकालोपलक्षणं भानोः संक्रांतिभोगश्च कुलिकश्चार्द्धयामकः इ
ति ज्योतिःप्रकाशे वर्ज्येषु परिगणनात् अयनव्यतिरिक्तासु दशसु संक्रांतिषु रात्रौ
स्नानश्राद्धादि न कार्यम्। अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितं॥ रात्रौ संक्रमणे
भानोर्दिनार्द्धं स्नानदानयोः॥ अर्द्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया। ऊर्ध्वं

संक्रमणेचोर्द्धमुदयात्प्रहरद्वयं॥पूर्णेचेदर्द्धरात्रेतुयदासंक्रमतेरविः।प्राहुर्दिनद्वयंपु°
ण्यंमुक्त्वामकरकर्कटाविति॥इद्वसिष्ठादिवचनैरहःपुण्यत्वोक्त्या॥रात्रौसंक्रमणेभा
नोर्दिवाकुर्यात्तुतत्क्रियाः।सर्वस्मात्परतोवापिप्रत्यासन्नस्यतत्फलमितिवसिष्ठवच
नाचार्याद्रात्रौस्नानादिनिषेधप्रतीतेः।यानितु।विवाहव्रतसंक्रांतिप्रतिष्ठाऋतुजन्म
सु।तथोपरागयात्रादौस्नानेदानेनिशाशुभेति॥राहुदर्शनसंक्रांतिविवाहात्ययवृ
द्धिषु॥स्नानदानादिकंकुर्युर्निशिकाम्यव्रतेषुचेत्यादीनि।विष्णुगोभिलादिवचनानि
तानिमकरकर्कसंक्रांतिविषयाणिमुक्त्वामकरकर्कटाविति॥तयोर्दिवानुष्ठानस्य
पर्युदस्तत्वादिति।हेमाद्रिमाधवादयः॥वस्तुतस्तुप्रागुक्तवचने।तयोर्दिनद्वयपुण्य
त्वादेरेव।पर्युदासान्मकरकर्कटयोरपिस्नानंदानंपरेऽह्नीत्यादिभिरहःपुण्यत्वो
क्तेः।अहःपुण्यत्वानुपपत्त्याकल्प्यरात्रिनिषेधस्यच।प्रत्यक्षरात्रिविधिनाबाधात्स
र्वसंक्रांतिषु॥रात्रावनुष्ठानविकल्पःसचदेशाचाराद्व्यवतिष्ठत॥इतियुक्तःपंथाः॥
अयनयोस्तुवक्तव्योविशेषश्रावणेमाघेचवक्ष्यते॥ज्योतिर्निबंधेगर्ग्गः।यस्यजन्म
र्क्षमासाद्यरविसंक्रमणंभवेत्॥तन्मासाभ्यंतरेतस्यवैरक्लेशधनक्षयाः॥नगरस
रोरुहपत्रैरजनीसिद्धार्थलोध्रसंयुक्तैः॥स्नानंजन्मर्क्षगतेरविसंक्रांतिपक्षिणीज्ञे
यादानाध्ययनकर्मसु॥यत्तुगौडाः॥संक्रांत्यांपक्षयोरंतेद्वादश्यांश्राद्धवासरे॥सा
यंसंध्यांनकुर्वीतकुर्वंश्चपितृहाभवेदितिकर्मोपदेशिन्यांव्यासोक्तेः॥सायंपुण्यका
लेसंध्यानिषेधमाहुस्तन्निर्मूलं॥अन्यच्चबहुवक्तव्यंविस्तरभीतेर्नोच्यते॥इतिसंक्रां
तिनिर्णयः॥°पक्षयुगजश्चांद्रोमासः॥सद्वेधा॥शुक्लादिरमांतः।कृष्णादिःपूर्णिमां
तश्च॥तथाचत्रिकांडमंडनः।चांद्रोपिशुक्लपक्षादिःकृष्णादिर्वेतिचद्विधेत्युक्त्वादेश
भेदेनतद्व्यवस्थामाह॥कृष्णपक्षादिकंमासंनांगीकुर्वंतिकेचन।येपीछंतिनतेषा
मपीष्टोविंध्यस्यदक्षिणइति।विंध्यदक्षिणेकृष्णादिनिषेधादुत्तरतोद्वयोरभ्यनु°
ज्ञागम्यते।तत्रापिशुक्लादिर्मुख्यःकृष्णादिर्गौणः।शास्त्रेषुचैत्रशुक्लप्रतिपद्येव।
चांद्रसंवत्सरारंभोक्तेः॥तदुक्तंदीपिकायां॥चांद्रोब्दोमधुशुक्लगप्रतिपदारंभइति
॥नहियेकृष्णादिमन्यंतेतेषांवत्सरारंभोभिद्यते।अतःशुक्लादिर्मुख्यः।कृष्णादिना
मलमासासंभवाच्च॥चंद्रस्यसर्वनक्षत्रभोगेननाक्षत्रोमासः।सावनादीनांव्यव
स्थोक्ताहेमाद्रौब्रह्मसिद्धांते।अमावास्यापरिच्छिन्नोमासःस्याद्ब्राह्मणस्यतु।सं°
क्रांतिपौर्णमासीभ्यांतथैवनृपवैश्ययोः।अत्रब्राह्मणादीनांवचनांतरेणयत्रक
र्मविषये॥वसंतेब्राह्मणोग्नीनादधीतेत्यादिवन्मासउक्तस्तत्रदर्शांतत्वमात्रंनि
यम्यते।नतुसर्वकर्मसुदर्शांतएवेति।इष्ट्याद्यर्थसोमेरेहीयादिनिधननियमव
द्धिलाघवात्॥त्रैवर्णिकानांसर्वकर्मसुमासविशेषविधेस्सावनादीनांशूद्रा
नुलोमादिपरत्वायतेश्चेतिगुरुचरणाः॥ज्योतिर्गर्गः।सौरोमासोविवाहादौय

त्रादौ सावनस्मृतः॥ आब्दिके पितृकार्ये च चांद्रो मासः प्रशस्यते॥ ऋष्यशृंगः॥ विवाहव्रतय
ज्ञेषु सौरं मानं प्रशस्यते। पार्वणेत्वष्टकाश्राद्धे चांद्रमिष्टं तथाब्दिके। स्मृत्यंतरे॥ एकोद्दिष्टवि
वाहादावृणादौ सौरसावनौ॥ ज्योतिर्निर्णये॥ आयुर्दायविभागश्च प्रायश्चित्तक्रियातथा। साव
नेनैव कर्तव्या शत्रूणां चाप्युपासना॥ विष्णुधर्मे। नक्षत्रसत्रायणयनानि चांद्रो मासेन कुर्या
द्गणात्मकेनेति॥ ब्राह्मे॥ तिथिकृत्ये च कृष्णादिं व्रते शुक्लादिमेव च॥ विवाहादौ च सौरादिं म
संकल्पे विनिर्दिशेत्॥ अथ मलमासः॥ तत्रैकमात्रसंक्रांतिरहितः सितादिश्चांद्रो मासो मल
मासः। एकसंक्रांतिराहित्यमसंक्रांतत्वेन संक्रांतिद्वयवत्वेन च भवति॥ मलमासो द्विधा॥ अ
धिमासः क्षयमासश्चेति तदुक्तं काठकगृह्ये॥ यस्मिन्मासे न संक्रांतिः संक्रांतिद्वयमेव वा॥ म
लमासः स विज्ञेयो मासः स्यात्तु त्रयोदशेति। सत्यव्रतोपि॥ राशिद्वयं यत्र मासे संक्रमेत दिवा
करः॥ नाऽधिमासो भवेदेष मलमासस्तु केवलमिति॥ अधिकमासस्य कालनियममाह॥
वशिष्ठः॥ द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा॥ घटिकानां चतुष्केण पतत्यधिकमा
सकः इति॥ एतच्च सावनादिमानेन संभवार्थं॥ न तु नियमार्थं॥ अन्यथा षोडशनाधिकद्वा
त्रिंशन्मासानंतरं कृष्णपक्षनियमेन शुक्लादित्वभंगापत्तेः॥ तेन न्यूनाधिककालेमलमास
पातेपि न दोषः। अत एवोक्तं माधवीये। मासैस्त्रिंशतमेभवेदिति॥ क्षयस्यापि ज्योतिःशास्त्रे॥
असंक्रांतिमासो ऽधिमासः स्फुटः स्याद्द्विसंक्रांतिमासः क्षयाख्यः कदाचित्॥ क्षयः कार्तिकादि
त्रये नान्यतः स्यात्तदा वर्षमध्ये ऽधिमासद्वयं च॥ एकः क्षयात्पूर्वपरतश्चैकः इत्यधिमासद्वयं
भवतीद्वयं भवतीत्यर्थः॥ अत्र विशेषमाह॥ जाबालिः॥ मासद्वयेऽब्दमध्ये तु संक्रां
तिर्न यदा भवेत्। प्राकृतस्तत्र पूर्वः स्यादधिमासस्तथोत्तर इति॥ उत्तर एव कालाधिक्येन पूर्व
स्मिन्नित्यर्थः। यत्तु ब्रह्मसिद्धांते॥ चैत्रादर्वाङ्नाधिमासः परतस्त्वधिको भवेदिति॥ तत्र चैत्रा
त्पूर्वमसंक्रांतिद्वये पूर्वो नाधिकः किंतु पर इत्यर्थः। यच्च ज्योतिःसिद्धांते॥ षट्कमागते सूर्ये वृ
श्चिके वाथ धन्विनि। मकरे वाथ कुंभे वा नाधिमासो विधीयत इति॥ तद्वृश्चिकादिचतुष्टये
मलमासे सति पूर्वं तुलाकन्यागते सूर्ये स्यात्पूर्वभाव्यधिमासस्य कालाधिक्यमात्रनिषे
धार्थं न त्वधिकमात्रस्य॥ दशानां फाल्गुनादीनां प्रायो माघस्य च क्वचित्। नपुंसकत्वं भ
वतीत्येष शास्त्रविनिश्चयः॥ इति हेमाद्रौ॥ विष्णुधर्मविरोधात्। मलमासेऽष्टकादिनि
षेधानुपपत्तेश्च॥ मकरे वाथ कुंभे चेति दृष्टांतार्थं प्राप्त्यभावात्॰ क्षयस्यागमनकाल
उक्तः सिद्धांतशिरोमणौ॥ गतोऽब्ध्यद्रिनंदैर्मिते शाककाले तिथीशैर्भविष्यत्यथांगा
क्षसूर्यैः॥ गजाद्र्यग्निभूभिस्तथा प्रायशोयं कुवेदेंदुवर्षैः क्वचिद्गोकुभिश्चेति॥ अब्ध
यश्चत्वारः॥ अद्रयः सप्त॥ नंदाः नव। एषां प्रातिलोम्येन पाते॥ ९७४ मिते वर्षे कश्चि
त्क्षयमासः पूर्वं जात इत्यर्थः॥ तिथयः पंचदश ईशा एकादश अंके॥ ११५ एवं मिते
पाते कश्चिद्भविष्यतीत्यर्थः॥ अंगा ६॥ अक्ष ५॥ सूर्याः १२॥ एकत्र १२५६॥ गजाः ८ अ
द्रयः ७॥ अग्निः ३॥ भूः १॥ एकत्र॥ १३७८॥ कुः १॥ वेदः ४॥ इंदुः १॥ एकत्र॥ १४१॥ गावः

१॥कु॰१॥एकत्र॥११॥एतै
र्यन्निरूप्यते॥तत्र जाबालिः॥नित्यं नैमित्तिकं कुर्यात्श्राद्धं कुर्यान्मलिम्लुचे।
तारीकं काम्यन्नैव कदाचन॥अयं च काम्यनिषेध आरंभसमाप्तिविषयः।
येमासान्तेषु मसमस्ततः॥व्रतानां चैव यज्ञानामारंभश्च समापनमिति॥तेनैवोक्तत्वा
त्॥असूर्याः अधिकमासा इत्यर्थः॥तत्र मंडलं तपते रवेरिति वचनात्॥कारीर्यादे
स्यप्यनारंभसमाप्तौ भवत एवेत्यादिरन्यत्र विस्तरः॥काठकगृह्येऽपि॥मलेऽनन्यगतिं
कुर्यान्नित्यं नैमित्तिकीं क्रियामिति॥तानि नैमित्तिकानि दीपिकायामुक्तानि॥यन्नैमि
त्तिकमग्निनष्टानुगतान्याधानमपि सुवासंस्कारादि विलोपने सति पुनः प्रोक्तं प्रतिष्ठा
दिकमिति॥गत्यंतरयुतं तु सोमादिहेयमेव॥तत्र कर्तव्यान्युक्तानि कालादर्शे॥द्वाद
शः सपिंडांतकर्म ग्रहणाजन्मनोः॥सीमंते पुंसवे श्राद्धं द्वावेतो जातकर्म च॥रोगे शांतिर
लभ्ये च योगे श्राद्धं व्रतानि च॥प्रायश्चित्तनिमित्तस्य वशात्सर्वे परत्र च॥अब्दोदकुंभम
न्वादि महालययुगादिषु॥श्राद्धं दर्श्यप्यहरहः श्राद्धं मूनादिमासिकं॥मलिम्लुचाप्यमा
॥श्राद्धं तु सर्वदृष्टेषु तीर्थेष्वेवं युगादिषु॥मन्वादिषु च दान
भूहिरण्यानां संध्योपासनयोः क्रिया॥पर्वहोमश्चाग्रयणांसाग्ने
श्विश्वपर्वणि॥नित्याग्निहोत्रहोमश्च देवतातिथिपूजनं॥स्नानं च स्नानवि
पेयवर्ज्जनं॥तर्पणं च निमित्तस्य नित्यत्वादुभयत्र चेति॥एतौ पुंसवनसीमंतौ॥एतच्च ग
र्भाधानाद्यन्नप्राशनांतसंस्कारोपलक्षणं॥तदुक्तं दीपिकायां॥गर्भाधानमुखं च
विधि
योश्वपित्र्यमधिके मास्येव माघाचरेदिति॥अलभ्ये योगे अर्द्धोदयपद्मकादौ काम्यान्य
पिव्रतादीनि कार्याणीत्यर्थः॥सर्वे परत्र मले शुद्धे चेत्यर्थः॥महालयशब्देन मघात्रयो
दश्युच्यत इति माधवः॥दर्शश्राद्धं मलेऽपि कार्यं॥यत्तु ऋष्यशृंगः॥संवत्सरातिरेको मा
सोयः स्यान्मलिम्लुचे॥तस्मिंस्त्रयोदशश्राद्धं न कुर्यादिंदुसंक्षय इति॥तत्काम्यदर्शश्रा
द्धविषयं॥काम्यन्नैव कदाचनेति वचनात्॥दर्शे च काम्यं श्राद्धं कर्मा चेदिनश्चेत्यादि।
नायाज्ञवल्क्येनोक्तं॥नित्यं तु मलेऽपि भवत्येव॥दर्श्यप्यहरहः श्राद्धं दानं च प्रतिवास
रं॥गोभूतिलहिरण्यानां मासेऽपि स्यान्मलिम्लुच इति मात्स्योक्तेरिति॥हेमाद्र्याद
यः॥दिवोदासीयेऽपि॥अनिंदुरिंदुक्षयश्च हरिवारोबुधाष्टमी॥नाधिमासे परित्या
ज्याः सीमंतान्नाशने शिशोरिति॥अनिंदुर्दर्शः॥द्विविधमप्यमाश्राद्धं न कार्यमिति
त्वपरार्कः॥तत्रयद्विहितं कर्म उत्तरे मासि कारयेदित्युक्तेः॥षष्ट्यां तु दिवसैरिति॥शु
द्धमासकरणेऽपि शास्त्रार्थोपपत्तेर्दर्शश्राद्धं मलेन कार्यमिति प्राचीनगौडाः॥शूलपा
णिश्च संवत्सरप्रदीपेऽपि॥एकराशिस्थिते सूर्ये यदा दर्शद्वयं भवेत्॥दर्शश्राद्धं तदा
दौ स्यान्नपरत्र मलिम्लुचे॥अत्रापि प्राग्वद्व्यवस्था॥यद्यपि कालादर्शे सर्वदा॥र्धिकं

मलमासेद्वितीयाद्याब्दिकंतुशुद्धमासएवकार्यं॥असंक्रांतेपिकर्तव्यमाब्दिकंप्रथमंद्वि
जैः॥तथैवमासिकंश्राद्धंसपिंडीकरणंतथेति।हारीतोक्तेः॥आब्दिकंप्रथमंयत्स्यात्तत्कु
र्वीतमलिम्लुचे।चतुर्दशेतुसंप्राप्तेकुर्वीतपुनराब्दिकमितिस्मृत्यंतरोक्तेश्च।पुनराब्दिकं
द्वितीयादिवार्षिकं।त्रयोदशेमासेऽतीतेचतुर्दशाद्यदिनेकुर्यादित्यर्थः।यत्तुसत्यव्रतः
वर्षेवर्षेतुयच्छ्राद्धंमातापित्रोर्मृतेहनि॥मलमासेनतत्कार्यंव्याघ्रस्यवचनंयथेति॥त
द्वितीयादिवार्षिकविषयं।आब्दिकंप्रथमंयत्स्यात्तत्कुर्वीतमलिम्लुचइति।पूर्वोक्त
वचनात्॥यत्रद्वादशमासिकंशुद्धमासेभवतितत्रत्रयोदशेऽधिकएवाब्दिकंकार्यं॥
यत्रत्वधिकमध्येद्वादशमासिकंतत्रतस्याब्दिकाद्दिनत्वाच्चतुर्दशेशुद्धएवप्रथमा।
ब्दिकमितिनिष्कर्षः॥तेनद्वितीयादिशुद्धमासएव॥पृथ्वीचंद्रोदये।दिवोदासीयेमद
नपारिजातेचैवं॥मलमासमृतानांतुयदासएवाधिकस्तदातत्रैवकार्य्यं।यदाह पै
ठीनसिः॥मलमासेमृतानांतुश्राद्धंयत्प्रतिवत्सरं॥मलमासेपिकर्तव्यंनान्येषांतुकथं
चनेति॥यत्तुवृद्धवशिष्ठः॥आब्दीयाहनिसंप्राप्तेअधिमासोभवेद्यदि॥मासद्वयेपिकुर्वीत
श्राद्धमेवंत्वमुद्यतीति॥यच्चव्यासः॥उत्तरेदेवकार्य्याणिपितृकार्याणिचोभयोरिति॥
तन्मासिकादिविषयं॥योगाद्दिकंमासिकंचश्राद्धंचापरपक्षिकं॥मन्वादिकंतैर्थिकंच
कुर्यान्मासद्वयेपिचेतिस्मृतिचंद्रिकोक्तेः॥तैर्थिकंतीर्थश्राद्धं।तच्चमासद्वयेपिकार्यमि
तित्रिस्थलीसेतौभट्टाः॥केचित्तु॥प्रतिमासंमृताहेचश्राद्धंयत्प्रतिवत्सरं॥मन्वादौचयु
गादौचतन्मासोरुभयोरपीतिमरीचिवचनात्॥वर्षेवर्षेतुयच्छ्राद्धंमातापित्रोर्मृतेह
नि॥मासद्वयेपितत्कुर्याद्व्याघ्रस्यवचनंयथेतिगालवोक्तेश्च।प्रत्याब्दिकंमासद्वयेकार्य।
मित्याहुस्तन्तुच्छं॥प्रतिमासेमृताहेक्रियमाणंमासिकं।प्रतिसंवत्सरं क्रियमाणंकल्पा
दिश्राद्धमितिमरीचिवचसोमदनरत्नेव्याख्यानात्॥गालवीयस्यचमासद्वयात्मकेक्ष
यमासइतिमाधवेनव्याख्यानात्यच्चकैश्चिदुक्तं॥प्रथमाब्दिकंमासद्वयेकार्यं।आब्दिकं
प्रथमंयत्स्यात्तत्कुर्वीतमलिम्लुचे॥त्रयोदशेचसंप्राप्तेकुर्वीतपुनराब्दिकमितियमोक्ते
रिति॥तदपिचिंत्यं॥पुनराब्दिकंद्वितीयादिवार्षिकंत्रयोदशेतीतेचतुर्दशेकुर्य्यात्।अ
न्यथासांवत्सरंनवर्द्धेतश्राद्धंतत्रमृतेहनीतिपैठीनसिविरोधस्यादितिहेमाद्रौपृथ्वीचं
द्रोदयेच।एतेनतवर्धेतनच्छिद्याच्छुद्धेपिकुर्यादेवेत्यनंतभट्टव्याख्यामानाभावात्परा
स्ता॥पूर्वव्याख्यायांतुहारीतीयेप्रथमग्रहणमेवमानं॥यदपिनिर्णयामृतेपूर्वोक्तकाº
लादर्शवचनान्मलमासेश्राद्धदिनस्यवंध्यत्वनिरासार्थंपित्रुद्देशेनब्राह्मणान्भोजयित्वा
शुद्धमासेसपिंडकंश्राद्धंकुर्यात्॥पिंडवर्ज्जमसंक्रांतेसंक्रांतेपिंडसंयुतं॥प्रतिसंवत्सरं।
श्राद्धमेवंमासद्वयेपिचेति॥वृद्धपराशरोक्तेरिति॥तदपिचिंत्यंपूर्वोक्तवचनस्यक्षयपूर्व
भाव्यधिकमासविषयत्वात्॥तत्रहिमासद्वयश्राद्धमुक्तंतदाह सत्यतपाः॥एकएवस
दामाससंक्रांतिद्वयसंयुतः॥मासद्वयगतंश्राद्धंमलमासेपिशस्यतइतिमासद्वयगतंपूर्वासं

क्रांतगतंक्षयगतंच॥मलमासेक्षयमासे॥अधिशब्दात्तत्पूर्वाधिमासेचेतिहेमाद्रिः॥दीपि
कापि॥तस्मात्संस्यधिमासकोयदिभवेत्तत्रत्संवत्सरंतस्मिंश्चुद्रतयाक्षयेचवचनात्कुर्य्या
द्वयोःकोविदइति॥कालादर्शेप्येतद्विषयएवेत्यलंबहुना॥मलमासवर्ज्यान्युक्तानिकाला
दर्शे॥अनित्यमनिमित्तंचदानंचमहदादिकं॥अग्न्याधानाध्वराःसर्वतीर्थयात्रामरेक्षणम्
॥देवारामतडागादिप्रतिष्ठामौंजिबंधनं॥आश्रमस्वीकृतिःकाम्यवृषोत्सर्गश्चनिष्क्रमः॥
राज्याभिषेकःप्रथमश्चूडाकर्म्मव्रतानिच॥अन्नप्राशनमारंभोगृहाणांचप्रवेशनं॥स्ना
नंविवाहोनामानियज्ञेदेवीमहोत्सवः॥व्रतारंभसमाप्तीचकर्मकाम्यंचपावनं॥प्राय
श्चित्तंतुसर्वंस्यमलमासेविवर्ज्जयेत्॥उपाकर्मोत्सर्ज्जनंचपवित्रदमनार्पणं॥अवरोह
श्चहेमंतःसर्पाणांबलिरष्टका॥ईशानस्यबलिर्विष्णोःशयनंपरिवर्त्तनं॥दुर्गेंद्रस्थाप
नोत्थानेध्वजोत्थानंचवज्रिणः॥श्वश्रूप्रतिपिविद्धानियरत्नाप्याचदैविकमिति॥अत्रमू
लवचनानिहेमाद्रिमाधवादिभ्योज्ञेयानिदिवोदासीयेऽपि॥यात्रोत्सवंचदेवादिसपर्यं
दिव्यमेवच॥मलमासेनकुर्वीतव्यासस्यवचनंयथेति॥अयंनिर्णयःक्षयमासेपिज्ञेयः
रविसंक्रमहीनेयोवर्ज्यावर्ज्यविधिःस्मृतः॥सएवद्विसंक्रांतेमलमासेप्युदी रित
इति॥काठकगृह्योक्तेःक्षयमासेमृतानांप्रत्याब्दिकेविशेषोहेमाद्रौ॥तिथ्यर्द्धेप्रथमेपू
र्वोद्वितीयेर्द्धेतथोत्तरः॥मासाविति बुधैश्चिंत्यौक्षयमासस्यमध्यगौ॥आब्दिकवद्दीपने
पिज्ञेयं॥यन्मलमासेवर्ज्यमुक्तंतच्छुक्रगुर्वोरस्तादिष्वपिज्ञेयंतदाहबृहस्पतिः॥बा
लेवायदिवावृद्धेशुक्रेवास्तंगतेगुरौ॥मलमासइवैतानिवर्ज्जयेद्देवदर्शनमिति॥अना
दिदेवतान्दृष्ट्वाऽशुचःस्युर्नष्टभार्गवे॥मलमासेप्यनावृत्ततीर्थयात्रांविवर्ज्जयेत्॥
आवृत्ततीर्थेदोषाभावमात्रंनतुफलमिति वाचस्पतिमिश्राः॥तन्न॥असतिबाधके
फलहेत्वाक्षतेः॥लल्लोपि॥नीचस्थेवक्रसंस्थेप्यतिचरणगतेबालवृद्धास्तगेवा
।संन्यासोदेवयात्राव्रतनियमविधिःकर्णवेधस्तुदीक्षा॥मौंजीबंधोंगनानांपरि
णयनविधिर्वास्तुदेवप्रतिष्ठा॥वर्ज्याःसद्भिःप्रयत्नात्त्रिदशपतिगुरौसिंहराशि॰
स्थितेचेति॥दीक्षायागदीक्षा॥आगमदीक्षाच॥तथा॥उद्यानचूडाव्रतबंधदीक्षा
विवाहयात्राचवधूप्रवेशः॥तडागकूपत्रिदशप्रतिष्ठाबृहस्पतौसिंहगतेनकु॰
र्यात्॥दिवोदासीये॥गुर्वादित्येगुरौसिंहेनष्टेशुक्रेमलिम्लुचे॥गृहकर्मव्रतंया
त्रांमनसापिनचिंतयेत्॥अस्यापवादःतत्रैवब्राह्मे॥मुंडनंचोपवासंचगोत॰
म्यांसिंहगेगुरौ॥कन्यागतेतुकृष्णायांनतुतत्तीरवासिनांतथा॥आपगासागोतमी
गंगाद्वितीयाजाह्नवीस्मृता॥सर्वतीर्थफलंस्नानाद्गौतम्यांसिंहगेगुरौ॥संहिता
प्रदीपे॥स्यात्समरात्रंगुरुशुक्रयोश्चबालत्वमन्ह्नांदशकंचवार्द्ध्ये॥वृद्धौसितेज्या
वशुभौषिशुत्वेशस्तौयतस्तावुपचीयमानाविति॥वशिष्ठः॥अतिचारगतेजी
वेवर्ज्जयेत्तदनंतरं॥व्रतोद्वाहादिकार्येषुअष्टाविंशतिवासरान्।बाल्यादिलक्षण

मुक्तं ब्रह्मसिद्धांते ॥ रविणासंनिरन्येषां ग्रहाणामस्त उच्यते ॥ ततो वाप्यार्द्धकं प्रोक्तमूर्ध्वं बा
लं प्रकीर्त्तितमिति ॥ वाल्मादिपरिमाणं च वृत्तशते बालः शुक्रो दिवसदशकं पंचकं चैव वृद्धः
पश्चादन्हां त्रितयमुदितः पक्षमेवं प्राक्क्रमेण ॥ जीवो वृद्धः शिशुरपि तथा पक्षमन्ये: शिशूर
तौ वृद्धौ प्रोक्तौ दिवसदशकं चापरे सप्तरात्रं ॥ पश्चिमतः उदये दश दिनानि ॥ बालः अ
स्ते पंच दिनानि वृद्धः सर्वतो दिनत्रयं बालः पक्षं च वृद्ध इत्यर्थः ॥ जीवो गुरुः ॥ अन्यत्र त्व
न्यथोक्तं ॥ प्राक्पश्चादुदितः शुक्रः पंचसप्त दिनं शिशुः ॥ विपरीतं तु वृद्धत्वं तद्वद्देवगुरोर
पीति एषां पक्षाणां व्यवस्थामाह मिहिरः ॥ वहवो दर्शिताः काला ये बाल्ये वार्द्धके पि वा
ग्राह्यास्तत्राधिकाः शेषा देशभेदादुतापदीति ॥ देशभेदं च मदनरत्ने गार्ग्यः शुक्रो गुरुः प्रा
क्परां कृत्वबालो विंध्ये दशाऽवंतिषु सप्तरात्रं ॥ वंगेषु हूणेषु च षट् च पंच शेषेषु देशे त्रिदि
नं वदंतीति ॥ अस्यापवादः ॥ काशीखंडे ॥ नग्रहास्तोदयकृतो दोषो विश्वेश्वरालये
त्रिस्थलीसेतौ ॥ वायवीये ॥ गोदावर्यां गयायां च श्रीशैले ग्रहणद्वये ॥ सुरासुरगुरूणां च
मोस्तदोषो न विद्यते ॥ ग्रहणद्वये तन्निमित्तककुरुक्षेत्रयात्रादानादावित्यर्थः ॥ तद्दाहत्रि
स्थलीसेतौ लक्ष्य ॥ उपप्लवे शीतलभानुभान्वोरर्द्धोदये वैकपिलाख्यषष्ठ्यां ॥ सुरासुरेज्यास्तम
येपि तीर्थयात्राविधिसंक्रमणे च शस्तः ॥ इत्यलं वहुना ॥ मलमासे व्रतविशेषउक्तो हेमाद्रौ
पाद्मे ॥ अधिमासे तु संप्राप्ते त्रयस्त्रिंशत्तु देवताः ॥ उद्दिश्यापूपदानेन पृथ्वीदानफलं लभेत् ॥
अधिमासे तु संप्राप्ते गुडसर्पिर्युतानि च ॥ त्रयस्त्रिंशदपूपानि दातव्यानि दिने दिने ॥ साज्या
नि गुडमिश्राणि अधिमासे नृपोत्तम ॥ त्रयस्त्रिंशदपूपान्नं कांस्यपात्रे निधाय च ॥ सघृतं च
हिरण्यं च ब्राह्मणाय निवेदयेत् ॥ विष्णुरूपी सहस्रांशुः सर्वपापप्रणाशनः ॥ अपूपान्नप्र
दानेन मम पापं व्यपोहतु ॥ नारायण जगद्वीज भास्कर प्रतिरूपक ॥ व्रतेनानेन पुत्रांश्च संप
द्वापि वर्द्धय ॥ यस्य हस्ते गदाचक्रे गरुडो यस्य वाहनं ॥ शंखः करतले यस्य स मे विष्णुः प्रसी
दतु ॥ कलाकाष्ठादिरूपेण निमेषघटिकादिना ॥ यो वंचयति भूतानि तस्मै कालात्मने नमः
कुरुक्षेत्रमयं देशः कालः पर्व द्विजो हरिः ॥ पृथ्वीसममिदं दानं गृहाण पुरुषोत्तम ॥ मलानां
च विशुद्ध्यर्थं पापप्रशमनाय च ॥ पुत्रपौत्राभिवृद्ध्यर्थं तव दास्यामि भास्कर ॥ मंत्रेणानेन यो
दद्यात्त्रयस्त्रिंशदपूपकान् ॥ प्राप्नोति विपुलां लक्ष्मीं पुत्रपौत्रादिसंपद इति ॥ इति मीमांस
ककमलाकरभट्टकृते मासमलमासक्षयमासनिर्णयः ॥ पक्षनिर्णयस्तु ॥ दैवे मुख्यः
शुक्लपक्षः कृष्णः पित्र्ये विशिष्यत इति माधवेनोक्तः ॥ अथ तिथिनिर्णयः ॥ तत्र तिथिर्द्वि
धा ॥ शुद्धा विद्धा च ॥ वेधरहिता शुद्धा ॥ तत्सहिता विद्धा ॥ तत्र शुद्धायामसंदेहाद्विद्धा निर्णी
यते ॥ तत्र सामान्यतो वेधमाह माधवीये पैठीनसिः ॥ पक्षद्वये पि तिथयस्तिथिं पूर्वां तथो
त्तरां ॥ त्रिभिर्मुहूर्त्तैर्विध्यंति सामान्योयं विधिः स्मृत इति ॥ हेमाद्रिमदनरत्नादौ तु द्विमुहूर्त्तो
प्युक्तः ॥ उदितेदैवतं भानौ पित्र्यमस्तमिते रवौ ॥ द्विमुहूर्त्तं त्रिरन्हश्च सा तिथिर्हव्यकव्ययो
रिति विष्णुधर्मोक्तेः ॥ द्विमुहूर्त्तत्वं चानुकल्पः ॥ द्विमुहूर्त्तापि कर्त्तव्या या तिथिर्वृद्धिगामिनी

ति॥ दक्षिणापि शाट्योक्तेः अयं वेधः प्रातरेव सायं तु त्रिमुहूर्त्तवेध एव॥ यां तिथिं समनुप्राप्य या
त्यस्तं पद्मिनीपतिः॥ सा तिथिस्तद्दिने प्रोक्ता त्रिमुहूर्त्तैव या भवेदिति स्कांदोक्तेः॥ दीपिकापि॥
त्रिमुहूर्त्तगा तु सकला सायमिति॥ या तिथिः॥ व्रतोपवासस्नानादौ घटिकैकाऽपि या भवेत्॥
उदये सा तिथिर्ग्राह्या विपरीता तु पैतृके॥ इत्यादीनि स्कांदादिवचनानि तानि॥ वैखानसाधि
करणन्यायेनाऽव्यवस्थात्वात्त्रिमुहूर्त्तप्रशंसापराणि॥ तिथिविशेषे वेधविशेषः स्कांदे।
नागो द्वादशनाडीभिर्दिक् पंचदशभिस्तथा॥ भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथि
मिति॥ अयं चोपवासातिरिक्तविषय इति॥ वक्ष्यते॥ इति वेधः॥ तत्र सर्वा तिथिर्यद्दहः क
र्मकालव्यापिनी सैव ग्राह्या कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः॥ तया कर्मा
णि कुर्वीत ह्रासवृद्धी न कारणमिति विष्णुधर्मोक्तेः॥ दिनद्वये तद्व्याप्तावेकदेशव्याप्तौ वा यु
ग्मवाक्यान्निर्णयः॥ तस्य पूर्वबाधेनोपपत्तेः॥ कर्मकालस्य प्रधानत्वाच्च युग्मवाक्यं तु नि
गमः॥ युग्माग्नियुगभूतानां षण्मुन्योर्वसुरंध्रयोः॥ रुद्रेण द्वादशी युक्ता चतुर्दश्यां च पू
र्णिमा॥ प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं महाफलं॥ एतद्व्यस्तं महादोषं हंति पुण्यं पुराकृ
तमिति॥ अत्र रंध्रांताः शब्दा द्वितीयादिनवम्यंततिथिवाचकाः॥ रुद्र एकादशी॥ द्वितीया
तृतीयायुता सा च द्वितीयायुतेति सप्त युग्मानीत्यर्थः॥ इदं च शुक्लपक्षे अमाप्रतिपद्युग्म
स्य पूर्णिमाया अत्रैव सत्वात्॥ इति केचित्॥ तत्त्वं त्वमाप्रतिपद्युग्मात् कृष्णपक्षलिं
गात्॥ पक्षद्वयपरमिदं तत्र हि शेषवाक्यैः कृष्णे तिथिविशेषेऽपोद्यत इति॥ दशमीत्युक्ता पुराण
समुच्चये॥ संपूर्णा दशमी कार्या मिश्रिता पूर्वयाथवेति॥ संपूर्णा शुक्लपक्षे त्रयोदशी तु सुमं
तुनोक्ता॥ त्रयोदशी तु कर्तव्या द्वादशीसहिता मुने इति॥ कृष्णपक्षे त्वापस्तंबः॥ प्रतिपत्सद्विती
या स्याद्द्वितीया प्रतिपद्युता चतुर्थीसंयुता या च सा तृतीया फलप्रदा॥ पंचमी च प्रकर्तव्या षष्ठ्या यु
क्ता च नारद॥ कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी॥ पूर्वविद्धा प्रकर्तव्या परविद्धा न कुत्र
चित्॥ दशमी च प्रकर्त्तव्या सदुर्गा द्विजसत्तम॥ पक्षेऽष्टमी अमावास्या कृष्णपक्षे त्रयोदशी॥ ए
ताः परयुताः पूज्याः पराः पूर्वेण संयुता इति॥ यत्तु व्याघ्रः॥ खर्वो दर्पस्तथा हिंसा त्रिविधं तिथि
लक्षणं॥ खर्वदर्पौ परौ पूज्यौ हिंसा स्यात्पूर्वकालिकी॥ इति खर्वः साम्यं दर्पो वृद्धिस्तयोः परा॥
हिंसा क्षयस्तत्र पूर्वेत्यर्थः॥ एतच्छ्राद्धादिविषयं॥ द्वितीयादिषु युग्मानां पूज्यता नियमादि
षु॥ एकोद्दिष्टादिश्राद्धादौ ह्रासवृद्ध्यादिचोदने इति व्यासोक्तेः॥ नियमादिषु व्रतदानादिदैव
कर्मसु एकोद्दिष्टादितिथिश्राद्धादावित्यर्थः॥ कर्मकालव्याप्त्यभावे कर्मोपक्रमकालमेव ग्रा
ह्या कर्मोपक्रमकालगा तु कृतिभिर्ग्राह्या॥ न युग्मादर इति॥ दीपिकोक्तेः॥ या तिथिः॥ यां ति
थिं समनुप्राप्य उदयं याति भास्करः॥ सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु॥ इत्या
दीनि तानि त्रिमुहूर्तादिस्तुतिरिति निर्णयशैली॥ अथैकभक्तं तत्कालः पाद्मे॥ मध्याह्न
व्यापिनी ग्राह्या एकभक्ते सदा तिथिरिति॥ मध्याह्नश्च पंचधा भक्तदिनतृतीयांशः॥
तेन यद्यपि द्वादशदंडानंतरं प्राप्यते॥ तथापि दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत्॥ ए

कभक्तमितिप्रोक्तमतस्तत्स्याद्दिवैवहीतिस्कांदोक्तेःषोडशसप्तदशादिदंडामुख्यकालः।
दीपिकायांतु॥मध्यान्हात्परदलेत्रिभागदिवसेस्यादेकभक्तमिति॥ततःसूर्यास्तपर्यंतंगौ
णः॥दिवैवहीत्यस्यवैयर्थ्यापत्तेतत्परत्वात्॥अत्रपूर्वेद्युर्व्याप्तिरपरेद्युरुभयेद्युर्व्याप्ति
स्तदभावोंशेव्याप्तिस्तत्राऽपिसाम्यंवैषम्यंचेतिषट्पक्षाः॥तत्राद्ययोरसंदेहएवातृ
तीयेतुपूर्वेन्हिगौणमुख्यव्याप्तेःसत्वात्पूर्वेतिमाधवः॥युग्मवाक्यान्निर्णयइतिहेमा
द्रिः॥चतुर्थपक्षेपरैवसंकल्पकालेसत्वादितिकेचित्॥गौणकालव्याप्तेश्चतुर्थपक्षेस
त्वात्॥वैषम्येणांशव्याप्तौयाधिकासाग्राह्या॥साम्येपूर्वा॥अयंचस्वतंत्रैकभक्तनिर्ण
यः॥अन्यांगेउपवासप्रतिनिधौतदनुसारेणनिर्णयः॥अथनक्तं॥तच्चदिनानशन
पूर्वरात्रिभोजनं॥तत्रप्रदोषव्यापिनीग्राह्या॥प्रदोषव्यापिनीग्राह्यातिथिर्नक्तव्रतेस
देतिवत्सोक्तेः॥प्रदोषस्तु॥त्रिमुहूर्तंप्रदोषःस्याद्भानावस्तंगतेसति॥नक्तंतत्रकु
र्तव्यमितिशास्त्रविनिश्चयइतिमदनरत्नेव्यासोक्तेः॥तत्रापित्रिदंडोत्तरंग्राह्यं॥सायं
संध्यात्रिघटिकाअस्तादुपरिभास्वतइतिस्कांदोक्तेःदंडत्रयस्यसंध्यात्वात्॥तत्र
चत्वारिमानिकर्माणिसंध्यायांपरिवर्जयेत्॥आहारंमैथुनंनिद्रांस्वाध्यायंचचतुर्थ
कमितिमार्कंडेयेनभोजननिषेधात्॥मुहूर्तोनंदिनंनक्तंप्रवदंतिमनीषिणः॥नक्ष
त्रदर्शनान्नक्तमहंमन्येगणाधिपेतिमाधवीयेभविष्योक्तेश्च॥गौडास्तु॥प्रदोषोस्त
मयादूर्ध्वंघटिकाद्वयमिष्यतइतिवत्सोक्तेः॥प्रदोषस्संध्याचदिनरात्र्योस्संधौमुहूर्तः
॥अर्धास्तमयात्संध्याव्यक्तीभूताननतारकायावत्॥तेजःपरिहानिवशाद्भानोरू
र्ध्वोदयंयावदितिवराहोक्तेरित्याहुस्तन्न॥अस्यसंध्यावंदनानध्यायादिपरत्वात्॥
अतएवतत्रखंडमंडलस्यसंध्यात्वमुक्तंविज्ञानेश्वरेण॥यच्चमदनरत्नेनक्तस्यवैध
त्वाद्रागप्राप्तभोजनगोचरोनिषेधइत्युक्तंतन्नविधेर्निषेधाविरोधात्॥अन्यथाक
पिंजलानित्यत्रत्रिभ्योधिकानांहिंसनंस्यात्॥सायंकालेनक्तंतुदिनद्वयेप्रदोषस्प
र्शेत्वियं॥अतथात्वेपरत्रस्यादस्तादर्वाग्यतोहिसेति॥जाबालिवचनात्॥प्रदोष
व्यापिनीनस्याद्दिवानक्तंविधीयते॥आत्मनोद्विगुणाछायामंदीभवतिभास्करे॥
तन्नक्तंनक्तमित्याहुर्ननक्तंनिशिभोजनमितिस्कांदाच्चयत्यादीनामपिसायान्हेनक्तं
॥नक्तंनिशायांकुर्वीतगृहस्थोविधिसंयुतः॥यतिश्चविधवाचैवकुर्यात्तत्सदिवाक
रमिति॥तत्रैवस्मृत्यंतरात्॥इदमपुत्रविधुरोदलक्षणम्॥पुत्रवतस्तुरात्रावेवा
नाश्रमीप्याश्रमीस्यादपत्नीकोपिपुत्रवानितिसंग्रहोक्तेः॥सौरनक्तंतुदिवैव॥त्रि
मुहूर्तास्तगेवान्हिनिशिचेत्तावतीतिथिः॥तस्यांसौरंभवेन्नक्तमहन्येवतुभोजनमि
तिसुमंतूक्तेः॥हरिनक्तेविशेषःकालादर्शेस्कांदे॥उदयस्थासदापूज्याहरिनक्तव्रते
तिथिरिति॥अन्यनक्तंतुसंकोचात्पादावपिरात्रावेव॥निषेधस्यरागप्राप्तभोजनगोच
रत्वेनवैधाबाधकत्वात्॥दिनद्वयव्याप्तौपरा॥उभयोर्यदिवातिथ्योःप्रदोषव्यापि॥

नीतिथिः ॥ तत्रोत्तरत्र नक्तं स्यादुभयत्रापि सायत इति कालादर्शे जाबालिवचनात् ॥ अन्य
ष्वेषु एकभक्तवन्निर्णयः ॥ अत्र विशेषो मदनरत्ने गारुडे ॥ हविष्यभोजनं स्नानं सत्यमाह
रलाघवं ॥ अग्निकार्यमधःशय्यां नक्तभोजी षडाचरेत् ॥ अग्निकार्यमाहुतिहोम इत्यु
तिनक्तम् ॥ अयाचिते तु विशेषवचनाभावादुपवासवन्निर्णयः ॥ अथ नक्षत्रव्रतकाल
॥ विष्णुधर्मे ॥ उपोषितव्यं नक्षत्रं यस्मिन्नस्तमियाद्रविः ॥ युज्यते यत्र वा तारा निशीथे श
शिना सहेति माधवीये स्कान्दे ॥ नक्षत्रेणोपवसेद्दक्षे यन्निशीथादधो भवेत् उपवासे यद
क्षं स्यात्तद्दिने नैकभक्तयोः ॥ अथ व्रतपरिभाषा ॥ तत्राधिकारिणो मदनरत्ने भविष्ये
अनग्नयस्तु ये विप्रास्तेषां श्रेयो विधीयते ॥ व्रतोपवासनियमैर्नानादानैस्तथा नृपा ॥ अ
नग्निग्रहणमुपवासविषयं ॥ अत एव देवलः ॥ आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्र
यः ॥ अश्नंत एव सिद्ध्यंति नैषां सिद्धिरनश्नतां ॥ एकादश्यादौ तु वचनाद्भवतीति वक्ष्याम
शूद्रस्याप्यधिकारः ॥ शूद्रो वर्णश्चतुर्थोपि वर्णत्वाद्धर्ममर्हति ॥ वेदमंत्रस्वधास्वाहाव
षट्कारादिभिर्विनेति व्यासोक्तेः ॥ प्राच्यास्तु ॥ वैश्यशूद्रयोर्द्विरात्राधिकोपवासनिषे
धः ॥ वैश्याः शूद्राश्च ये मोहादुपवासं प्रकुर्वते ॥ त्रिरात्रं पंचरात्रं वा तेषां व्युष्टिर्न विद्यते ॥
चतुर्थमक्षणं वैश्ये शूद्रे चापि विधीयते ॥ त्रिरात्रं तु न धर्मज्ञैर्विहितं ब्रह्मवादिभिरिति हे
माद्रौ वचनात् ॥ यावदुक्तनिषेध इत्येके ॥ प्रकरणान्महातयो विषय इति युक्तं ॥ एवं स्त्री
णामपि तु स्कान्दे नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणं ॥ भर्तृशुश्रूषयैवैता
लोकानिष्टान्व्रजंति हि ॥ यद्देवेभ्यो यच्च पित्रादिकेभ्यः कुर्याद्भर्ताभ्यर्चनं सत्क्रियां च त
स्यार्द्धं सा फलं नान्यचित्ता नारी भुंक्ते भर्तृशुश्रूषयैव ॥ आदित्यपुराणे ॥ नारी खल्वन
नुज्ञाता भर्त्रा वा पितृतेन वा ॥ विफलं तद्भवेत्तस्या यत्करोत्यौर्ध्वदेहिकमिति ॥ और्ध्व
देहिकं पारलौकिकं तद्भर्त्रनुज्ञाविषयं ॥ भार्या पत्युर्मतेनैव व्रतादीनाचरेत्सदेति ॥
कात्यायनोक्तेः ॥ अत्र विशेषो हरिवंशे ॥ स्नानं च कार्यं शिरसस्ततः फलमवाप्नुयात् ॥
स्नात्वा स्त्री प्रातरुत्थाय पतिं विज्ञापयेत्सती ॥ तथा ॥ गृहीत्वौदुंबरं पात्रं सकुशं साक्ष
तं तथा ॥ गोशृंगदक्षिणं सिंच्य प्रगृह्णीयाच्च तज्जलं ॥ औदुंबरं ताम्रमयं ॥ ततो भर्तुः सती
दृधात्तानस्य प्रपतस्य च ॥ आत्मनश्चाभिषेक्तव्यं ततः शिरसि तज्जलं ॥ उपवासेषु कर्त
व्यमेतद्व्रतकेषु चेति ॥ सर्वव्रतेषु संकल्पविधिश्च भारते ॥ गृहीत्वौदुंबरं पात्रं वारिपू
र्णमुदङ्मुखः ॥ उपवासं तु गृह्णीयाद्यद्वा संकल्पयेद्बुधः ॥ हस्तेनैवेत्यर्थः ॥ यद्वेति पाठे य
त्फलमिच्छेदित्यर्थः ॥ अथ व्रतारंभकालः ॥ मदनरत्ने गार्ग्यः ॥ अस्तगे च गुरौ शुक्रे बाले
वृद्धे मलिम्लुचे ॥ उद्यापनमुपारंभं व्रतानां नैव कारयेत् ॥ रत्नमालायां सोमसौम्यगुरुशु
क्रवासराः सर्वकर्मसु भवंति सिद्धिदाः ॥ भानुभौमशनिवासरेषु च प्रोक्तमेव खलु कर्म
सिद्ध्यति ॥ तथा ॥ विरुद्धसंज्ञा इह ये च योगास्तेषामनिष्टः खलु पाद आद्यः ॥ सवैधृतिस्त्व
व्यतिपातनामा सर्वोऽप्यनिष्टः परिघस्य चार्द्धम् ॥ तिसृस्तु योगे प्रथमे सवज्रे व्याघातसंज्ञे

नवपंचस्थले॥गंडेतिगंडेचषष्ठेवनाग्नःशुभेषुकार्येषुविवर्ज्जनीयाः॥अथभद्रा॥
तथाचसंग्रहे॥कृष्णेग्निदिशयोरूर्ध्वंसप्तमीभूतयोरधः॥शुक्लेवेदेशयोरूर्ध्वंभद्रामाश्व
युक्सीयोः॥श्रीपतिः॥नसिद्धिमायातिकृतंचविष्ट्यांविषारिघातादिकमत्रसिद्धं॥व्य
वहारसमुच्चयेदशम्यामष्टम्यांप्रथमघटिकापंचकपरं॥हरिद्युःसप्तम्यांद्विदशघटिकां
तेत्रिघटिकं॥तृतीयाराकायांस्यमघटिकाभ्यःपरतरं॥शुभंविष्टेःपुच्छंशिवतिथिच
तुर्थ्योस्तुविरमे॥तत्रैव॥सर्पिणीतुसितेपक्षेकृष्णेचैववृश्चिकी॥सर्पिण्यास्तुमुखंत्य
त्याज्यंवृश्चिक्याःपुच्छमेवच॥माधवीये॥विष्टिर्यदाहनितिथेरपरार्द्धजाता॥पूर्वार्द्धजा
निशितदाशुभदाचपुच्छे॥ब्रह्मयामले॥दिनभद्रायदारात्रौरात्रिभद्रायदादिवा॥नत्या
ज्यंशुभकार्येषुप्राहुरेवंपुरातनाः॥श्रीपतिः॥षट्पोष्मतोद्वादशशांकराच्चयोरंद्रा
द्वातिनवक्रमेण॥पूर्वार्द्धमध्यापरभागयुंजिविरंतनज्योतिषिकैःस्मृतानि॥व्रतारंभेच
विशेषोमदनरत्नेसत्यव्रतेनोक्तः॥उदयस्थातिथिर्याहिनभवेद्दिनमध्यभाक्॥साखं
डानव्रतानांस्यादारंभश्चसमापनमिति॥देवलः॥अभुक्त्वाप्रातराहारंस्नात्वाचम्यसमा
हितः॥सूर्यायदेवताभ्यश्चनिवेद्यव्रतमाचरेत्॥मदनरत्नेभविष्ये॥क्षमासत्यंदयादानं
शौचमिंद्रियनिग्रहः॥देवपूजाग्निहवनंसंतोषस्तेयवर्ज्जनं॥सर्वव्रतेष्वयंधर्मःसामान्यो
दशधास्मृतः॥अग्निहोमस्तद्दैवत्योस्याहुतिहोमोवेतिवर्द्धमानः॥पत्रतेनोक्तं॥सर्वमेतत्पु
राणोक्तमकृतव्रतपरं॥व्रतांतरेतुविध्यंतरसत्वेहोमोन्यथान॥अतएवैकादश्यांशिष्टा
नांहोमानाचरणमिति॥तन्न॥जपोहोमश्चेति॥वक्ष्यमाणोक्तवाक्येनास्यकाम्यव्रति
परत्वात्॥तत्वंतु॥सामदशायस्तुमिन्द्रविन्दादिप्रकरणस्थेनेवतनद्भूतविशेषहोमविधि
भिरस्योपसंहारइति॥विष्णुधर्मे॥तज्ज्ञयज्जपनध्याततत्कथाश्रवणादिकं॥तदर्चनं
चतन्नामकीर्त्तनश्रवणादयः॥उपवासकृतामेतेगुणाःप्रोक्तामनीषिभिः॥कौर्मे॥
वहिर्ग्रामान्त्यजान्सूतिंपतितंचरजस्वलां॥नस्पृशेन्नाभिभाषेतनेक्षेतव्रतवासरे॥पृ
थ्वीचंद्रोदयेऽग्निपुराणे॥स्नात्वाव्रतवतासर्वव्रतेषुव्रतमूर्त्तयः॥पूज्याःसुवर्णमय्या
द्याःशक्त्यावेभूमिशायिना॥जपोहोमश्चसामान्यंव्रतांतेदानमेवच॥चतुर्विंशद्वादशवा
पंचवात्रयएववा॥विप्राःपूज्यायथाशक्तितेभ्योदद्याच्चदक्षिणाम्॥अत्रविप्राइतिपुल्लिं
गनिर्देशात्पुमांसएवभोज्यानतुस्त्रियः॥एवंसहस्रभोजनादावपि॥विरूपैकशेषस्यप्र
माणांतरंविनाऽयुक्तत्वात्॥अतएवद्वयोर्यजमानयोःप्रतिपरंकुर्याद्बहुभ्योयजमाने
भ्यइत्यादौविरूपैकशेषायोगात्पत्नमिप्रायंहित्वबहुत्वंवानसंभवतीत्युक्तमाचार्यैः
पार्थसारथिनाच॥एतेनैकस्यब्राह्मणस्याष्टमाभोजनंपरास्तं॥बहुत्वस्यैकपदश्रुत्या
ब्राह्मणान्वितत्वेनभोजनान्वयाभावादित्यलमत्रविस्तरेण॥स्फुटस्यप्रतिष्ठावद्विप्रद्वारा
आहुतिहोमइतिवर्द्धमानः॥व्रतमूर्त्तयोव्रतदेवताप्रतिमाः॥प्रतिमास्वरूपंचमदनर
त्नेभविष्ये॥अनुक्तद्रव्यतत्संख्यादेवताप्रतिमानृप॥सौवर्णीराजतीताम्रीदक्षजामा

न्निकीतथा॥चित्रजापिष्टलेखोत्यानिजवित्तानुरूपतः आमावास्यपर्यंतंकर्तव्याशास्त्र
ज्ञितैःतत्रैवग्राह्ये॥आज्यंद्रव्यमनादेशेजुहोतिषुविधीयते॥मंत्रस्यदेवतायाश्चप्रजाप
तिरितिस्थितिः॥मंत्रोनुक्तौसमस्तव्याहृतिरूपोमंत्रः।प्रजापतिश्चदेवतेतिकल्पतरुः।
वर्धमानघृतदेवीपुराणे॥होमोग्रहादिपूजायांशतमष्टाधिकंभवेत्॥अष्टाविंशतिरे
वायथाप्राप्तिविधीयते॥मदनरत्ने॥अनुक्तसंख्यायत्रस्यात्तत्रमष्टोत्तरंशतं॥वर्धमा
नघृतद्रूशानातपः॥उपवासंद्विजःकृत्वाततोब्राह्मणभोजनं॥कुर्यात्तेनास्यसगु
णउपवासोभिजायते॥व्रतोद्यापनानुक्तौतुपृथ्वीचंद्रोदयेनंदिपुराणे॥कुर्यादुद्या
पनंतस्यसमाप्तौयदुदीरितं॥उद्यापनंविनायत्तुतद्व्रतंनिष्फलंभवेत्॥यदिचोद्यापनं
नोक्तंव्रतानुगुणतश्चरेत्वित्तानुसारतोदद्यादनुक्तोद्यापनेव्रते॥गाश्चैवकांचनंदद्या
द्व्रतस्यपरिपूर्णये।असक्तौतुनारदीये॥सर्वेषामप्यलाभेतुयथोक्तकरणंविना॥विप्र
वाक्यंस्मृतंशुद्धंव्रतस्यपरिपूर्णये॥वृथाविप्रवचोयस्तुगृह्णातिमनुजःशुभं॥अदत्वाद
क्षिणांपापःसयातिनरकंध्रुवंभारत॥वेदोपनिषदिचैवसर्वकर्मसुदक्षिणा॥सर्वत्र
तुमयोद्दिष्टाभूमिर्गावोथकांचनं॥वैजवापः॥शिवनेत्रोद्भवंयस्माद्दत्तंपितृवल्लभं॥
अमंगलंतद्यत्नेनदेवकार्येषुवर्जयेत्॥टोडरानंदेदेवीपुराणे॥व्रतेचतीर्थेऽध्ययने
श्राद्धेऽपिचविशेषतः॥परान्नभोजनाद्देवियस्यान्नंतस्यतत्फलम्॥पृथ्वीचंद्रोदयेऽग्नि
पुराणे॥नित्यस्नायीमिताहारीगुरुदेवद्विजार्चकः॥क्षारंक्षौद्रंचलवणंमधुमांसानि
वर्जयेत्॥क्षारास्तुतत्रैवोक्ताः॥तिलमुद्गादृतेशिम्ब्यंशस्येगोधूमकोद्रवौ॥धान्यकंदेव
धान्यंचशमीधान्यंतथैवच॥स्विन्नधान्यंतथापण्यंमूलंक्षारगणःस्मृतः॥गोधूमानांतु
तत्रैवप्रतिप्रसवः॥व्रीहिषष्टिकमुद्गाश्चकलापाःसतिलंपयः॥श्यामाकाश्चशालिनी
वाराःगोधूमाद्याव्रतेहिताः॥कूष्मांडालाबुवार्ताकपालंकीज्योत्स्निकास्त्यजेत्॥चरु
भैक्ष्यसक्तुकणाःशाकंदधिघृतंमधु॥श्यामाकाःशालिनीवारायावकंमूलतंडुलम्
॥हविष्यंव्रतनक्तादावग्निकार्यादिकेहितं॥मधुमांसंविहायान्यद्व्रतेचहितमीरितमिति
॥शमीधान्यंमाषादि॥पालंकीमध्यदेशेपोई।इतिप्रसिद्धा॥ज्योत्स्निकाकोशातकी॥मि
ताक्षरायांगौतमः॥चरुभैक्ष्यसक्तुकणयावकशाकपयोदधि॥घृतमूलफलोदका
निहवींष्युत्तरोत्तरंप्रशस्तानि॥पयोदधिघृतंचगव्यमिति॥अमेचविशेषाः॥एकाद
शीचातुर्मास्यादिप्रकरणेवक्ष्यंते॥गृहीतव्रतत्यागेतुमदनरत्नेछागलेयः॥पूर्वंव्रतं
गृहीत्वायोनाचरेत्काममोहितः॥जीवन्भवतिचंडालोमृतःश्वाचाभिजायते॥तत्रप्राय
श्चित्तमुक्तंपृथ्वीचंद्रोदयेअग्निगरुडपुराणयोः॥क्रोधात्प्रमादाल्लोभाद्वाव्रतभंगोभवे
द्यदि॥दिनत्रयंनभुंजीतमुंडनंशिरसोथवेति॥प्रायश्चित्ताम्नानादतिक्रांतव्रतानुष्ठा
नंनास्तीतिगम्यते॥यत्तु॥प्रायश्चित्तंततःकृत्वापुनरेवव्रतीभवेदितिवचनं॥अतिक्रां
तमपिव्रतंकार्यमेवेतिशूलपाणिः॥तन्मध्येव्रतलोपेव्रतशेषसत्वेज्ञेयं।एतच्चशक्त

विषयं॥अशक्तौ तु कात्स्न्ये हेमाद्रौ पुराणांतरे॥उपवासासमर्थश्चेदेकं विप्रं तु भोजयेत्॥तावद्धना
दि वा दद्याद्यद्भक्तं द्विगुणं तथा॥भुक्तः कृतभोजनः ब्राह्मणभोजनं विनेति शेषः॥सहस्रस
म्मितान् देवीं जपेद्वा प्राणसंयमान्॥कुर्याद्द्वादशसंख्याकान् यथाशक्त्यातुरो नर इति॥
शुद्धितत्त्वे मात्स्ये॥उपवासेष्वशक्तानां नक्तं भोजनमिष्यते॥मदनरत्ने वायवीये॥द्रव्य
दानोपवासस्य फलं प्राप्नोत्यसंशयं॥तथा अपरार्के देवलः॥ब्रह्मचर्यं तथा शौचं सत्यमा
मिषवर्जनं॥व्रतेष्वेतानि चत्वारि वरिष्ठानीति निश्चयः॥मात्स्ये॥तस्मात्कृतोपवासेन
स्नानमभ्यंगपूर्वकं॥वर्जनीयं प्रयत्नेन रूपघ्नं तत्परं नृप॥अन्ये च नियमास्तत्र तत्रान्वे
षणीयाः॥अथ स्त्रीव्रतेषु विशेष उच्यते॥तत्र हेमाद्रौ व्रतकांडे गारुडे॥गंधालंकारतांबू
लपुष्पमालानुलेपनं॥उपवासेन दुष्यंति दंतधावनमंजनमिति॥इदं च सभर्तृकोपवा
सविषयं॥अंजनं च सतांबूलं कुंकुमं रक्तवाससी॥धारयेत्सोपवासापि अवैधव्यकरं य
तः॥विधवा यतिमार्गेण कुमारी वा यदृच्छयेति॥तत्रैव भविष्योक्तेः॥तथा विष्णुधर्मे॥
सर्वेष्वेतूपवासेषु पुमान्वाथ सुवासिनी॥धारयेद्रक्तवस्त्राणि कुसुमानि सितानि च॥
विधवा शुक्लवसनमेकमेव हि धारयेत्॥मनुरपि॥पुष्पालंकारवस्त्राणि गंधधूपा
नुलेपनं॥उपवासेन दुष्यंति दंतधावनमंजनम्॥मदनरत्ने व्यासः॥दंतधावनपुष्पा
दि व्रते यस्मान्न दुष्यतीति॥यद्यपीदं सर्वोपवासविषयं प्रतीयते तथापि शिष्टाचारा
त्सौभाग्याद्यर्थं क्रियमाणनवरात्रत्रिरात्राद्युपवासविषयमेव॥नत्वेकादश्यादिवि
षयं॥असकृज्जलपानाच्च सकृत्तांबूलचर्वणात्॥उपवासः प्रणश्येत दिवास्वापा
च्च मैथुनादित्यपरार्के देवलेन तन्निषेधात्॥न चास्य पुंविषयत्वेन सावकाशत्वात्
स्त्रीणां तांबूलादि प्राप्नोतीति वाच्यं॥तांबूलादिप्रापकस्यैवैकादशीतरविषयत्वेन
वैपरीत्यस्यापि सुवचत्वात्॥यत्तु हरिवंशे॥अंजनं रोचनं चैव गंधाः सुमनसस्तथा॥
व्रते चैवोपवासे च नित्यमेव विसर्जयेत्॥शिरसोभ्यंजनं सौम्ये नैवमेतत्प्रशस्यते॥न
पादयोर्न गात्रस्य स्नेहेनेति स्थितिः स्मृतेति॥तत्तत्रैवोक्तपुण्यकव्रतविषयं॥नतु सर्व
त्र पूर्वोक्तविरोधादिति मदनरत्न उक्तम्॥तत्रैव अक्षपातो रोषश्च कलहस्य कृति
स्तथा॥उपवासाद्व्रताद्वापि सद्यो भ्रंशयति स्त्रियं॥स्त्रियमित्युपलक्षणं॥मदनरत्ने शि
वधर्मे॥दानं व्रतानि नियमज्ञानं ध्यानं हुतं जपः॥यत्नेनापि कृतं सर्वं क्रोधितस्य वृथा
भवेत्॥अथ सूतकादौ निर्णयः॥तत्र शावसूत्याशौचयोः संध्यामात्रेकर्मनिवृत्तिर्नि
बन्धेषु स्पष्टैव॥गौडास्तु सूताशौचादावपि तामाहुः॥जानूर्ध्वं स्नातजंघो नित्यकर्म
न चाचरेत्॥नैमित्तिकं च तदधः स्रवद्रक्तो न चाचरेत्॥लौतके च समुत्पन्ने क्षुरकर्म
णि मैथुने॥धूमोद्गारे तथा वांते नित्यकर्माणि संत्यजेत्॥द्रव्ये भुक्ते त्वजीर्णे च नैव भु
क्त्वापि किंचन॥कर्म कुर्यान्नरो नित्यं सूतके मृतके तथेति कालिकापुराणात्॥वस्तुत
स्तु सर्वं नृदेवीप्रजोपक्रमात्तन्मात्रविषयत्वमस्येति युक्तं प्रतीमः॥तथा हेमाद्रौ पाद्मे॥ग

भिरणीसूतिकादिश्च कुमारीवाथरोगिणी॥यदाऽशुद्धा तदान्येन कारयेत्प्रयतास्वयमिति॥पुं
सोप्येष विधिः लिंगस्याविवक्षितत्वात्॥तेन यस्मिन्व्रते पूजाधिकं तदन्येन कारयेत् शरी
रनियमान्स्वयं कुर्यादिति हेमाद्रिर्माधवश्च॥नव्रतिनां व्रत इति विष्णूक्तेश्च॥आरंभस्तु न
भवत्येवाशुद्धितत्त्वे विष्णुः॥बहुकालिकसंकल्पो गृहीतश्च पुरा यदि सूतके मृतके चैव व्र
तं तन्नैव दुष्यति॥एतत्काम्यपरं॥नित्यंत्वनारब्धमपि कार्यमिति गौडाः॥मदनरत्ने॥पू
र्वसंकल्पितं यच्च व्रतं सुनियतव्रतैः॥तत्कर्तव्यं नरैः शुद्धं दानार्चनविवर्जितं॥माधवी
ये कौर्मे॥काम्योपवासे प्रक्रान्ते त्वंतरा मृतसूतके॥तत्र काम्यव्रतं कुर्याद्दानार्चनविव
र्जितमिति॥एतेन रोगेऽधिकारात्तद्व्रतांगदेवपूजादिकार्यमिति वर्धमानोक्तिः परास्ता
॥प्रारब्धपूजादिकार्यमेव नवरात्रेतु तत्रैव विशेषं वक्ष्यामः॥एवं रजस्वलापि॥यत्तु
सत्यव्रतः॥प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत्॥न तत्रापि व्रतस्य स्यादुपरोधः क
दाचनेति तत्प्रतिनिधिना कारयेदित्येतत्परं॥तदुक्तं मदनरत्ने मात्स्ये अंतरा तु रजोयोगे
पूजामन्येन कारयेदिति॥प्रतिनिधयश्च निर्णयामृते पैठीनसिः भार्या पत्युर्व्रतं कुर्याद्भा
र्यायाश्च पतिर्व्रतं॥असामर्थ्ये परस्ताभ्यां व्रतभंगो न जायते॥स्कांदेपि॥पुत्रं वा विनयो
पेतं भगिनीं भ्रातरं तथा॥एषामभावएवान्यं ब्राह्मणं वा नियोजयेत्॥कात्यायनः॥पि
तृमातृभ्रातृपतिगुर्वर्थे च विशेषतः॥उपवासं प्रकुर्वाणः पुण्यं शतगुणं लभेत्॥मदन
रत्ने प्रभासखंडे॥भर्ता पुत्रः पुरोधाश्च भ्राता पत्नी सखापि च॥यात्रायां धर्मकार्येषु जायं
ते प्रतिहस्तकाः॥एभिः कृतं महादेवि स्वयमेव कृतं भवेत्॥तत्रैव वायवीये॥स्वयं कर्तुमश
क्तश्चेत्कारयीत पुरोधसेति॥तत्रैव वायवीये॥स्वयं कर्तुमशक्तश्चेत्कारयीत पुरोधसा॥इ
दं च सर्ववर्णसाधारणमविशेषात्॥यत्तु कश्चिन्महोदधिराह॥शूद्रस्य ब्राह्मणादिरेव प्र
तिनिधिर्युक्तो न शूद्रः॥जपस्तपस्तीर्थसेवा प्रव्रज्या मंत्रसाधनं॥विप्रैः संपादितं यस्य संप
न्नं तस्य तत्फलमिति मरीचिवचनादिति॥तन्न तुच्छम्॥प्रव्रज्यादीनां शूद्रे असंभवाद्विषये
प्रायदर्शनादिति न्यायेनास्य ब्राह्मणादिगोचरत्वात्॥यदाह॥उपवासो व्रतं होमस्तीर्थ
स्नानजपादिकमिति दर्शितार्थस्तदापि सत्यदोषः॥स्त्री शूद्रपतनानि षडिति मानवीये
जपनिषेधात्॥ब्राह्मणो हीनवर्णस्य यः कुर्यात्कर्म किंचन॥स तां जातिमवाप्नोति इह
लोके परत्र चेति कालहेमाद्रौ मरीचिनिषेधाच्च॥वस्तुतस्तु संदर्शनावचनमात्रमन्ने
च्यत इति॥प्रतिनिधेः कार्यानंत्यलम्॥अत्र विशेषमाह त्रिकांडमंडनः॥काम्ये प्रतिनिधि
र्नास्ति नित्ये नैमित्तिके च सः॥काम्येष्वप्युपक्रमादूर्ध्वं केचित्प्रतिनिधिं विदुः॥नस्यात्प्रतिनि
धिर्मंत्रस्वामिदेवाग्निकर्मसु॥स्वदेशकालयोर्नापि नारणेरग्निरेव सा॥नापि प्रतिनि
धातव्यं निषिद्धं वस्तु कुत्रचित्॥हिरण्यकेशिसूत्रेपि॥न स्वामित्वस्य भार्यायाः पुत्रस्य
देशस्य कालस्याग्नेर्देवतायाः कर्मणः शब्दस्य च प्रतिनिधिर्विद्यत इति॥अथ व्रतादिस
न्निपाते निर्णयः॥तत्र तिथिद्वयसन्निपाते नोक्तं दानहोमादिकमेणानुष्ठेयमविरो

धात्॥ इदंपूर्वोक्तेष्वेव॥ एकमध्येन्यकाम्यकर्मारंभस्तुनभवत्येव। गुणफलादृते॥ यस्यय
ज्ञेव्रततेतेनरायज्ञस्तायतेयज्ञन्निवृत्तेतिगृह्णातीतिरणाकथ्वतश्रुतेः। यज्ञव्रतादिकर्ममात्र
मनंगेनव्यवधानदोषस्सर्वत्रसाम्यात्॥ शिष्टास्तु॥ कीर्तिकस्नानादिमध्येलक्षहोमतुला
भारतश्रवणादिश्राचरंति॥ तन्नित्यमध्येकाम्यमध्येतुचिंत्यं॥ यत्रनक्तैकभक्तादौविरोध
स्तत्रप्राथम्यादेकभक्तंकार्यंनक्तंतुपरेद्युस्तन्निथौगौणकालेकार्यं॥ समकालीनविरुद्ध
व्रतादौत्वेकंस्वयंकृत्वान्यद्भार्यादिनाकारयेदितिमाधवः॥ यत्रतुशिवरात्र्यादौतिथिमध्ये
पारणायान्हिभोजनंप्राप्तं॥ भूताष्टम्योर्दिवाभुक्त्वारात्रौभुक्त्वाचपर्वणि॥ एकादश्यांदिवा
रात्रौभुक्त्वाचांद्रायणंचरेत्॥ इतितन्निषेधश्च॥ तत्रपारणायावैधत्वाद्दिवैवभोजनं॥ नि
षेधस्तुरागप्राप्तभोजनविषयः॥ एवमष्टम्यादिनक्तव्रतेसंक्रांत्यादौरवौसंकष्टचतुर्थ्यां
चरात्रौभोजनं॥ यत्रत्वष्टम्यादौदिवाभुजिनिषेधःसंक्रमेचरात्राविितिनिषेधद्वयंतत्रोप
वासएवकार्यः॥ यद्यपिपुत्रिणउपवासोपिनिषिद्धस्तथाप्युपवासनिषेधेतुकिंचित्
भक्ष्यंप्रकल्पयेदितिवचनात्॥ किंचिद्भक्षयित्वोपवासःकार्यःचांद्रायणमध्येएकाद
श्यादौतुभोजनमेवकार्यं॥ चांद्रायणस्यकाम्यत्वेननित्यवाधकत्वात्॥ अवाधेनगत्यं
तरासंभवाच्च॥ एकादश्यामेकांतरोपवासादिपारणायांजलपारणंकृत्वोपवसेत्॥
आपोवाअशितमनशितंचतिश्रुतेः॥ एवंद्वादश्यांमासोपवासश्राद्धप्रदोषादिषुज्ञेय
म्॥ एवंकाम्यनैमित्तिकनित्यत्वादिकृतंवलाबलस्वयमूह्यमितिदिक्॥ इतिनिर्णयसिं
धौपरिभाषासमाप्ता॥ ० अथप्रतिपदादिनिर्णयः शुक्लप्रतिपदपरान्हव्यापिन्येवपूर्वा
ग्राह्या॥ युग्मवाक्यात्प्रतिपत्संमुखीकार्यायाभवेदापरान्हिकीतिस्कांदोक्तेः शुक्लास्या
त्प्रतिपत्तिथिःप्रथमतश्चेत्सापराह्णेभवेदितिदीपिकोक्तेश्च॥ अपरान्हश्चपंचधाभक्ते
दिनेचतुर्थोभागः॥ तदभावेसायान्हव्यापिनीग्राह्या॥ तदभावेतुसायान्हव्यापिनीपरिगृ
ह्यतामितिमाधवोक्तेः॥ कृष्णातुपरा॥ कृष्णात्तत्तरतोखिलेतिदीपिकोक्तेः॥ कृष्णापिपू
र्वैवेत्यनंतभट्टः॥ सर्वतिथिषुवर्ज्यान्युक्तानि॥ मुहूर्तदीपिकायाम्कूष्मांडंवृहतीफला
निलवणंवर्ज्यंतिलाम्लेतथा॥ तैलंचामलकंदिवप्रवसतांशीर्षंकपालांत्रकं॥ निष्पा
वांश्चमसूरिकाफलमथोवृंताकसंज्ञंमधुद्यूतंस्त्रीगमनंक्रमात्प्रतिपदादिष्वेवमाषोड
शः॥ शीर्षंनारिकेलं। कपालंअलावू॥ अंत्रंपटोलं॥ भूपालः। कूष्मांडंवृहतीक्षारंमूल
कंपनसंफलं॥ धात्रीशिरःकपालांत्रंनखचर्मतिलानिच॥ क्षुरकर्मांगनासेवांप्रतिप
त्प्रभृतित्यजेत्॥ नखंशिवी॥ चर्ममसूरिका॥ द्वितीयातुकृष्णापूर्वाशुक्लोत्तरेतिहेमा
द्रिः॥ कृष्णाद्वितीयादिमा॥ पूर्वान्हेयदिसासितातुपरतःसर्वेतिदीपिकोक्तेः॥ माधवानं
तभट्टमतेतुसर्वापिद्वितीयापरा॥ तथाचमाधवः॥ पूर्वेद्युरस्तीप्रातःपरेद्युस्त्रिमुहूर्तगा
॥ साद्वितीयापरेद्युःस्यात्पूर्वविद्धाततोन्यथेति॥ तृतीयातुसर्वमतेरंभाव्यतिरिक्तापरैव
॥ तेनयुग्मवाक्यंरंभाव्रतविषयं॥ रंभाख्यांवर्ज्जयित्वातुतृतीयांद्विजसत्तम॥ अन्येषुसर्व

श्रूयते॥ ॥शयनीबोधिनीमध्येयाकृष्णैकादशीभवेत्॥सैवोपोष्यागृहस्थेननान्याकृष्णाक
दाचनेति॥यत्तुगृहस्थस्याषाढीकार्तिकीमध्यस्थायाकृष्णाविहितासापुत्रवतोनिषिध्यते
॥अन्यकृष्णायांतुनविधिः॥सर्वविधीनांवनस्थयतिष्वुपसंहारात्।ननिषेधःप्राप्त्यभावा
त्॥शयनादिबोधपर्यंतंपुत्रगृहिणोचरमित्यनंतभट्टहेमाद्र्यादिग्रंथाः॥दीपिकापि॥असि
तानुशयनीबोधांतरस्थाप्युपोष्यानस्यात्सात्मजिनोपीति॥मदनरत्नेभविष्येपि॥यथाशु
क्लातथाकृष्णाद्वादशीमेसदाप्रिया॥शुक्लागृहस्थैःकर्तव्याभोगसंतानवर्द्धिनी॥मुमुक्षु
भिस्तथाकृष्णानतेतेनोपदर्शितेति॥निषेधपालनंकाम्यव्रतंचसर्वकृष्णायांसर्वगृहिणां
संभवत्येव॥पुत्रवांश्चसभार्यश्चवंधुयुक्तस्तथैवच॥उभयोःपक्षयोःकाम्यव्रतंकुर्या
त्तुवैष्णवमितिनारदोक्तेः॥एतच्चसर्वंकालादर्शउक्तम्॥विधवायावनस्थस्ययतेश्चैका
दशीद्वये॥उपवासोगृहस्थस्यशुक्लायामेवपुत्रिणः॥भुंजेर्निषेधःकृष्णायांसिद्धस्तस्य
ततोव्रतइति॥प्राच्यास्तुवैष्णवगृहस्थानांकृष्णापिनित्या।नित्यंभक्तिसमायुक्तैर्नरैर्विष्णु
परायणैः॥पक्षेपक्षेचकर्तव्यमेकादश्यामुपोषणं॥सपुत्रश्चसभार्यश्चस्वजनोभक्तिसं
युतः॥एकादश्यामुपवसेत्पक्षयोरुभयोरपीतिनारदोक्तेरित्याहुः॥पुत्रशब्दश्चापत्यमात्र
वचनः॥नारायणवृत्तौ॥पुमांसएवमेपुत्राजायेरन्नित्यत्रापत्यमात्रवाचित्वोक्तेः॥जन
येद्बहुधापुत्रानितिलिंगात्॥पौत्रीमातामहस्तेनेतिमनूक्तेः॥पुत्र्यांत्वपत्यमित्यर्थेस्त्री
भ्योढकि।पौत्रेपदत्यापत्तेः॥पुमान्पुत्रोजायतइतिच॥उपवासनिषेधेविशेषोवायवी
येउक्तः॥उपवासनिषेधेतुकिंचिद्भक्ष्यंप्रकल्पयेत्॥नदुष्यत्युपवासेनउपवासफलंलभे
त्॥भक्ष्यंचतत्रोक्तं॥नक्तंहविष्यान्नमथोदनंचफलंतिलाःक्षीरमथांबुचाज्यम्॥यत्पंच
गव्यंयदिवापिवायुःप्रशस्तमत्रोत्तरमुत्तरंचेत्यलं॥तत्रदशमीवेधोद्वेधा॥अरुणोदयवे
धःसूर्योदयवेधश्चेति॥आद्योगारुडे॥दशमीशेषसंयुक्तोयदिस्यादरुणोदयः॥नैवोपोष्यं
वैष्णवेनतद्दिनेकादशीव्रतमिति॥अरुणोदयस्वरूपंचमाधवीयेस्कांदे॥उदयात्प्राक्चतु
स्रस्तुघटिकाअरुणोदयइति॥यदपि॥उदयात्प्राक्यदाविप्रमुहूर्तद्वयसंयुता॥संपूर्णैका
दशीनामतत्रैवोपवसेद्गृहीतिगारुडेसौरधर्मादिवचनं॥यच्चभविष्ये॥आदित्योदयवेला
याःप्राङ्मुहूर्तद्वयान्विता॥एकादशीतुसंपूर्णाविद्धान्यापरिकीर्तितेति॥तदप्युपसंहारन्याये
नदंडचतुष्टयपरमेव॥हेमाद्रावप्येवं॥पुनब्रह्मवैवर्तेचतस्रोघटिकाःप्रातररुणोदयनि
श्चयः।चतुष्टयविभागोत्रवेधादीनांकिलोदितः॥अरुणोदयवेधःस्यात्सार्धंतुघटिकात्र
यं॥अतिवेधोद्विघटिकःप्रभासंदर्शनाद्रवेः॥महावेधोपितत्रैवदृश्यतेर्कोनदृश्यते॥तुरी
यस्तत्रविहितोयोगःसूर्योदयेबुधैरिति॥तदप्यवपवहारारुणोदयवेधविशेषपरमेवे
तिमाधवीयेमदनरत्नेच॥अन्यस्तूदयवेधः॥तथाचापिहेमाद्रौमाधवीयेगारुडे॥उदया
त्प्राक्त्रिघटिकाव्यापिन्येकादशीयदा॥संदिग्धैकादशीनामवर्ज्यैयंधर्मकांक्षिभिः॥उद
यात्प्राङ्मुहूर्तेनव्यापिन्येकादशीयदा॥संपूर्णैकादशीनामवर्ज्यैयंधर्मवृद्धये॥हेमा॥

विषयं॥अशक्तौतुकालेहेमाद्रौपुराणांतरे॥उपवासासमर्थश्चेदेकंविप्रंतुभोजयेत्॥तावद्धना
द्वादद्याद्युक्तश्चेद्द्विगुणंतथा॥भुक्ताशक्तभोजनः॥ब्राह्मणभोजनंविनेतिशेषः॥सहस्रस
म्मितान्देवींजपेद्वाप्राणसंयमान्॥कुर्याद्द्वादशसंख्याकान्यथाशक्त्यानुरोनरइति॥
शुद्धितत्त्वेमात्स्ये॥उपवासेष्वसक्तानांनक्तंभोजनमिष्यते॥मदनरत्नेवायवीये॥द्रव्य-
दानोपवासस्यफलंप्राप्नोत्यसंशयं॥तथाअपरार्केदेवलः॥ब्रह्मचर्यंतथाशौचंसत्यमा
मिषवर्जनं॥व्रतेष्वेतानिचत्वारिवरिष्ठानीतिनिश्चयः॥मात्स्ये॥तस्मात्कृतोपवासेन-
स्नानमभ्यंगपूर्वकं॥वर्जनीयंप्रयत्नेनरूपघ्नंतत्परंनृप॥अमीचनियमास्तत्रतत्रान्वे
षणीयाः॥अथस्त्रीव्रतेषुविशेषउच्यंते॥तत्रहेमाद्रौव्रतकांडेगारुडे॥गंधालंकारतांबू
लपुष्पमालानुलेपनं॥उपवासेनदुष्यंतिदंतधावनमंजनमिति॥इदंचसभर्तृकोपवा
सविषयं॥अंजनंचसतांबूलंकुंकुमंरक्तवाससी॥धारयेन्नोपवासापिअवैधव्यकरंय
तः॥विधवायतिमार्गेणकुमारीवायदृच्छयेतितत्रैवभविष्योक्तेः॥तथाविष्णुधर्मे॥
सर्वेष्वप्युपवासेषुपुमान्वाथसुवासिनी॥धारयेद्रक्तवस्त्राणिकुसुमानिसितानिच॥
विधवाशुक्लवसनमेकमेवहिधारयेत्॥मनुरपि॥पुष्पालंकारवस्त्राणिगंधधूपा
नुलेपनं॥उपवासेनदुष्यंतिदंतधावनमंजनम्॥मदनरत्नेव्यासः॥दंतधावनपुष्पा
दिव्रतेष्वस्यान्नदुष्यतीति॥यद्यपीदंसर्वोपवासविषयंप्रतीयतेतथापिशिष्टाचारा
त्सौभाग्याद्यर्थंक्रियमाणनवरात्रत्रिरात्राद्युपवासविषयमेव॥नत्वेकादश्यादिवि
षयं॥असकृज्जलपानाच्चसकृत्तांबूलचर्वणात्॥उपवासःप्रणश्येतदिवास्वापा
च्चमैथुनादित्यपरार्केदेवलेनतन्निषेधात्॥नचास्यपुंविषयत्वेनसावकाशत्वात्-
स्त्रीणांतांबूलादिप्राप्नोतीतिवाच्यं॥तांबूलादिप्रापकस्यैवैकादशीतरविषयत्वेन
वैपरीत्यस्यापिसुवचत्वात्॥यत्तुहरिवंशे॥अंजनंरोचनंचैवगंधाःसुमनसस्तथा॥
व्रतेचैवोपवासेचनित्यमेवविसर्जयेत्॥शिरसोऽभ्यंजनंसौम्येनैवमेतत्प्रशस्यते॥न
पादयोर्नगात्रस्यस्नेहेनेतिस्थितिस्स्मृतेति॥तत्तत्रैवोक्तपुण्यकव्रतविषयं॥नतुसर्व
त्रपूर्वोक्तविरोधादितिमदनरत्नउक्तम्॥तत्रैवअक्षतपातोरोषश्चकलहस्यकृति
स्तथा॥उपवासाद्धृताद्वापिसद्योभ्रंशयतिस्त्रियं॥स्त्रियमित्युपलक्षणं॥मदनरत्नेशि
वधर्मे॥दानंव्रतानिनियमज्ञानंध्यानंहुतंजपः॥यत्नेनापिकृतंसर्वंक्रोधितस्यवृथा
भवेत्॥अथसूतकादौनिर्णयः॥तत्रशावसूत्याशौचयोःसद्यःस्नानंकर्मनिवृत्तिर्नि
बन्धेषुस्पष्टैव॥गौडास्त्वाशौचादावपितामाहुः॥जानूर्ध्वक्षतजेजातेनित्यकर्म
नचाचरेत्॥नैमित्तिकंचतदधःस्रवद्रक्तोनचाचरेत्॥सूतकेचसमुत्पन्नेस्मार्तकर्म
णिमैथुने॥धूमोद्गारेतथावांतेनित्यकर्माणिसंत्यजेत्॥द्रव्येभुक्तेत्वजीर्णेचनैवभु-
क्त्वापिकिंचन॥कर्मकुर्यान्नरोनित्यंसूतकेमृतकेतथेतिकालिकापुराणात्॥वस्तुत
स्तुहर्षंनृदेवीप्रज्ञोपक्रमात्तन्मात्रविषयत्वमस्येतियुक्तंप्रतीमः॥तथाहेमाद्रौपाद्मे॥ग

भिरणीसूतिकादिश्चकुमारीवाथरोगिणी। नास्वयमिति।
.लिंगस्याविवक्षित
रनियमान्स्वयंकुर्यादितिहेमाद्रिर्व्याचख्यौ॥नव्रतिनांव्रतइतिविष्णुक्तेश्चा‍आरंभस्तु
भवत्येवाशुद्धिनत्वेविष्णुः॥वहुकालिकसंकल्पोगृहीतश्चपुरायदिसूतकेमृतकेचेत्
तंतत्रैवदुष्यति॥एतत्काम्यपरं॥नित्यंत्वनारब्धमपिकार्य्यमितिगौडाः॥मदनरत्ने
र्वसंकल्पितंयच्चव्रतंसुनियतव्रतैः॥तत्कर्त्तव्यंनरैःशुद्धंदानार्चनविवर्जितं॥मा
येकौर्म्मे॥काम्योपवासेप्रक्रांतेत्वंतरामृतसूतके॥तत्रकाम्यव्रतंकुर्य्यादानार्चनवि
मिति॥एतेनसांगेऽधिकारात्तद्व्रतांगदेवपूजादिकार्यमितिवर्धमानोक्तिःपरा
॥प्रारब्धपूजादिकार्य्यमेवनवरात्रेतुतत्रैवविशेषंवक्ष्यामः॥एवंरजस्वलापि॥य
सत्यव्रतः॥प्रारब्धदीर्घतपसांनारीणांयद्रजोभवेत्॥नतत्रापिव्रतस्यस्यादुपरोधः
दार्चनेतितत्प्रतिनिधिनाकारयेदित्येतत्परं।
पूजामन्येनकारयेदिति॥प्रतिनिधयश्चनिर्णयामृतेपैठीनसिभार्यापत्युर्व्र
र्यापाश्चपतिर्व्रतं॥असामर्थ्येपरस्ताभ्यांव्रतभंगोनजायते॥स्कांदेपि॥पुत्रंवाविनयं
येतभगिनींभ्रातरंतथा॥एषामभावएवान्यंब्राह्मणंवानियोजयेत्॥कात्यायनः॥
तृमातृभ्रातृपतिगुर्वर्थेचविशेषतः॥उपवासंप्रकुर्वाणःपुण्यंशतगुणंलभेत्॥मद
रत्नेप्रभासखंडे॥भर्त्तापुत्रपुरोधाश्चभ्रातापत्नीसखापिच॥यात्रायांधर्मकार्य्येषु
नेप्रतिहस्तकाः॥एभिःकृतंमहादे
क्रश्चकारयीतपुरोधसेति॥तत्रैववायवीये॥स्वयंकर्त्तुमशक्तश्चेत्कारयीतपुरोधसा
दंचसर्ववर्णसाधारणमविशेषात्।
तिनिधिर्यत्नेनशूद्रः॥जपस्तपस्तीर्थसेवाप्रव्रज्यामंत्रसाधनं।
न्नंतस्यतत्फलमितिमरीचिवचनादिति॥नतुच्छूम्।
प्रायदर्शनादितिन्यायेनास्यब्राह्मणादिगोचरत्वात्॥यदाह॥उपवासोव्रतंहोमस्तीर्थ
स्नानजपादिकमितिसर्वार्थस्तदापिसएवदोषः॥स्त्रीशूद्रपतनानिषडितिमानवी
निषेधात्॥ब्राह्मणोहीनवर्णस्यस्वयंकुर्यात्कर्मकिंचन॥सतांजा
लोकेपरत्रचेतिकालहेमाद्रौमरीचिनिषेधाच्च॥वस्तुत
चनइति॥प्रतिनिधेःकावार्त्तेत्यलम्॥अत्रविशेषमाहत्रिकांडमंडनः॥काम्येप्रतिनि
र्नास्तिनित्येनैमित्तिकेचसः॥काम्येष्वप्युपक्रमादूर्ध्वंकेचित्प्रतिनिधिंविदुः॥नस्यात्प्र
धिर्मंत्रस्वामिदेवाग्निकर्मसु॥सदेशकालयोर्नास्तिनारणेरग्निरेवसा॥नापिप्रति
धातव्यन्निषिद्धंवस्तुकुत्रचित्॥हिरण्यकेशिसूत्रेपि॥नस्वामित्वस्यभार्यायाःपुत्र
देशस्यकालस्याग्नेर्दैवतायाःकर्मणःशब्दस्यचप्रतिनिधिर्विद्यतइति॥अथव्रतादि
न्निपातेनिर्णयः॥तत्रतिथिद्वयसन्निपातेनव्रोक्तंदानहोमादिकमेणानुष्ठेयम

ज्ञायतिः॥प्रतिसंवत्सरंयत्नात्कर्त्तव्यस्तुमहोत्सवः॥ वृत्त्यचिंतामणौ॥ गुडदध्यति-
लान्नद्यादक्षतेग्रंथीचवंधयेत्॥गुग्गुलंनिंवसिद्धार्थदूर्वागोरोचनादिकम्॥संपूज्यभानुविघ्नेशौ
महर्षिंप्रार्थयेदिदम्॥चिरजीवीयथात्वंभोभविष्यामितथामुने॥रूपवान्वित्तवांश्चैवश्रियायु-
क्तश्चसर्वदा॥मार्कंडेयनमस्तेस्तुसप्तकल्पांतजीवन॥आयुरारोग्यसिद्ध्यर्थंप्रसीदभगवन्मुने॥
चिरजीवीयथात्वंतुमुनीनांप्रवरद्विज॥कुरुष्वमुनिशार्दूलतथामांचिरजीविनं॥मार्कंडेयम-
हाभागसप्तकल्पांतजीवन॥आयुरारोग्यसिद्ध्यर्थमस्माकंवरदोभव॥सतिलंगुडसंमिश्रमंज-
ल्यर्द्धमितंपयः॥मार्कंडेयाद्वरंलब्ध्वापिवाम्यायुर्विवृद्धये॥इतिपयःपिबेत्॥तिथितत्वेस्कांदे
॥खंडनंनखकेशानांमैथुनाध्वगमौतथा॥आमिषंकलहंहिंसांवर्षवृद्धौविवर्जयेत्॥ त-
त्रैवदीपिकायां॥ कृतांतकुजयोर्वारेयस्यजन्मतिथिर्भवेत्॥ अनृक्षयोगसंप्राप्तौवि-
घ्नस्तस्यपदेपदे॥कृतांतःशनिः॥तस्यसर्वौषधिस्नानंगुरुदेवाग्निपूजनं॥इदमशुभ॥ मृतेज-
न्मनिसंक्रांतौश्राद्धेजन्मदिनेतथा॥अस्पृश्यस्पर्शनेचैवनस्नायादुष्णवारिणा॥अत्रजन्मति-
थिरौदयिकीग्राह्या॥युगाद्यावर्षवृद्धिश्चसप्तमीपार्वतीप्रिया॥रवेरुदयमीक्षंतेनतत्रतिथियुग्म-
तेतिवृत्यतत्वार्णववचनात्॥विशेषोमत्कृतशूद्रधर्मेज्ञेयः॥ अथकटिसूत्रं॥प्रयो-
गपारिजातेब्राह्मे॥ प्रतिसंवत्सरांतर्हिवृक्ष्येन्द्रणांविधिपरं॥दत्वागोभूहिरण्यादित-
थास्वर्णादिनिर्मितं॥वध्नीयात्कटिसूत्रंचवासःसंगृह्यनूतनं॥दूर्वांकुरैरथाज्येनचरुणाचपि-
ताकिनं॥आयुष्यहोमंकृत्वाचतर्पयेत्पितृदेवताः॥॰ अथचौलम्॥ प्रयोगपा-
रिजातेबहुरुशिष्यः॥ जाताधिकारांजन्मादितृतीयेब्देतुचौलकं॥आद्यब्देकुर्वतेकेचि-
त् पंचमेब्देद्वितीयके॥उपनीत्यासहैवेतिविकल्पाःकुलधर्मतः॥बृहस्पतिः॥तृतीयेब्देशि-
शोर्गर्भाज्जन्मतोवाविशेषतः॥पंचमेसप्तमेवापिस्त्रियाःपुंसोपिवासमं॥तत्रैवनारदः॥जन्मत-
स्तुतृतीयेब्देश्रेष्ठमिच्छंतिपंडिताः॥पंचमेसप्तमेवापिजन्मतोमध्यमंभवेत्॥अधमंगर्भतःस्या-
त्तुनवमेकादशेपियेति॥ पारिजातेबृहस्पतिः॥ उत्तरायणगेसूर्येविशेषात्सौ-
म्यगोलके॥शुक्लपक्षेशुभंप्रोक्तंकृष्णपक्षेशुभेतरत्॥अशुभोंत्यत्रिभागःस्यात्कृष्णपक्षेत्रिधा-
कृते॥तत्रैववसिष्ठः॥द्वित्रिपंचमसप्तम्यामेकादश्यांतथैवच॥दशम्यांचत्रयोदश्यांकार्यंक्षौरं-
विजानता॥नृसिंहीये॥षष्ठ्यष्टमीचतुर्थीचनवमीचचतुर्दशी॥द्वादशीदर्शपूर्णेद्वेप्रतिपच्चै-
वनिंदिताः॥वसिष्ठः॥ रवेरंगारकस्यैवसूर्यपुत्रस्यचैवहि॥निंदितादिवसाःक्षौरेशेषाःका-
र्यकराःशुभाः॥ ज्योतिर्निबंधेबृहस्पतिः॥ पापग्रहाणांवारादौविप्राणांशु-
भदंरवेः॥क्षत्रियाणांस्मासूनोर्विट्शूद्राणांशनेःशुभं॥हस्ताश्विविष्णुपौष्णाश्रविष्ठादित्य-
पुष्यभं॥सौम्यचित्रेनवक्षौरेउत्तमानवतारकाः॥त्रीण्युत्तराणिवायव्यंरोहिणींवारुणंतथा॥
क्षौरेषण्मध्यमाःप्रोक्ताःशेषाद्वादशगर्हिताः॥निधनेजन्मनक्षत्रेवैनसेचंद्रमाष्टमे॥विपत्करे
वधेक्षौरंप्रत्यरेचविवर्जयेत्॥अत्रलग्नशुद्धिरन्येचयोगाःज्योतिर्विद्भ्योज्ञेयाः॥ अन्येचविशेषाः
श्मश्रुकर्मनिर्णयेवक्ष्यंते॥एतच्चशिशोर्मातरिगर्भिण्यांनकार्यंतदाह॥ज्योतिर्निबंधेमदनर-

न्ते च वृद्धगार्ग्यः॥ उत्पन्नचूडाकृतौ माता यदि स्याद्गर्भिणी भवेत्॥ शस्त्रेण मृत्युमाप्नोति तस्मात्क्षौर
विवर्जयेत्॥ अस्यापवादमाह। तत्रैव नारदः। सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत्। पंचाब्दा
त्प्रागथोर्ध्वं तु गर्भिण्यामपि कारयेत्। यदि गर्भविपत्तिः स्याच्छिशोर्वा मरणं यदि॥ सहोपनीत्या
कुर्याच्चेत्तदा दोषो न विद्यते॥ बृहस्पतिः॥ गर्भिण्यां मातरि शिशोः क्षौरकर्म न कारयेत्। व्रताभि
षेके यद्येवं स्यात्कालो वेदव्रतेष्वपि॥ गर्भिण्यामपि पंचमासपर्यंतं न दोष इत्युक्तं मुहूर्तदीपि
कायां गार्ग्येण॥ पंचममासादूर्ध्वं मातुर्गर्भस्य जायते मृत्युरिति॥ मदनरत्ने बृहस्पतिः॥ उत्पन्नचू
डाकृतौ माता गर्भिणी यदि सा भवेत्॥ विपद्यते गुरुस्तत्र दंपती शिशुरष्टतः। गर्भे मातुः कुमार
स्य न कुर्याच्चौलकर्म तु॥ पंचमासादधः कुर्यादत ऊर्ध्वं न कारयेत्॥ गर्गः॥ ज्वरक्षौ
त्पादनं यस्य लग्नं तस्य न कारयेत्॥ दोषनिर्गमनात्पश्चात्स्वस्थो धर्मं समाचरेत्॥ लग्नमिति
मंगलोपलक्षणम्॥ ज्योतिर्गर्गः॥ विवाहोत्सवयज्ञेषु माता यदि रजस्वला॥ त
दा स मृत्युमाप्नोति पंचमं दिवसं विना॥ वसिष्ठः॥ यस्य मांगलिकं कार्यं तस्य माता
रजस्वला॥ ऊर्ध्वं तदेव॥ तत्रैव बृहस्पतिः॥ प्रारब्धमभ्युदयश्राद्धं पुत्रसंस्कारकर्मणि। पत्नी रज
स्वला चेत्स्यात्कुर्यात्तत्पिता तदा॥ पितेति कर्तृमात्रोपलक्षणम्। संकटे तु वाक्यसारे उक्तम्।
अलाभे सुमुहूर्तस्य रजोदोषे ह्युपस्थिते॥ श्रियं संपूज्य विधिवत्ततो मंगलमाचरेत्। एतच्च मंड
नोत्तरं न कार्यं। न मंडनाच्चापि हि मुंडनं च गोत्रैकतायां यदि नाब्दभेद इति॥ मदनरत्ने वसि
ष्ठः॥ तत्रैव कात्यायनः॥ कुले ऋतुत्रयादर्वाङ्मंडनान्न तु मुंडने॥ प्रवेशान्निर्गमो नेष्टो न कुर्या
न्मंगलत्रयम्॥ वृद्धमनुः॥ एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः॥ न समानक्रियां कुर्यान्मा
तृभेदे विधीयते॥ आशौचे तु संग्रहे॥ संकटे समनुप्राप्ते सूतके समुपागते॥ कूष्मांडीभिर्घृतं हु
त्वा गां च दद्यात्पयस्विनीम्॥ चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेदिति॥ ज्योतिर्निबंधे ष
ष्ठे षोडशे वर्षे विवाहादौ तथैव च॥ अंतर्वत्न्यां च जायायां नेष्यते मुंडनं क्वचित्॥ अत्रो विशे
षो विवाहप्रकरणे वक्ष्यते॥ दीपिकायां॥ न चूडा जन्मभार्क्षे यदारुणोसुशनोकुजे॥ प्रतिपद्भ
द्ररिक्तासु विद्यारंभस्तु पंचमे॥ प्रयोगरत्ने॥ मध्ये शिरसि चूडा स्याद्वसिष्ठानां तु
दक्षिणे॥ उभयोः पार्श्वयोरत्रिकश्यपानां शिखा मता॥ माधवीये त्वेवम्॥ आपस्तंबस्त्वा
ह। तूष्णीं केशान्विनीय॥ यथर्षि शिखा निदधाति॥ यथर्षि॥ प्रवरसंख्यया॥ तासां मध्ये शिखा
वर्जमुपनयने वपनं कार्यम्॥ प्रतिदिशं प्रवपतीत्युपनयने तैत्तिरीयोक्तेः॥ रिक्तो वा एषोऽनपिहि
तो यन्मुंडस्तस्यैतदपिधानं यच्छिखेति श्रुतेः॥ विशिखो व्युपवीतश्च यत्करोति न तत्कृतमिति
निषेधाच्च॥ सत्रे तु वचनात्सशिखं॥ वपनमिति सुदर्शनभाष्ये उक्तम्॥ यत्तु कुमारा विशिखा
इवेति लिंगं तच्छंदोगपरं॥ अपरार्के मदनरत्ने च लौगाक्षिः॥ दक्षिणतः कमुजा वसिष्ठाना
मुभयतोऽत्रिकश्यपानां मुंडा भृगवः पंचचूडाः॥ अंगिरसो वाजिमेके मंगलार्थं॥ शिखिनो
न्ये यथाकुलधर्मं वेति॥ कमुजा शिखा॥ वाजिः केशपंक्तिः स्मृतिदर्पणे॥ एका शिखा दक्षि
णतो वसिष्ठगोत्रस्य पंचांगिरसां भृगोस्तु॥ निका शिखा कश्यपगोत्रजानां शिखोभयत्रापि

यथाकुलंवा॥एतच्छूद्रातिरिक्तविषयं॥शूद्रस्यानियताःकेशवेशाइतिवसिष्ठोक्तेः।यत्तुया
म्ये॥नशिखीनोपवीतीस्यान्नोच्चरेत्संस्कृतांगिरमितिशूद्रमुपक्रम्योक्तम्।तदसच्छूद्रस्येति
केचित्॥विकल्पइतियुक्तम्॥अतएवहारीतः।स्त्रीशूद्रौतुशिखांछित्वाक्रोधाद्वैराग्यतोपि
वा॥प्राजापत्यंप्रकुर्वीतांनिष्कृतिर्नान्यथाभवेत्॥एतत्परिग्रहपक्षे॥अत्रदेशभेदाद्यव
स्थेतिदिक्॥ ज्योतिर्निबंधे॥ नन्दोत्तरदेशेतुसिंहस्थदेवमंत्रिणि।शुभक
र्मनकुर्वीतनिषेधोनास्तिदक्षिणे॥ अत्रभोजनेप्रायश्चित्तमुक्तंमाधवीये॥निर्वृ
त्तेचूडहोमेतुप्राङ्नामकरणात्तथा॥चरेत्सांतपनंभुक्त्वाजातकर्मणिचैवहि।अतोन्येषु
तुसंस्कारेषूपलासेनशुद्ध्यति॥एतेसंस्काराःस्त्रीणाममंत्रकाःकार्याः॥होमस्तुसमंत्रक
इति॥प्रयोगपारिजाते॥आश्वलायनोपि॥होमकल्पंतुपुंवत्स्यात्स्त्रीणांचूडाकर्मणावपीति
मनुरपि॥अमंत्रिकातुकार्येयंस्त्रीणामावृदशेषतइतिहोमोप्यमंत्रइत्येके॥संस्काराःस्त्री
णामहोमकाःस्युरितिस्मृत्यर्थसारेहोमोनेतिवृत्तिकृत्॥अथविद्यारंभः।मदनरत्नेनृ
सिंहः॥अक्षरस्वीकृतिंकुर्यात्प्राप्तेपंचमहायने॥उत्तरायणगेसूर्येकुंभमासंविवर्जयेत्।
दीपिकायांपवर्षेपञ्चमकेकालेषष्ठीरिक्ताशनिकुजं॥अनध्यायान्विनानत्वादेवंग्रंथस्थं
तंगुरुं।श्रीधरः॥हस्तादित्यसमीरमित्रगुरुजित्पौष्णाश्विचित्राश्रुतेष्वार्कपशादिनोदयादि
रहितेराशौस्थिरेचोभ॥पौ॥पक्षेपूर्णनिशाकरेप्रतिपदंरिक्तांविहायाष्टमींषष्ठीमष्टम
ष्टमशुद्धभाजिभवनेप्रोक्ताक्षरस्वीकृतिः।विष्णुधर्मे॥पूजयित्वाहरिंलक्ष्मींतथादेवींसरस्वती
म्॥स्वविद्यासूत्रकारांश्चस्वविद्यांश्चविशेषतः॥एतेषामेवदेवानांनाम्नातुजुहुयाद्धृतं॥द
क्षिणाभिर्द्विजेंद्राणांकर्तव्यंचात्रपूजनं॥अथधनुर्विद्या॥दीपिकायां॥अदितिगुरुयमार्क
स्वातिचित्राविपित्र्यध्रुवहरिवसुमूलेष्विंदुभागांत्यभेषुरानिशशिबुधवारेविष्णुवोधेवियो
षेसुसमयतिथियोगेचापिविद्याप्रदानं॥अथानुपनीतस्यविशेषः।प्रागुपनयनात्कामचा
रवादभक्षाइति॥भक्षणंलशुनादेरपीतस्यविशेषः।प्रागुपनयनात्कामचारवादभक्षाइति
प्रभक्षणंलशुनादेरपीतिहरदत्तःअपरार्के॥वृद्धशातातपः॥शिशोरभ्युक्षणंप्रोक्तंवालस्या
चमनंस्मृतम्॥रजस्वलादिसंस्पर्शेस्नानमेवकुमारके॥प्राक्चूडाकरणाद्बालःप्रागन्नप्राश
नाच्छिशुः॥कुमारकस्तुविज्ञेयोयावन्मौंजीनिबंधनम्॥आपस्तंबोपि॥अन्नप्राशनात्प्रय
तोभवत्सांवत्सरादित्येकेइति।गौतमीये॥नतदुपस्पर्शनादाशौचं॥तस्यानुपनीतस्यचंडा
लादिस्पृष्टस्यापिस्पर्शात्स्नानं॥इदंचषष्ठवर्षात्प्राक्॥ऊर्ध्वंतुस्नानंभवत्येव॥वालस्य
पंचमाद्वर्षादूर्ध्वंशौचमाचरेदितिस्मृतेः॥कामचारादिकेप्येवम्॥ऊनेकादशवर्षस्य
पंचवर्षात्परस्यच॥चरेद्गुरुःसुहृच्चैवप्रायश्चित्तंविशुद्धये॥अतोबालतरस्यास्तनापराधो
नपातकमितिस्मृतेरितिहरिदत्तः।स्मृत्यर्थसारेप्येवम्॥अथोपनयनम्॥आश्वलायनः॥
गर्भाष्टमेष्टमेवाब्देपंचमेसप्तमेपिवा॥द्विजत्वंप्राप्नुयाद्विप्रोवर्षेत्वेकादशेनृपः॥मनुःब्रह्म
वर्चसकामस्यकार्यंविप्रस्यपंचमे॥राज्ञोबलार्थिनःषष्ठेवैश्यस्यार्थार्थिनोष्टमे॥विष्णुः
षष्ठेतुधनका

तोविप्रःपुनःसंस्कारमर्हति॥ ज्योतिर्निबंधेनारदः सर्वेषांजीवशुक्रार्कवाराःशोभ
व्रतेशुभाः॥चंद्रार्कौमध्यमौज्ञेयौसामवाद्दुर्जयीकुजः॥शाखाधिपतिवारश्चशाखाधिपबलं
तथा॥शाखाधिपतिलग्नंचदुर्लभंत्रितयंव्रते॥शाखाधिपाश्चलग्नसंग्रहे॥ऋगथर्वसाम
यजुषामधिपागुरुसौम्यभौमसिताः॥जीवसितौविप्राणांक्षत्रस्यारोर्कसृग्विशांचंद्रइतिपा
रिजातेबृहस्पतिः॥बह्वृचानांगुरुर्वारोयजुर्वेदजुषांकवेः॥सामगानांधरासूनोरथर्वविदां
रवेः॥अत्रलग्नादिदैवज्ञेभ्योज्ञेयं॥विस्तरभयान्नोच्यते॥लल्लः॥व्रतेन्हिसर्वेसंध्यायांवारि
दोयदिगर्जति॥तद्दिनेस्यादनध्यायोव्रतंतत्रविवर्जयेत्॥ ज्योतिर्निबन्धे॥ नांदीश्रा
द्धेकृतेचेत्स्यादनध्यायस्त्वकालिकः॥तदोपनयनंकार्यंवेदारंभंनकारयेत्॥एतद्बह्वृचा
तिरिक्तानांतेषांतद्दिनेवेदारंभाभावात्॥अतस्तेषामुपनयनंनभवत्येव॥एतच्चप्रातस्तनि
ते॥सायंतनेतुद्वितीयेचरुंश्रपयित्वासायंसंध्योत्तरंहोमंकुर्यात्॥नसंध्यागर्जितेकाले
नहस्तुत्स्यात्तद्दूषिते॥ब्रह्मौदनंपचेद्यश्चैषकर्मन्ननदुष्यतीतिसंग्रहोक्तेरिति॥ प्रयोगपा
रिजातेभट्टचरणाः॥ अत्रशांतिरप्युक्ता॥नृसिंहप्रसादे॥ब्रह्मौदनविधेःपूर्वमंतेवेगर्जि
तंयदि॥तदाविघ्नकरंतेयंवटोरध्ययनस्यतु॥तस्यशांतिप्रकारंतुवक्ष्येशास्त्रानुसारतः॥प्र
धानंपायसंसाज्यंद्रव्यंशांतियजौभवेत्॥सूक्तंबृहस्पतेर्विद्यान्नुपदेत्रमत्रविदूये॥गायत्री
चैवमंत्रःस्यात्प्रायश्चित्तंतुसर्पिषा॥धेनुंसवत्सकांदद्यादाचार्यायपयस्विनीं॥ब्राह्मणान्
भोजयेत्पश्चात्ततोब्रह्मौदनंचरेत्॥उपनयनेचाधिकारिणः॥ माधवीयेवृद्धमनू
क्तेः॥ पितापितामहोभ्राताज्ञातयोगोत्रजोग्रजः॥उपानयेधिकारीस्यात्पूर्वाभावेप
रःपरः॥प्रयोगरत्ने॥पितैवोपनयेत्पुत्रंतदभावेपितुःपिता॥तदभावेपितुर्भ्रातातदभावेपिसो
दरः॥पितेतिविप्रपरंतस्यक्षत्रियादेः॥तेषांपुरोहितएव॥उपनयनस्यदृष्टार्थत्वात्॥तेषांचा
ध्यापनेनधिकारात्॥अत्रपितुरप्यज्येष्ठभ्रात्रभावेधिकारः॥असंस्कृतास्तुसंस्कार्याभ्रा
तृभिःपूर्वसंस्कृतैरितियाज्ञवल्क्योक्तेः॥तेनेदमविभक्तपरम्॥पूर्वंतुविभक्तपरम्॥मातुःरजो
दोषेतुप्रागुक्तम्॥ अथषण्ढमूकादीनांविशेषः॥ प्रयोगपारिजातेब्राह्मे॥
ब्राह्मणेनब्राह्मण्यांजातोब्राह्मणःस्मृतिःश्रुतिः॥तस्माच्चखंडबधिरकुब्जवामनपंगुषु॥जडगद
दरोगार्त्तशुष्कांगविकलांगिषु॥मत्तोन्मत्तेषुमूकेषुशयनस्थेनिरिंद्रिये॥ध्वस्तपुंस्त्वेषुचैतेषु
संस्काराःस्युर्यथोचितम्॥मत्तोन्मत्तौनसंस्कार्याविति केचित्प्रचक्षते॥कर्मस्वनधिकाराच्च
पातित्यंनास्तिचैतयोः॥तदपत्यंचसंस्कार्यमपरेत्वाहुरन्यथा॥संस्कारमंत्रहोमादीन्करोत्या
चार्यएवतु॥उपनेयांश्चविधिवदाचार्यःस्वसमीपतः॥आनीयाग्निसमीपंवासावित्रींस्पृश्य
वाजयेत्॥कन्यासीकरणादन्यत्सर्वंविप्रेणकारयेत्॥एवमेवद्विजैर्जातौसंस्कार्यौकुंड
गोलकावितिस्मृत्यर्थसारेप्येवम्॥कुंडगोलकयोःसंस्कार्यत्वंश्राद्धेनिषेधश्चक्षेत्रजपुत्रविष
यः॥अन्यस्याब्राह्मण्येनोपनयनाधप्राप्तिरित्यपरार्कः॥उपनयनंचकुमारंभोजयित्वाकार्य
म्॥प्रागेवेनंतदहर्भोजयंतीतिमदनपारिजातेगोभिलोक्तेः॥गायत्र्युपदेशश्चोत्तरतोग्नेःकार्यः

॥उत्तरेणाग्निमुपविशतःप्राङ्मुखस्याचार्यःप्रत्यङ्मुखइतरोधीहिभोइतिशांखायनसूत्रोक्तेः
पद्यपिकात्यायनेनाथास्मैसावित्रीमन्वाहोत्तरतोग्नेःप्रत्यङ्मुखायेत्युक्त्वादक्षिणतस्तिष्ठतआ
सीनायवैकेइतिविकल्पउक्तः॥तथापिकातीयानामेवसः॥बहृचानांतूत्तरएव॥वेदैक्यात्॥भि
क्षायांविशेषमाहकात्यायनः॥मातरमेवाग्रेभिक्षेत॥ पराशरमाधवीये॥ मातरं
वास्वसारंवामातुर्वाभगिनींनिजां॥भिक्षेतभिक्षांप्रथमंयाचैनंनविमानयेत्॥ अथसं
स्कारलोपेशौनकः॥ आरभ्याधानमाचौलात्कालेतीतेतुकर्मणां॥व्याहृत्याज्यंसुसं
स्कृत्यहुत्वाकर्मयथाक्रमं॥एतेष्वेकैकलोपेतुपादकृच्छ्रंसमाचरेत्॥चूडायाअर्द्धकृच्छ्रः
स्यादापदित्वेवमीरितम्॥अनापदितुसर्वत्रद्विगुणंद्विगुणंचरेत्॥ पारिजातेकात्याय
नः॥ लुप्तेकर्मणिसर्वत्रप्रायश्चित्तंविधीयते॥प्रायश्चित्तेकृतेपश्चाल्लुप्तंकर्मसमाचरे
त्॥स्मृत्यर्थसारेचैवम्॥कारिकायांतुप्रायश्चित्तेकृतेतीतंकर्मकृताकृतमित्युक्तम्॥प्राय
श्चित्तेकृतेपश्चादतीतमपिकर्मवै॥कार्य्यमित्येकआचार्य्यानेत्यन्येतुविपश्चितइति॥ त्रि
कांडमंडनेनतु॥ कालातीतेषुकार्य्येषुप्राप्तवत्स्वपरेषुच॥कालातीतानिकृत्वैवविद
ध्यादुत्तराणितुइत्युक्तम्॥तत्रसर्वेषांतंत्रेणनांदीश्राद्धंकुर्य्यात्॥देशकालकर्तॄणांक्यात्॥ग
णशःक्रियमाणानांमातृणांपूजनंसकृत्॥सकृदेवभवेच्छ्राद्धमादौनपृथगादिषितिछंदो
गपरिशिष्टात्॥एतद्बहुनामपत्यानांयुगपत्संस्कारकरणविषयमितिबोपदेवः॥अतीत
संस्काराणांयुगपत्करणइत्यन्ये॥तत्रापिचौलस्यउपनीत्यासहेतिपक्षेउपनीतिदिनेए
वतत्पुण्याहंनपूर्वदिने॥सहत्वस्यदिवसैक्यसन्निकृष्टतरत्वात्॥वृद्धाचारोप्येवं॥उपनीतिदिने
मध्यान्हसंध्यामाह॥ पारिजातेजैमिनिः॥ यावद्ब्रह्मोपदेशस्तुतावत्संध्यादिकंन
च॥ततोमध्यान्हसंध्यादिसर्वंकर्मसमाचरेदिति॥ब्रह्मगायत्री॥यत्तुवचनम्॥उपायनेतुक
र्तव्यंसायंसंध्येउपासनं॥आरभेद्ब्रह्मयज्ञंतुमध्यान्हेतुपरेहनीति॥तच्छाखांतरविषयमितिपा
रिजातः॥विकल्पइतियुक्तंपश्यामः॥उपनयनाग्निस्त्रिरात्रंधार्य्यः॥त्र्यहमेतमग्निंधारयंतीत
त्यापस्तंबोक्तेः॥बौधायनसूत्रेतुसदाधारणमप्युक्तम्॥उपनयनादिरग्निस्तमौपासनमित्या
चक्षतेपाणिग्रहणादित्येके॥नित्योधार्योनुगतोविमंथ्यइति॥इदंजातारणिपक्षे॥अन्यथा
मंथनासंभवात्॥ब्रह्मयज्ञेविशेषमाह॥ तत्रैवजैमिनिः॥ अनुपाकृतवेदस्यक
र्तव्योब्रह्मयज्ञकः॥वेदस्थानेतुसावित्रीगृह्यतेतत्समीपतइति॥येषांतद्दिनएववेदारंभस्तेषां
नेदमितिदिक्॥ अथब्रह्मचारिधर्माः॥याज्ञवल्क्यः॥ मधुमांसांजनोच्छिष्टशुक्त
स्त्रीप्राणिहिंसनं॥भास्करालोकनाश्लीलपरिवादादिवर्जयेत्॥मनुः॥ अभ्यंगमंजनंचाक्ष्णो
रुपानच्छत्रधारणं॥वर्जयेदितिशेषः॥ पारिजाते॥कौर्म्मे॥नादर्शंचैवबीक्षेतनाच
रेद्दंतधावनं॥गुरूच्छिष्टंभेषजार्थंप्रयुंजीतनकामतः॥एतन्निषिद्धमध्वादिविषयम्॥अन्य
स्यगुरूच्छिष्टस्यसर्वदाप्राप्तेः॥सचेद्व्याधीयीतकामंगुरोरुच्छिष्टंभेषजार्थंसर्वंप्राश्नीयादिति
॥वसिष्ठोक्तेः॥ज्येष्ठभ्रातुरित्यपिज्ञेयम्॥पितुर्ज्येष्ठस्यभ्रातुरुच्छिष्टंभोज्यमित्यापस्तंबोक्तेः॥

गुरुपुत्रेनुस्मृत्यर्थसारे उक्तम्।गुरुवद्गुरुपुत्रःस्यादन्यत्रोच्छिष्टभोजनात्।।प्रचेताः।।तांबूलाभ्यंजनं
चैवकांस्यपात्रेचभोजनं।।पतिश्चब्रह्मचारीचविधवाचविवर्जयेत्।।यमः।।मेखलामजिनंदंडमुप
वीतंचनित्यशः।।कौपीनंकटिसूत्रंचब्रह्मचारीतुधारयेत्।।अंगीयवनंभैक्ष्यचर्यामधःशय्यांगुरो
र्हितं।।कुर्यादितिशेषः।।मेखलामाहाश्वलायनः।।तेषांमेखलामौंजीब्राह्मणस्य धनुर्ज्याक्षत्रि
यस्यावीवैश्यस्येति।।आचार्यः।।त्रिवृतामेखलाकार्यात्रिवारंस्यात्समावृता।।तद्वयपक्षपःका
र्याःपंचवासप्तवापुनः।।मनुः।।मौंजीत्रिवृत्समाश्लक्ष्णाकार्याविप्रस्यमेखला।।त्रिवृताग्रंथिनैके
नत्रिभिःपंचभिरेववा।। अथदंडाः।।मनुः।। ब्राह्मणोबैल्वपालाशौक्षत्रियोवाटखा
दिरौ।।पैप्पलौदुंबरौवैश्योदंडानर्हतिधर्मतः।।एषामभावेगौतमः।।यज्ञियोवासर्वेषांमूर्द्धलला
टनासाग्रप्रमाणाइति।। अजिनमाहाश्वलायनः।। अहतेनवाससासंवीतमैणे
येनचाजिनेनब्राह्मणोरौरवेणक्षत्रियआजेनवैश्यमिति।।यद्यप्यैणेयशब्देनमृगीचर्मैवोच्यते
एणपाढमितिपाणिनिस्मृतेः।।ऐणेयमैणपाश्चर्मांद्यमेणस्यैणमुभेत्रिष्वित्यमरकोशाच्च।। त
थापिकृष्णरुरुबस्ताम्याजिनानीतिशंखोक्तेःसर्वेषांवारौरवमितिशंखोक्तेःचमृगचर्मणासह
मृगीचर्मणोविकल्पोज्ञेयः।।वस्त्राजिनयोस्तुविकल्पःकार्पासंवाविकृतमितिगौतमोक्तेः
अथयज्ञोपवीतम्।।मनुः।।कार्पासमुपवीतंस्याद्विप्रस्योर्ध्ववृतंत्रिवृत्।।मदनपारिजातेदेवलः।।
कार्पासक्षौमगोवालशणवल्कतृणादिकं।।यथासंभवतोधार्यमुपवीतंद्विजातिभिः।।शुचौदे
शेशुचिःसूत्रंसंहतांगुलिमूलके।।आवेष्ट्यषण्णवत्यातत्त्रिगुणीकृत्ययत्नतः।।अब्लिंगकैस्त्रिम
न्त्रैस्तत्प्रक्षाल्योर्ध्ववृतंत्रिवृत्।।अप्रदक्षिणमावृत्यसावित्र्यात्रिगुणीकृतम्।।ततःप्रदक्षिणाव
र्तंसमंस्यान्नवसूत्रकं।।त्रिरावेष्ट्यदृढंबद्धाब्रह्मविष्णुशिवान्नमेत्।।तन्नवतंतुकार्यंसावित्र्या।
त्रिगुणंकुर्यान्नवसूत्रंतुनश्वेदितितेनैवोक्तेः।।भृगुः।।वामावर्त्तंवलितंत्रिगुणंकृत्वादक्षिणा
वर्त्तंवलितंत्रिगुणंकार्यं।।सएकस्तंतुः।।एवंत्रितंतुकमित्यर्थः।।छंदोगपरिशिष्टे।।त्रिवृदूर्ध्व
वृतंकार्यंतंतुत्रयमधोवृतं।।त्रिवृतंचोपवीतंस्यात्तस्यैकोग्रंथिरिष्यते।।ऊर्ध्ववृतंदक्षिणाव
र्त्तमूर्ध्वंकृत्वावलितं।।कात्यायनः।।पृष्ठदेशेचनाभ्यांचधृतंयद्विंदतेकटिं।।तद्धार्यमुपवीतं
स्यान्नातिलंबंनचोच्छ्रितम्।।वसिष्ठः।।नाभेरूर्ध्वमनायुष्यमधोनाभेस्तपःक्षयः।।तस्मान्नाभि
समंकुर्यादुपवीतंविचक्षणः।। पारिजातेदेवलः।। उपवीतंवटोरेकंद्वेतथेतरयोः
स्मृते।।एकमेवयतीनांस्यादितिशास्त्रस्यनिश्चयः।।सएव।।बहूनिचायुष्कामस्य।।तत्रमंत्रमाह
सएव।यज्ञोपवीतमितिवाव्याहृत्यावापिधारयेत्।। हेमाद्रौ।। यज्ञोपवीतेद्वेधार्ये
श्रौतेस्मार्तेचकर्मणि।।तृतीयमुत्तरीयार्थेवस्त्राभावेतदिष्यते।।देवलः।।सावित्र्याद
शकृत्वोऽद्भिर्मंत्रिताभिस्तदुक्षिपेत्।।विच्छिन्नंवाप्यधोयातंभुक्त्वानिर्मितमुत्सृजेत्।।मनुः।।मेख
लामजिनंदंडमुपवीतंकमंडलुं।।अप्सुप्राश्यविनष्टानिगृह्णीतान्यानिमंत्रवत्।।अर्थेनष्टोपेमप्य
यष्टिवन्।।मनुः।।अकृत्वाभैक्ष्यचरणमसमिध्यचपावकं।।अनातुरःसप्तरात्रमवकीर्णिव्रतं
चरेत्।।अमत्याआपद्यापागेतुयाज्ञवल्क्यः।।भैक्ष्याग्निकार्येत्यक्त्वातुसप्तरात्रमनातुरः।।का

मावकीर्णीरत्नाभ्यांजुहुयादाज्यमितीदं॥उपस्थानंततःकुर्य्यात्समासिंचत्वनेनतु॥मंत्रास्तु॥
॥मिताक्षरायांज्ञेयाः॥सकृल्लोपेतुऋग्विधाने॥मानस्तोकेजपेन्मंत्रंशतसंख्यंशिवालये॥अ
ग्निकार्य्यंविनाभुंक्तेनपापंब्रह्मचारिणः॥ स्मृत्यर्थसारेतु॥ संध्याग्निकार्य्यलोपे
स्नात्वाष्टसहस्रंजपः॥भिक्षालोपेष्टशतं॥अभ्यासेद्विगुणंपुनःसंस्कारश्चेत्युक्तं॥आशार्केसं
वर्त्तः॥यःसंध्यांचैवनोपास्तेअग्निकार्यंयथाविधि॥गायत्र्यष्टसहस्रंतुजपेत्स्नात्वासमाहितः॥अ
ग्निकार्य्यंसंध्याद्वयेकार्य्यम्॥अग्निकार्य्यंततःकुर्य्यात्संध्ययोरुभयोरपीति॥ याज्ञवल्क्योक्तेः
सायमेववा॥सायमेवाग्निमिन्धीतेत्येकेइतिलौगाक्षिणोक्तेः॥ पारिजातेशातातपः॥
ब्रह्मचारीतुयोश्नीयान्मधुमांसंतथैवच॥प्राजापत्यंचरेत्कृच्छ्रंव्रतशेषंसमापयेत्॥ऋग्विधाने॥
सवोधियाजपेन्मंत्रलक्षंचैवशिवालये॥ब्रह्मचारीस्वधर्मस्थस्त्यक्तंचेत्स्वर्गमेवतत्॥ स्त्रीसंगमे
तुमनुः॥ अवकीर्णीतुकाणेनगर्दभेनचतुष्पथे॥स्थालीपाकविधानेनयजेद्दैनिर्ऋतिंनि
शि॥विस्तरस्तुमिताक्षरादौज्ञेयः॥उपवीतनाशेतुहारीतः॥मनोव्रतपतीभिश्चतस्रआज्याहुती
र्हुत्वापुनःप्रतीयात्॥ तत्रैवमरीचिः॥ ब्रह्मसूत्रंविनाभुंक्तेविण्मूत्रंकुरुतेथवा
॥गायत्र्यष्टसहस्रेणप्राणायामेनशुध्यति॥मनुः॥भोशब्दंकीर्त्तयेदंतेस्वस्यनाम्नोऽभिवादने॥
आयुष्मान्भवसौम्येतिवाच्योविप्रोभिवादने॥अकारश्चास्यनाम्नोंतेवाच्यःपूर्वाक्षरःप्लुतः॥श
र्मन्नितिनकारांतस्वरइत्यर्थः॥अभिवादनप्रत्यभिवादनादौविशेषः॥स्मृत्यर्थसारपारिजाता
दौज्ञेयः॥ यमः॥ आपातनपिकानीयांसंसंध्यायामभिवादयेत्॥विनाशिष्यंचपुत्रंचदौहित्रं
दुहितुःपतिं॥ अथपुनरुपनयनं॥पारिजातेशातातपः॥ लशुनंगृंजनंजग्ध्वाप
लांडुंचतथाशुनं॥उष्ट्रमानुषकेभाश्वरासभीक्षीरभोजनात्॥उपायनंपुनःकुर्यात्तप्तकृच्छ्रंचरे
त्सुहृदिति॥ हेमाद्रौवृद्धमनुः॥ जीवन्यदिसमागच्छेद्घृतकुंभेनिमज्यच॥उद्धृत्यस्ना
पयित्वास्यजातकर्मादिकारयेत्॥ तत्रैवपाद्मे॥ प्रेतशय्याप्रतिग्राहीपुनःसंस्कारम
र्हति॥चंद्रिकायांबौधायनः॥ सिंधुसौवीरसौराष्ट्रान्तथाप्रत्यंतवासिनः॥अंगवंगकलिंगां
श्चगत्वासंस्कारमर्हति॥ हेमाद्रौप्रायश्चित्तकांडेवृद्धगौतमः॥खरमुष्ट्रंचमहिषमनड्वाहम
जंतथा॥वस्तमारुह्यशुख्वजःक्रोशेचांद्रंविनिर्द्दिशेत्॥ मार्कंडेयः॥ खरमारुह्यविप्र
स्तुयोजनंयदिगच्छति॥तत्पश्चात्कृच्छ्रत्रयंप्रोक्तंशरीरस्यविशोधनं॥पुनर्जन्मप्रकुर्वीतघृतगर्भ
विधानतः॥ मदनरत्नेमिताक्षरायांच स्नानमात्रमुक्तम्॥ मनुः अ
ज्ञानात्प्राश्यविण्मूत्रंसुरासंसृष्टमेवच॥पुनःसंस्कारमर्हंतित्रयोवर्णाद्विजातयः॥ मिता
क्षरायांपराशरः॥ यःप्रत्यवसितोविप्रःप्रव्रज्यातोविनिर्गतः॥अनाशकनिवृत्तश्चगार्ह
स्थ्यंचेच्चिकीर्षति॥सचरेत्त्रीणिकृच्छ्राणित्रीणिचांद्रायणानिच॥जातकर्मादिभिःसर्वैःसं
स्कृतःशुद्धमाप्नुयात्॥बौधायनसूत्रे॥ अथोपनीतस्यव्रतानिभवंतिनामस्योच्छिष्टंभुं
जीतान्यत्रपितृज्येष्ठाभ्यांनस्त्रियासहभुंजीतमधुमांसश्राद्धसूतकान्नानिदशाहसंधिनीक्षीरं
छत्राकनिर्यासौविलायनंगणान्नंगणिकान्नमित्येतेषुपुनःसंस्कारःप्रतिषिद्धदेशगमनमित्ये

केचामथाप्युदाहरंति॥सुराष्ट्रंसिंधुसौवीरमवंतींदक्षिणापथं॥एतानिब्राह्मणोगत्वापुनःसं
स्कारमर्हति॥अथपुनःसंस्कारंव्याख्यास्यामो देवयजनप्रभृत्याग्निमुखान्कृत्वापालाशींसमिध
माज्येनाक्तामाधायवाचयति॥पुनस्त्वादित्यारुद्रावसवः॰ कामाःस्वाहेत्यथाज्यस्यप्रायश्चित्तेजु
होतियन्मआत्मनोमिन्दाभूत्पुनरग्निश्चक्षुरदादिति॥द्वाभ्यामथपक्वाज्जुहोतिसप्ततेअग्ने॰घृतेन
स्वाहेत्यथाआहुतीरुपजुहोतियेनदेवाःपवित्रेणेतितिसृभिरनुच्छंदसंस्विष्टकृत्प्रभृतिसिद्धमा
धेनुवरप्रदानात्‌अथापरमापरिधानात्कृत्वापालाशींसमिधमाधायाथाज्यस्यप्रायश्चित्तेजुहोत्य
व्याहृतीर्जुहोति॥ अथाप्यपरेब्राह्मणवचनादेवसावित्र्याशतकृत्वोघृतमभिमंत्र्यप्राश्यकृतं
प्रायश्चित्तंभवति॥गुरोर्वाप्युच्छिष्टंभुंजीतेत्याप्युदाहरंति॥वपनंदक्षिणादानंमेखलादंडमा
जिनंभैक्ष्यचर्याव्रतानिचनिवर्त्तंतेपुनःसंस्कारकर्मणीति॥ आश्वलायनगृह्ये॥ य
थोपेतपूर्व्वस्येमादिनापुनः॥संस्कारउक्तः॥तथा॥पित्रादिव्यतिरेकेणब्रह्मचारिणःप्रेतकर्म
करणेपुनरुपनयनमित्यपरार्कादयः॥त्रिस्थलीसेतौ॥कर्मनाशाजलस्पर्शात्करतोयावि
लंघनात्‌॥गंडकीबाहुतरणात्पुनःसंस्कारमर्हति॥ गौडास्तु॥ करतोयाजलस्पर्शा
त्कर्मनाशाविलंघनादितिपठंति॥तन्न॥दानधर्मेषुकरतोयास्नानेप्राशस्त्योक्तेः॥करतोये
सदानीरेसरिच्छ्रेष्ठेतिविश्रुते॥आप्लावयस्वमेनित्यंपापंहरकरोद्भवे इतिस्मृतिदर्पणचंद्रिका
लिखितस्नानमंत्राच्च॥ पाराशरः॥ अजिनंमेखलादंडोभैक्ष्यचर्याव्रतानिच॥
निवर्त्तंतेद्विजातीनांपुनःसंस्कारकर्मणि॥ हरदत्तस्तु॥ यएकंवेदमधीत्यान्यंवे
दमध्येतुमिच्छतितस्यपुनरुपनयनंतेनप्रतिवेदमुपनयनंकर्त्तव्यमित्याह॥अन्येतेनमन्यंते॥
सर्वेभ्योवैवेदेभ्यःसावित्र्यनूच्यतइत्यापस्तंबोक्तेः॥ तद्विधिःकारिकायां॥ वे
दांतरमधीत्यैवऋग्वेदंयेत्वधीयते॥उपनीतिरियंतेषामलंकरणवर्जिता॥ यद्वैतदुपनीत
स्यप्रायश्चित्तंयदाभवेत्‌॥कृताकृतंचवपनंमेधाजननमेवच॥मेधाजननसद्भावेव्रतचर्या
भवेदिह॥अनुप्रवचनीयंचतदभावेद्वयंनहि॥परिदानंनकार्यंस्यात्रिमितानतरंत्विदम्‌॥
पूर्वस्यावाचयेत्स्थानेतत्सवितुर्वृणीमहे इति॥ यत्तुहारीतः॥ द्विविधाःस्त्रियःब्रह्मवा
दिन्यःसद्योवध्वश्च॥तत्रब्रह्मवादिनीनामुपनयनमग्नींधनंवेदाध्ययनंस्वगृहेचभैक्ष्यचर्येति
॥सद्योवधूनामुपनयनंकृत्वाविवाहःकार्यइति॥तद्युगांतरविषयम्‌॥पुराकल्पेतुनारीणां
मौंजीबंधनमिष्यते॥अध्यापनंचवेदानांसावित्रीवाचनंतथेतियमोक्तेः॥ अथा
नध्यायाः॥पारिजाते॥हारीतः॥प्रतिपत्सुचतुर्द्दश्यामष्टम्यांपर्वणोर्द्वयोः॥श्वोनध्यायेचश
र्वर्य्यांनाधीयीतकदाचन॥ नारदः॥ शयनेविषुवेचैवशयनेबोधनेहरेः॥अन
ध्यायस्तुकर्त्तव्योमन्वादिषुयुगादिषु॥ निर्णयामृते॥ चातुर्मास्यद्वितीयासु
मन्वादिषुयुगादिषु॥ अनध्यायस्तुकर्त्तव्योयाचसोपपदातिथिः॥ गर्गः॥ शुचावूर्जे
तपस्येचयाद्वितीयाविधुक्षये॥चातुर्मास्यद्वितीयास्ताःप्रवदंतिमनीषिणःस्मृत्यर्थसारेपि
॥आषाढीकार्त्तिकीफाल्गुनीसमीपस्थद्वितीयासुचेति॥मनुः॥उपाकर्मणिचोत्सर्गेत्रिरा

त्रक्षपणांस्मृतं॥अष्टकासुमहोरात्रमृत्वंतासुचरात्रिष्विति॥उत्सर्गेतुमनूक्तपक्षिण्यहोरात्राभ्यांअह
स्विकल्पइतिविज्ञानेश्वरः॥अष्टकाशब्देनसप्तम्यादित्रयंज्ञेयं॥तिस्रोष्टकास्त्रिरात्रमंत्यामेकेइति
गौतमोक्तेः॥ऋत्वंतास्वितिसौरऋत्वंतासु॥चांद्रांतस्यपर्वत्वेनैवनिषेधसिद्धिरितिसर्वेतुनाएष
रा:॥एतेनित्या॥नैमित्तिकानप्याह॥ याज्ञवल्क्यः॥अहंप्रेतेष्वनध्यायःशिष्यर्त्विग्गुरुबं
धुषु॥उपाकर्मणिचोत्सर्गेस्वशाखाश्रोत्रियेतथा॥संध्यागर्जितनिर्घातभूकंपोल्कानिपातने॥समा
प्यवेदंद्युनिशमारण्यकमधीत्यच॥पंचदश्यांचतुर्दश्यामष्टम्यांराहुसूतके॥ऋतुसंधिषुभुक्त्वावा
श्राद्धिकंप्रतिगृह्यच॥पशुमंडूकनकुलश्वाहिमार्जारमूषकैः॥कृतेंतरेत्वहोरात्रंशक्रपातेतथो
च्छ्रये॥अहरोषुनिशोक्तावपियत्रास्तेअहमित्युक्तंप्राक्॥स्मृत्यर्थसारेतु॥रात्रौग्रहेतिस्रोरात्रीः
॥दिवाचअहमित्युक्तम्॥ऋतुःसौरः॥भुक्तेत्युत्सवविषयं॥ऊर्ध्वंभोजनादुत्सवेइतिगौतमोक्तेः
श्राद्धिकमत्रैकोद्दिष्टभिन्नम्॥तत्रतुअहमितिमनुः॥स्मृत्यर्थसारेचैवं॥यत्तु॥पश्चाधंतरायेत्वह
मुपवासोविप्रवासश्चेतिगौतमोक्तम्॥तत्प्रथमाध्ययने॥ याज्ञवल्क्यः॥ श्वक्रोष्टु
गर्दभोलूकसामवाणार्त्तनिस्वने॥अमेध्यशवशूद्रांत्यश्मशानपतितांतिके॥देशेष्वशुचावात्म
निचविद्युत्स्तनितसंप्लवे॥भुक्त्वार्द्रपाणिरंभोंतरर्द्धरात्रेतिमारुते॥पांशुप्रवर्षेदिग्दाहेसंध्यानीहा
रभीतिषु॥धावतःपूतिगंधेचशिष्टेचगृहमागते॥खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे॥सप्त
त्रिंशदनध्यायानेतांस्तात्कालिकान्विदुः॥वाणोवंशः॥शततंतुवीणेतिहरदत्तः॥अमेध्याःसू
तिकादयः॥स्तनितंगर्जितं॥वर्षातोन्यत्रगर्जितवृष्टिविद्युतांयोगएवआकालिकः॥वर्षासुतात्का
लिकइतिनारायणः॥ऐतरेयोपनिषदिअपर्तौवर्षेत्रिरात्रमिति॥मृगादिज्येष्ठांतंवर्षर्तुः॥तद्विना
वर्षादौत्रिरात्रमनध्यायइतिवेदभाष्येउक्तम्॥संध्यागर्जितेतुहारीतः॥सायंसंध्यास्तनितेरात्रिःप्रा
तःसंध्यास्तनितेहोरात्रम्॥रात्रौविद्युत्पररात्रावविधिः॥विद्युतिनक्तंचापररात्रादितिगौतमोक्तेः
दिनतृतीयांशोत्तरंतुविद्युतिसर्वरात्रमित्याहसएव॥त्रिभागादिप्रवृत्तौसर्वमिति॥अर्द्धरात्रेमध्यया
मद्वयेइतिविज्ञानेश्वरः॥मध्यदंडचतुष्टयेइतिनिर्णयामृते॥मनुः॥नविवादेनकलहेनसेनायांनसं
गरे॥नभुक्तमात्रेनाजीर्णेनवमित्वानसूतके॥रुधिरेचस्रुतेगात्राच्छस्त्रेणचपरिक्षते॥कौर्म्मे॥
श्लेष्मांतकस्यछायायांशाल्मलेर्मधुकस्यच॥कदाचिदपिनाध्येयंकोविदारकपित्थयोः॥मनु
॥शयानःप्रौढपादश्चकृत्वाचैवावसक्थिकाम्॥नाधीयीतामिषंजग्ध्वासूतकान्नाद्यमेवच॥
प्रौढपादःपादोपरिपाददाता॥आसनारूढपादोवेतिहरदत्तः॥सोयपद्मास्वपिप्राग्युक्तो॥स्मृत्य
र्थसारे॥श्रवणाद्वादशीमहाभरण्योःप्रेतद्वितीयायांरथसप्तम्यामाकाशेशवदर्शनेचाहोरात्रम्॥
त्रसपिंडेगुरौत्रिरात्रम्॥आचार्येउपाध्यायेचपक्षिणी॥आचार्यभार्यापुत्रशिष्येष्वहोरात्रं॥अ
ग्न्युत्पातेगोविप्रमृतौत्रिरात्रयः॥अयनेविषुवेचपक्षिणी॥आकालवृष्टौच॥आरण्यमार्जारस
र्पनकुलपंचनखादेरंतरागमनेत्रिरात्रम्॥आरण्यश्वशृगालादिवानररजकादौद्वादशरात्रं
खरवराहोष्ट्रचांडालसूतिकोदक्याशवादौमासम्॥गोगवयाजानास्तिकादौत्रिमासं॥शशमे
षश्वपाकादौषण्मासम्॥गजगंडसारससिंहव्याघ्रमहापातकितनघ्नादावब्दमनध्यायः॥शो

मनदिनेचानध्यायः॥विवाहप्रतिष्ठोद्यापनादिष्वासमाप्तेः॥सगोत्राणामनध्यायः॥उदयेस्तमये
वापिमुहूर्त्तत्रयगामियत्॥तद्दिनंतदहोरात्रमानध्यायविदोविदुः॥केचिदाहुःकचिद्देशेयावत्र
ह्निननाडिकाः॥तावदेवत्वनध्यायोनतस्मिन्दिनांतरे॥प्रदोषंत्वाहप्रजापतिःषष्ठीचद्वादशी
चैवअर्द्धरात्रोननाडिका॥प्रदोषेनत्वधीयीततृतीयानवनाडिका॥ निर्णयामृतेगर्गः
रात्रौयामत्रयादर्वाक्सप्तमीवात्रयोदशी॥प्रदोषःसतुविज्ञेयःसर्वविद्याविगर्हितः॥रात्रौन
वसुनाडीषुचतुर्थ्यांयदिदृश्यते॥प्रदोषःसतुविज्ञेयोवेदाध्ययनगर्हितः॥कौर्मेअनध्यायास्तु
नांगेषुनेतिहासपुराणयोः॥नधर्मशास्त्रेष्वन्येषुपर्वण्येतानिवर्जयेत्॥ शौनकः नि
त्यजपेचकाम्येचक्रतौपारायणेपिच॥नानध्यायोस्तिवेदानांग्रहणे
गृह्णेस्मृतः॥ इत्यनध्यायाः॥ अथमहानाम्न्यादिव्रतम्॥ श्रीधरः॥
तिथिनक्षत्रवारांशवर्गोदयनिरीक्षणम्॥चौलवत्सर्वमाख्यातंसगोदानव्रतेषुच॥एतेषां
लोपेशौनकः॥व्रतानिविधिनाकृत्वास्वशाखाध्ययनंचरेत्॥अकृत्वाभ्यस्यतेयेनसपापीवि
धिघातकः॥प्रत्येकंकृच्छ्रमेकैकंचरित्वाज्याहुतीःशतम्॥हुत्वाचैवतुगायत्र्यास्नायादित्या
हशौनकः॥स्मृत्यर्थसारेतु॥त्रीन्षड्द्वादशवाकृच्छ्रान्कृत्वापुनर्व्रतंचरेदित्युक्तम्॥ अथ
समावर्त्तनम्॥ सुरेश्वरः भौमभानुजयोर्वारेनक्षत्रेचव्रतोदिते॥ताराचंद्रविशुद्धौचस्यात्समावर्त्तन
क्रिया॥बौधायनसूत्रेतुरोहिण्यांतिष्ये उत्तरयोःफाल्गुन्योर्हस्तेचित्रायांमैत्रेविशाखयोर्वास्नायादि
त्युक्तम्॥ वसिष्ठः॥ स्नानंमध्यान्हकालेतुहिरण्यंकारयेच्छुभं श्वोन्हे तदभावेतुकुर्यात्
स्नानंयथाविधिः॥सर्वऋतवोविवाहस्येतिसूत्राद्यदादक्षिणायनेविवाहस्तदासमावर्त्तनमपित
त्रैव॥अन्यथोदगयनेसमावर्त्तने अनाश्रमीनतिष्ठेतेतिविरोधः॥स्यादित्युक्तंसुदर्शनभाष्ये॥एत
च्चब्रह्मचारिव्रतलोपप्रायश्चित्तंकृत्वाकार्यं॥ तदाहबौधायनः॥ शौचसंध्यादर्भभि
क्षाग्निकार्य्यरहितःकौपीनोपवीतमेखलादंडाजिनाधारिणोदिवास्वापच्छत्रपादुकास्रग्विधा
रणोद्वर्त्तनानुलेपनांजनद्यूतनृत्यगीतवाद्यादिभिर्व्रतीब्रह्मचारीकृच्छ्रत्रयंचरेन्महाव्याहृतिहो
मंचकुर्य्यात्॥समावर्त्तनोत्तरंसर्वमृतानांत्रिरात्रमाशौचंकार्य्यम्॥आदिष्टीनोदकंकुर्य्यादाव्रतस्य
समापनात्॥समाप्तेतूदकंदत्वात्रिरात्रमशुचिर्भवेदितिमनूक्तेः॥आदिष्टीब्रह्मचारीतिविज्ञानेश्वरः
॥ब्रह्मचर्येयदिकश्चिन्मृतस्तदात्रिरात्रमध्येविवाह कार्य्योन्यथानेतिसिध्यतिजननेतुसत्यपि
नात्रैरात्रं॥तत्रातिक्रांताशौचाभावादुदकंदत्वेतिवचनाच्चेतिदिक्॥तत्रापिविकल्पः॥पितर्य्या
पिमृतेनैषांदोषोभवतिकर्हिचित्॥आशौचंकर्मणोंतेस्यात्त्र्यहंवाब्रह्मचारिणामितिछंदो
गपरिशिष्टात्॥स्नानकव्रतानामाहव्यासः॥यज्ञोपवीतद्वितयंसोदकंचकमंडलुम्॥छत्रंचोष्णीष
ममलंपादुकेचाप्युपानहौ॥रौक्मेचकुंडलेवेदंकृत्तकेशनखःशुचिः॥वेदोदर्भवटुः॥मनुः॥उपा
नहौचवासश्चधृतमन्यैर्नधारयेत्॥उपवीतमलंकारंस्रजंकरकमेवच॥अमान्यपिवृद्धच यंथ
स्ःमादिभ्योत्तेयानि॥ अथक्षुरिकाबन्धः॥ज्योतिर्निबंधेनारदः॥क्षुरिकाबंधनंवक्ष्येनृपा
णांप्रागुरग्रहात्॥विवाहोक्तेषुमासेषुशुक्लपक्षेप्यनस्तगे॥जीवेशुक्रेचभूपुत्रेचंद्रताराबला

वोसैद्वाहादीनामस्माद्वचनाद्प्रामाण्यमित्युक्तम्॥ बृहस्पतिरपि॥ उद्वहेतैव सप्तमीं पैत्मा
तुलस्य सुतां द्विजैः॥ मध्यादाश्च नराः सर्वे व्यभिचाररताः स्त्रियः॥ उत्तरे मद्यपाः सर्वे स्पृश्या
न्दृणां रजस्वला॥ इत्यनाचारत्वमाह॥ अत एव हेमाद्रौ मात्स्ये॥ कर्णाटकादीनां तत्कारिणां
श्राद्धे निषेधः॥ दीपदेवेनापि लिखितं ब्राह्मे॥ यत्र मातुलजोद्वाही यत्र वैदस्वलीपतिः॥ श्राद्धं
न गच्छेत्तद्विप्रस्तं तत्प्रदत्तं च निरामिषमिति॥ तस्मान्मातृतः पंच पितृतः सप्त चत्यजेदिति सि
द्धं॥ संबंधविवेके सुमंतुः॥ ब्राह्मणानामेकपिंडस्वधानामादशमाद्धर्मो विच्छित्तिर्भवति॥ आ
सप्तमाद्रिक्थविच्छित्तिर्भवति॥ आतृतीयात्पिंडविच्छित्तिरन्यथापिंडार्थी चन्वियाविच्छेदाद्ब्र
ह्महा तुल्यो भवति॥ अस्यार्थमाह॥ शूलपाणिः॥ जीवत्पित्रादित्रिकस्य व
द्धप्रपितामहादयस्त्रयः श्राद्धदेवतात्वात्पिंडभाजो भवंति॥ तदूर्ध्वं त्रयो नवपुरुषपर्यंता लेप
भाजः॥ श्राद्धकर्त्ता च दशमः॥ इति॥ दशमादूर्ध्वं सापिंड्यनिवृत्तिः॥ दशमादित्युपलक्षणम्॥
तेन पितृपितामहजीवने नवपुरुषपर्यंतं पितृजीवने चाष्टपुरुषपर्यंतं सापिंड्यमिति ज्ञेय
म्॥ अपुत्रधनग्रहणे सन्निहिताभावे सप्तपुरुषपर्यंतमधिकारः॥ धनग्राहिणामारभ्य तृती
यः पौत्रस्तदूर्ध्वं श्राद्धविच्छेदः॥ अन्यथा धनहारित्वे पुत्रश्राद्धापकरणे ब्रह्महेत्यर्थः॥ आतृ
तीयादित्यनूढकन्याविषयम्॥ अप्रत्तानां तु स्त्रीणां त्रिपुरुषी विज्ञायत इति वसिष्ठोक्तेः॥ एतच्चाशौचवि
षयं सापिंड्यं न तु विवाहादौ॥ तत्र पूर्वोक्तवचनैः पंचमत्वसप्तमत्वनियमादिति मेधातिथिप्रमुखादा
क्षिणात्याः॥ वाग्दानोत्तरमेतदिति शुद्धिविवेकः मातृकुलविषयं कानीनकन्याविषयं चैतत्॥ अ
न्यथा अप्रत्तानां तथा स्त्रीणां सापिंड्यं साप्तपौरुषं॥ प्रत्तानां भर्तृसापिंड्यं प्राह देवः प्रजापतिरिति॥
कौर्मेण विरोधः स्यादिति रत्नाकरस्मृतितत्वादिगौडग्रंथाः॥ युक्तं चैतत्॥ अन्यथा कर्मोपत्नेऽपुरु
षत्रयपर्यंतमेव सूतकं स्यान्नोर्ध्वम्॥ सापत्नमातामहकुले त्वाह मिताक्षरायां शंखः॥ यद्येकजा
ता बहवः पृथक्क्षेत्राः पृथक्जनाः॥ एकपिंडाः पृथक्शौचाः पिंडस्त्वावर्त्तते त्रिषु॥ पृथक्क्षेत्राः
भिन्नजातीयस्त्रीषु जाताः पृथग्जनाः सजातीयभिन्नमातृषु जाताः॥ अत्र त्रिपुरुषं सापिंड्यमि
ति विज्ञानेश्वरो व्याचख्यौ॥ पृथ्वीचंद्रोदये सापिंड्यदीपिकायां चैवम्॥
मदनपारिजाते तु पृथक्क्षेत्राः भिन्नमातृजाः पृथग्जनाः भिन्नजातीयाः॥ एतद्विजातीयसापत्नमा
तृकुलविषयम्॥ सवर्णसापत्नमातृकुले चतुःपुरुषं सापिंड्यं॥ पंचमीं सप्तमीं चैव मातृतः पितृ
तस्तथेति॥ वसिष्ठोक्तेः॥ सप्तमीमिति ब्राह्मणादीनां सक्षत्रियादिदारेष्वपि पितृ
कुलविषयं चेत्युक्तम्॥ तत्स्वकपोलकल्पितत्वाद्ग्रंथान्तरविरोधाच्च निर्मूलम्॥ पितृपत्न्यः सर्वा मा
तरस्त्युक्त्वा सुमंतुना तद्भन्यानि भागिनेयानीति पृथक्निषेधाच्च॥ अन्यथा सपिंडत्वेन निषेधा
त्॥ सपत्नमातुलत्वादिनिर्देशो व्यर्थः॥ अत एव तेन स्मृतिकौमुद्यां सवर्णसापत्नमातामहकु
लपरत्वेन तथैव शंखवचनं व्याख्यातम्॥ तेन वासिष्ठं पंचमीं सप्तमीमतीत्येत्याख्येयम्॥ त
स्मात्त्वेवमास्यायुक्ता प्रयोगरत्ने भट्टैः॥ स्मृतितत्वादिगौडग्रंथेषु च सपत्नमातामहकुले पा
वदुक्तं वाचनिकमेव सापिंड्यमुक्तम्॥ यथाह सुमंतुः॥ मातृपितृसंबंधादासप्तमाद्विवाहो भवति

आपंचमात्स्त्रियां॥ पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तत्स्वसारो मातृष्वसारस्तद्दुहितरश्च
भगिन्यस्तदपत्यानि भागिनेयान्यन्यथा संकरकारिणः स्युरित्याध्यायपितुरितदेवति॥ आपंचमा
दिति [illegible] निरवच
॥ब्रह्मदातुर्गुरोश्चैव संततिः प्रतिषिध्यते॥ तद्भगिनीमातृष्वसारं तित्याकरेन पठितम्॥ क
विद्वचनाद्विवाहः॥ यथाश्वलायनपरिशिष्टे अविरुद्धसंबंधामुपयच्छेत् उक्तो विरुद्धसंबंधः स्व
यमेवोक्तः॥ यथा भार्यास्वसुर्दुहिता पितृव्यपत्नी स्वसा चेति॥ बौधायनः॥ मातुःसपत्न्या भगि
नीं तत्सुतां च विवर्जयेत्॥ पितृव्यपत्न्या भगिनीं तत्सुतां च विवर्जयेत्॥ अतो मातृष्वसुः सापत्न
पुत्रकन्याप्यविवाह्या॥ सापत्नमातृकुलजापीति मदनपारिजातोक्तेरिति केचित्॥ केचित्तु अ
शेषभ्रातापितुः स्मरतीमनूक्तेस्तत्पत्न्या मातृत्वात्तत्पितुर्मातामहत्वात्ज्येष्ठभ्रातृपत्नीभगिनीत्व
वाह्या॥ तथा उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पितेति मनूक्तेर्गुरुणा त्रिपुरुषं सापिंड्यं॥
सख्यापि निर्वाह्यः॥ अत एव सा कन्या नोद्वाह्याः॥ गायत्र्या उपदेष्टुश्च कन्यां नैवोद्वहेद्द्विजः॥ गुरो
श्च कन्यां शिष्यो वा तत्संतत्यापि नेष्यते॥ पुरुषत्रयपर्यंतभ्रात्रादेर्नैतदिष्यते॥ वाक्संबंधव
तां तु स्निहसंबंधभागिनां॥ विवाहोऽत्र नकर्तव्यो लोकगर्हाप्रसक्तितः इति वचनाच्चेत्याहुः॥ त
त्र मूलं चिंत्यम्॥ दत्तकविषये तु अनंते॥ तत्र गौतमः ऊर्ध्वं सप्तमात्पितृबंधुभ्यो बीजिनश्च मातृ॥
बंधुभ्यः पंचमादिति बंधुग्रहणाज्जदत्तकमात्रपरमिदं किंतु संतानेपि॥ एतत्क्षेत्रजादिसर्व
ग्रामुख्यायणपरमिति हरिदत्तः॥ अत्र स्मृतिचंद्रिका॥ नियोगा
द्युत्पादयितुस्तस्माद्बीजिनो पूर्ध्वं सप्तमादित्यर्थ इति॥ दत्तकस्य जनकविषयमेतदिति सापिंड्य
मीमांसायां तेन दत्तस्य जनककुले साप्तपौरुषं जननीकुले पांचपौरुषं सापिंड्यम्॥ दत्तकौना
दिपुत्राणां बीजवप्तुः सपिंडता॥ सप्तमी पंचमी चैव गोत्रित्वं पालकस्य चेति वृहन्मनूक्तेः॥ बी
जिनश्चेति गौतमोक्तेश्च॥ पालकपितृकुले तु पंचपुरुषं पालकमातृकुले त्रिपुरुषम्॥ तथा चा
परार्के पैठीनसिः॥ त्रीन्मातृतः पंच पितृतः पुरुषानतीत्योद्वहेदिति॥ एतत्सर्वं व्याख्यातौ॥
दत्तकादीन्पुत्रान्पितृपक्षतो निवर्त्तपिंडगोत्रार्षेयान्॥ प्रत्येतद्व्यपि पंचपितृत इतिनात्या
नुप्रतीति॥ यत्तु॥ वृद्धगौतमः॥ स्वगोत्रे पुत्रतां ये स्युर्दत्तक्रीतादयः सुताः॥
विधिना गोत्रमायांति तत्सापिंड्यं विधीयते॥ यच्च वसिष्ठः॥ अन्यशाखोद्भवो
दत्तः पुत्रश्चैवोपनायितः॥ स्वगोत्रेण स्वशाखोक्तविधिना स्वशाखभागिति॥ यच्च नारदः॥
धर्मार्थे वर्द्धिताः पुत्रास्तत्क्षेत्रेण पुत्रवत्॥ अंशपिंडविभागित्वं तेषु केवलमीरितमिति॥ त
त्पालककुले साप्तपौरुषं॥ सापिंड्यं तेन्येव परं नतु सर्वथा सापिंड्यनिषेधपरमिति सापिंड्य
मीमांसायाम्॥ मदनपारिजातादपि दत्तकानुप्रवेशेऽस्य सापिंड्यं प्रतिभाति॥ त
था हि॥ तेन त्रीनतीत्य तु दारान्यस्य मातादत्तपुत्री प्रतिग्रहीत्रा पुत्रीकृता तस्याः प्रतिग्र
हीतुः कुले त्रीनतीत्येति॥ पंचपितृत इति तु यस्य दत्तपुत्रः पितातस्य पालककुले तद्विषय
मित्युक्तम्॥ वस्तुतस्तु॥ सर्वेबवचसां महानिबंधेषु पुकाप्यनुपलंभात्परार्कादिलिखनामा

रभ्यास्टमीवरः मूलपुरुषमारभ्यद्वितीयातृतीयादिकासुदहेदित्याहुः॥सिद्धान्तस्तुनवधूवरयोः
स्वतःसापिंड्यंकिंतुकूटस्थसंततित्वात्॥तत्सापिंड्यनेव॥अतोष्टमवरंप्रतिकन्यायाअसापिं
ड्येपिकन्यायाःकूटस्थेनसापिंड्यात्तत्संततिस्थत्वाद्वरस्यापितत्सपिंड्यएवेत्यविवाहः॥सा
ड्यासापिंड्ययोःप्रतियोगिभेदेनविरोधादित्याहुः॥इदमेवयुक्तम्॥आशौचेप्येवंसापिंड्यंज्ञेय
म्॥यत्तुमध्येविच्छिन्नमपिसापिंड्यमंडूकप्लुतिवदुक्तम्॥आशौचेप्येवंसापिंड्यंज्ञेयम्॥य
त्तुमध्येनरस्तुवर्ततेयथाकूटस्थात्पंचम्योःकन्ययोःपुत्रौ॥तत्रनिवृत्तिः॥तदपत्ययोस्त्वनुवृत्ति
स्तत्रापिनसापिंड्यासापिंड्ययोर्दोषः॥संबंधिभेदात्॥तेनतत्रनविवाहः॥अत्रकूटस्थमारभ्य
गणनाकार्या॥तदुक्तम्॥वध्वावरस्यवाताततःकूटस्थाद्यदिसप्तमः॥पंचमीचेत्तयोर्मातातत्सापि
ड्यंनिवर्ततइति॥कूटस्थोमूलपुरुषः॥विश्वरूपनिबंधे॥एवमुक्तप्रकारेणपितृबंधुसप्तमा
त्॥ऊर्ध्वमेवविवाह्यस्त्वपंचमान्मातृबंधुतः॥संतानोभिद्यतेयस्मात्स्वबीजाद्दभयत्रच॥तस्मा
दापगणोद्दीमान्वरयावच्चकन्यकां॥स्मृतिनत्वेनारदः॥आसप्तमात्पंचमाच्चबंधुभ्यःपितृ
मातृतः॥अविवाह्यासगोत्राचसमानप्रवरातथा॥अत्रबंधुभ्यःइतिपंचमीनिर्देशात्पितुःपितृष्व
सृपुत्रात्सप्तमीमातुः॥पितृष्वसृपुत्राच्चपंचमीमपित्यजेत्॥एवमन्यबंधुष्वूह्यम्॥तत्रापि
गोत्रान्तरेपीवांगपिविवाहंकुर्यात्॥वक्ष्यमाणवचनात्॥त्रिगोत्रगणनाचमातामहगोत्रापे
क्षयानतुस्वापेक्षया॥अन्यथापितुःपितामहदुहितुर्दौहित्रीपुत्रीपरिणेयास्यात्॥मध्वाःमा
तामहगोत्रापेक्षयातुत्रिगोत्रांतर्गतेर्नविवाहप्रसंगइतिसंबंधतत्वादयोगोऽयंथाः॥संबंधवि
वेकेशूलपाणिर्व्याह॥पंचमात्सप्तमाच्चार्वागपित्रिगोत्रांतरितोविवाह्यः॥असंबंधाभावे
न्मातुःपिंडेनैवोदकेनवा॥साविवाह्याद्विजातीनांत्रिगोत्रांतरिताचयेतिहन्मनूक्तेःसन्निक
पिकर्तव्यंत्रिगोत्रात्परतोयदीतिदेवलोक्तेश्चेति॥एतच्चदाक्षिणात्यानमन्यंते॥यत्तुवसिष्ठः॥
पंचमींसप्तमींचैवमातृतःपितृतस्तथेति॥यच्चविष्णुपुराणम्॥पंचमींमातृपक्षाच्चपितृपक्षा
च्चसप्तमीम्॥गृहस्थउद्वहेत्कन्यांन्यायेनविधिनानृपेति॥तत्पंचमींसप्तमीमतीत्येतिव्याख्येय
म्पंचमेसप्तमेचैवयेषांवैवाहिकीक्रिया॥क्रियापराअपिहितेपतिताःशूद्रतांगताइत्यपरा
र्कमरीचिवचनात्॥हारलतायांशंखलिखितौ॥सपिंडतातुसर्वेषांगोत्रतःसाप्तपौरुषी॥पिंड
श्चोदकदानंचआशौचंचतदानुगम्॥गोत्रंसंतानम्॥आशौचंतानभिव्याप्यगच्छतीत्यर्थः
शुद्धिविवेकेशुद्धिचिंतामणौचब्राह्मे॥सर्वेषामेववर्णानांविज्ञेयासाप्तपौरुषी॥सपिंडता
ततःपश्चात्समानोदकधर्मता॥ततःकालवशात्तत्रविस्मृतेनामगोत्रतः॥समानोदकसंत
त्तावन्मात्रापिनश्यति॥सप्तोर्ध्वंत्रयःसोदकास्ततोगोत्रजाः॥तेनैवब्राह्मेप्यविभक्तधनास्त्वे
तेसपिंडाःपरिकीर्तिताः॥तेनाविभक्तधनाभावेविभक्तःसपिंडोधनहारीनान्यथेत्यर्थः॥ते
नविवाहेआशौचेधनग्रहणेचत्रिधासापिंड्यंसिद्धम्॥यत्तुपंचमींमातृतःपरिहरेत्सप्तमींपि
तृतस्त्रीन्मातृतःपंचपितृतोवेतिपैठीनसिस्मृतौत्रीनित्यनुकल्पइतिमाधवोक्तेः॥पंचमींस
प्तमींचैवमातृतःपितृतस्तथा॥दशभिःपुरुषैःख्यातात्श्रोत्रियाणांमहाकुलात्॥उद्वहेत्सप्त

गार्ह्यंतदभावेतुसप्तमीम्॥पंचमींतदभावेतुपितृपक्षेप्ययंविधिः॥सप्तमींचतथाषष्ठींपंचमीं
चतथैवच॥एवमुद्वाहयेत्कन्यांनदोषःशाकटायनः॥तृतीयांवाचतुर्थींवापक्षयोरुभयोर
पि॥विवाहयेन्मनुःप्राहपाराशर्योयमः॥यस्तुदेशानुरूपेणकुलमार्गेणचोद्वहेत्॥
नित्यंसंव्यवहार्यःस्याद्देवैश्चैतत्प्रदृश्यते॥इतिचतुर्विंशतिमतात्॥चतुर्थीमुद्वहेत्कन्यांचतु
र्थःपंचमींपिवा॥पराशरमतेषष्ठींपंचमींनतुपंचमीमिति पराशरोक्तेःचानुकल्पत्वेनापि
दिपंचम्यादिपरिणयनंकार्यमितिप्रतीयते॥अत्रहितदभावेइतिस्पष्टमेवानुकल्पत्वमु
क्तम्॥तत्त्वयथाश्रुतंज्ञेयम्॥पूर्वोक्तमरीचिवचोविरोधात्॥वस्तुनिविकल्पासंभवात्॥
पंचमात्सप्तमाद्दीनांयःकन्यामुद्वहेद्द्विजः गुरुतल्पीसविज्ञेयः सगोत्रां
चैवमुद्वहन्नितिविरुद्धोक्तेः॥पाराशरस्यमूलाभावच्च॥तस्मान्मदनपारिजाताद्युक्तदिशा
दत्तकसापत्न्यसंबंधाद्यनुप्रवेशेब्राह्मणादीनांक्षत्रियादिसपिंडविषयेपूर्वोक्तानिने
यानितत्त्वनुकल्पइतिभ्रमितव्यम्॥यत्तुस्मृतिचंद्रिकामाधवादयश्चाहुः॥तृतीयेसंगच्छा
वहेचतुर्थेसंगच्छावहाइतिशतपथश्रुतेः॥दृप्तांजहुर्मातुलस्येवयोषाभागस्तेपैतृष्वसे
यीवपामिवेति॥गर्भेनुनौजनितादंपतीकरितिचमंत्रवर्णात्॥मातृष्वसृसुतांकेचित्
पितृष्वसृसुतांतथा॥विवहंतिकचिद्देशेसंकोच्यापिसपिंडतामितिप्रातातपोक्तेश्च॥मा
तुलकन्योद्वाहःकार्यः॥यद्यपिपितृष्वसृकन्योद्वाहोपिप्राप्तस्तथाप्यस्वर्ग्यंलोकविद्विष्टमि
ति॥निषेधाद्वचनांतरेणतदुद्वाहस्याविधानाच्चनकार्यः॥अयंतुदाक्षिणात्यशिष्टा
चारात्कार्यइति॥नचपूर्वोक्तश्रुतीनामर्थवादमात्रता॥मानांतरेणासिद्धेउपरिहिदेवे
भ्योधारयतीतिवदनुवादानुपपत्त्याविधिकल्पनात्॥यत्तुशातातपः॥मातुलस्यसुतामूढ्वा
मातृगोत्रांतथैवच॥समानप्रवरांचैवत्यक्त्वाचांद्रायणंचरेत्॥यच्चमनुःपैतृष्वसेयींभगि
नींस्वस्त्रीयांमातुरेवच॥मातुश्चभ्रातुराप्तस्यगत्वाचांद्रायणंचरेत्॥एतास्तिस्रस्तुभार्या
र्थेनोपयच्छेत्तुबुद्धिमान्॥ यच्चव्यासः॥ मातुःसपिंडायत्नेनवर्जनीयाद्वि
जातिभिरिति॥तद्गांधर्वादिविवाहोढमातृविषयम्॥तत्रपितृगोत्राभिवृत्तेः॥अतएवमा
र्कंडेयपुराणम्॥गांधर्वादिविवाहेषुपितृगोत्रेणधर्मवित्॥ब्राह्मादिविवाहेतुपरिणे
येवेति॥भट्टसोमेश्वरोपितृतीयेध्यायेवाक्यपादे मातुलकन्योद्वाहमुदाहृत्यस्मृतिविरोधे
नाचारप्राप्तस्यास्यवार्त्तिकेबाधोक्तावपिपूर्वोक्तश्रौतलिंगवलीयस्त्वादस्यकर्त्तव्यतामाह॥
तदितदत्तकस्यपालकदत्रिममातृसोदरकन्याविषयत्वेनासवर्णमातुलकन्याविषय
त्वेनयुगांतरपरत्वेनचोपपन्नमप्यविचारितरमणीयंयथातथास्तु॥तथापिकलौनाव
निषिद्धमेव॥गोत्रान्मातुःसपिंडाच्चविवाहोगोवधस्तथेत्यादिपुराणात्॥ माधवीयेबौधाय
नोप्यस्यनिंदामाह॥पंचधाविप्रतिपत्तिर्दक्षिणतःतथोत्तरतःनुपेतेनस्त्रियाचसहभोजनं
पर्युषितभोजनंमातुलपितृष्वसृदुहितृपरिणयनमिति॥अथोत्तरतःसीधुपानादिकमुक्त्वा
इतरइतरस्मिन्कुर्वन्दुष्यतिइतरइतरस्मिन्निति भट्टसोमेश्वरेणापिस्मृतिविरुद्धानांमातुल

केसौद्वाहादीनामस्माद्वचनादप्रामाण्यमित्युक्तम्॥बृहस्पतिरपि॥उद्वह्यतेदाक्षिणात्यैर्मा
तुलस्यसुताद्विजैः॥मत्स्यादाश्चनराःसर्वेव्यभिचाररताःस्त्रियः॥उत्तरेमद्यपानार्यःस्पृश्या
नृणांरजस्वला॥इत्यनाचारत्वमाह॥अतएवहेमाद्रौमात्स्ये॥कर्णाटकादीनांतत्कारिणां
श्राद्धनिषेधः॥वोपदेवेनापिलिखितंबाल्ये॥यत्रमातुलजोद्वाहोयत्रवैदवलीपतिः॥श्राद्धं
नगच्छेत्तद्विप्रोदत्तंयच्चनिराभिषमिति॥तस्मान्मातृतःपंचपितृतःसप्तवर्ज्यकोद्वाहइतिसि
द्धं॥संबंधविवेकेसुमंतुः॥ब्राह्मणानामेकपिंडस्वधानामादशमाद्दम्पाविच्छित्तिर्भवति॥आ
सप्तमाद्रिक्थविच्छित्तिर्भवतिआतृतीयात्पिंडविच्छित्तिरन्यथापिंडांशीचक्रियाविच्छेदादू
र्ध्वंहा॥तुल्योभवति॥अस्यार्थमाह॥ शूलपाणिः॥ जीवत्पित्रादित्रिकस्यवृ
द्धप्रपितामहादयस्त्रयःश्राद्धदेवतात्वात्पिंडभाजोभवंति॥तदूर्ध्वंत्रयोनवपुरुषपर्यंतालेप
भाजः॥श्राद्धकर्त्ताचदशमइति॥दशमादूर्ध्वंसापिंड्यनिवृत्तिः॥दशमादित्युपलक्षणम्॥
तेनपितृपितामहजीवनेनवपुरुषपर्यंतंपितृजीवनेचाष्टपुरुषपर्यंतंसापिंड्यमितिज्ञेय
म्॥अपुत्रधनग्रहणेसन्निहिताभावेसप्तपुरुषपर्यंतमधिकारः॥धनग्राहित्वमारभ्यतृती
यःपौत्रस्तदूर्ध्वंश्राद्धविच्छेदः॥अन्यथाधनहारित्वेपुत्रश्राद्धादायकरणेब्रह्महेत्यर्थः॥आतृ
तीयादित्यनूढकन्याविषयम्॥अप्रत्तानांतुस्त्रीणांत्रिपुरुषीविज्ञायतइतिवसिष्ठोक्तेः॥एतच्चाशौचवि
षयंसापिंड्यंनतुविवाहादौ॥तत्रपूर्वोक्तवचनैःपंचमसप्तमत्वनियमादितिमेधातिथिप्रमुखादा
क्षिणात्याः॥वाग्दानोत्तरमेतदितिशुद्धिविवेकः॥मातृकुलविषयंकानीनकमाविषयंचैतत्॥अ
न्यथाअप्रत्तानांतथास्त्रीणांसापिंड्यंसाप्तपौरुषं॥प्रत्तानांभर्तृसापिंड्यंप्राहदेवःप्रजापतिरिति॥
कौर्मेणविरोधःस्यादितिरत्नाकरस्मृतितत्त्वादिगौडग्रंथाः॥युक्तंचैतत्॥अन्यथाकमोत्पन्नोपुरु
षत्रयपर्यंतमेवसूतकंस्यान्नोर्ध्वम्॥सापत्नमातामहकुलेत्वाहमिताक्षरायांशंखः॥यद्येकजा
ताबहवःपृथक्क्षेत्राःपृथक्जनाः॥एकपिंडाःपृथक्शौचाःपिंडस्त्वावर्ततेत्रिषु॥पृथक्क्षेत्रा
भिन्नजातीयस्त्रीषुजाताःपृथग्जनाःसजातीयभिन्नमातृषुजाताः॥अत्रत्रिपुरुषंसापिंड्यमि
तिविज्ञानेश्वरेणव्याख्यातौ॥ पृथ्वीचंद्रोदयेसापिंड्यदीपिकायांचैवम्॥
मदनपारिजातेतुपृथक्क्षेत्राःभिन्नमातृजाःपृथग्जनाःभिन्नजातीयाः॥एतद्विजातीयसापत्नमा
तृकुलविषयम्॥सवर्णसापत्नमातृकुलेचतुःपुरुषंसापिंड्यं॥पंचमींसप्तमींचैवमातृतःपितृ
तस्तथेति॥ वसिष्ठोक्तेः॥ सप्तमीमितिब्राह्मणादीनांक्षत्रियादिद्वारेणान्यमातृ
कुलविषयंचेत्युक्तम्॥तत्स्वकपोलकल्पितत्वाद्ग्रंथांतरविरोधाच्चानिर्मूलम्॥पितृपत्न्यःसर्वामा
तरस्तत्पुत्र्याःसुमंतुनातद्भ्रातृभागिनेयानीतिपृथङ्निषेधाच्च॥अन्यथासपिंडत्वेननिषेधा
त्॥सपत्नमातुलत्वादिनिर्देशोव्यर्थः॥अतएवतेनस्वनिबंधेसवर्णसापत्नमातामहकु
लपरत्वेनतथैवशंखवचनंव्याख्यातम्॥तेनवसिष्ठंपंचमींसप्तमीमतीत्येतिव्याख्येयम्॥त
स्मान्नाद्येवमस्याप्युक्ताप्रयोगरत्नेभट्टैः॥स्मृतितत्त्वादिगौडग्रंथेषुचसपत्नमातामहकुलेप
वदन्नंवाचनिकमेवसापिंड्यमुक्तम्॥यथाहसुमंतुः॥मातृपितृसंबंधादासप्तमाद्विवाहाभवंति

आपंचमान्नेमां॥ पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिनी मातृष्वसारस्तद्दुहितरश्च
भगिन्यस्तदपत्यानि भागिनेयान्यन्यथा संकरकारिणः स्युस्तथाध्यायपितुरेतदेवेति॥ आपंचमा
दिति मातृकुले त्रिगोत्रांतरितविषयं वेति प्राञ्चः॥ मात्स्ये॥ समानप्रवरां चैव शिष्यसंततिरेव च
॥ब्रह्मदातुर्गुरोश्चैव संततिः प्रतिषिध्यते॥ तद्भगिनी मातृष्वसार इति तु आकरे न पठितम्॥ क
चिद्वचनाद्विवाहः॥ यथा गृह्यपरिशिष्टे ऽविरुद्धसंबंधामुपयच्छेत्॥ उक्तो विरुद्धसंबंधः स्व
यमेवोक्तः॥ यथा भार्यास्वसुर्दुहिता पितृव्यपत्नीस्वसा चेति॥ बौधायनः॥ मातुः सपत्न्या भगि
नीं तत्सुतां च विवर्जयेत्॥ पितृव्यपत्न्या भगिनीं तत्सुतां च विवर्जयेत्॥ अतो मातृष्वसुः सपत्न
पुत्रकन्याप्यविवाह्या॥ सापत्नमातृकुलजामिति मदनपारिजातोक्तेरिति केचित्॥ केचित्तु अ
शेषभ्रातापितुः सम इति मनूक्तेस्तत्कन्या मातृत्वात् पितुर्मातामह्याः ज्येष्ठभ्रातृपत्नी भगिनीत्वाद्वि
वाह्या॥ तथा उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पितेति मनूक्तेर्गुरुणां त्रिपुरुषं सापिंड्यं॥
सख्यापि निर्वाच्यः॥ अतस्तेषां कन्या नोद्वाह्याः॥ गायत्र्याउपदेष्टुश्च कन्यां नैवोद्वहेद्द्विजः॥ गुरो
श्च कन्यां शिष्यो वा तत्संततिरपि नेष्यते॥ पुरुषत्रयपर्यंतं भ्रात्रादेर्नैतदिष्यते॥ वाक्संबंधव
तां नांतु स्नेहसंबंधभागिनां॥ विवाहो त्र न कर्तव्यो लोकगर्हाप्रसक्तितः इति वचनाच्चेत्याहुः॥ त
न्न मूलं चिंत्यम्॥ दत्तकविषये तु अनंते॥ तत्र गौतमः ऊर्ध्वं सप्तमात्पितृबंधुभ्यो बीजिनश्च मातृ
बंधुभ्यः पंचमादिति बंधुग्रहणाद्दत्तकमात्रपरमिदं किंतु संतानेपि॥ एतत्क्षेत्रजादिसर्व
द्व्यामुष्यायणपरमिति हरिदत्तः॥ अत्र स्मृतिचंद्रिका॥ नियोगा
द्युत्पादयितुस्तस्माद्बीजिनो प्यूर्ध्वं सप्तमादित्यर्थ इति॥ दत्तकस्य जनककुलविषयमेतदिति सापिंड्य
मीमांसायां तेन दत्तस्य जनककुले साप्तपौरुषं जननीकुले पांचपौरुषं सापिंड्यम्॥ दत्तकौर
सादिपुत्राणां बीजवप्तुः सपिंडता॥ सप्तमी पंचमी चैव गोत्रित्वं पालकस्य चेति वृद्धमनूक्तेः॥ बी
जिनश्चेति गौतमोक्तेश्च॥ पालकपितृकुले तु पंचपुरुषं पालकमातृकुले त्रिपुरुषम्॥ तथा च
पराके पैठीनसिः॥ त्रीन्मातृतः पंच पितृतः पुरुषानतीत्योद्वहेदिति॥ एतत्सर्वं व्याचख्यौ॥
दत्तकादीन्पुत्रान्पितृपक्षतो निवर्तपिंडगोत्रर्षेयान्॥ प्रत्येतद्वचने पंचपितृन इति नान्या
न्प्रतीति॥ यत्तु॥ वृद्धगौतमः॥ स्वगोत्रे पुत्रतां ये स्युर्दत्तक्रीतादयः सुताः॥
विधिना गोत्रमायांति तत्सापिंड्यं विधीयते॥ यच्च वसिष्ठः॥ अन्यशाखोद्भवो
दत्तः पुत्रश्चैवोपनायितः॥ स्वगोत्रेण स्वशाखोक्तविधिना स्वशाखभागिति॥ यच्च नारदः॥
धर्मार्थं वर्द्धिताः पुत्रास्तद्गोत्रेणापुत्रवत्॥ अंशपिंडविभागित्वं तेषु केवलमीरितमिति॥ त
त्पालककुले साप्तपौरुषं॥ सापिंड्यं नेत्येवंपरं न तु सर्वथा सापिंड्यनिषेधपरमिति सापिंड्य
मीमांसायाम्॥ मदनपारिजातादपि दत्तकानुप्रवेशे ऽप्यसापिंड्यं प्रतिभाति॥ त
थाहि॥ तत्र त्रीनतीत्य पुत्राहृत्यपत्यमातादत्तपुत्री प्रतिग्रहीत्रा पुत्रीकृता तस्याः प्रतिग्र
हीतुः कुले त्रीनतीत्येति॥ पंचपितृत इति तु यस्य दत्तपुत्रः पिता तस्य पञ्चनकुकुलं तद्विषय
मित्युक्तम्॥ वस्तुतस्तु॥ इदं वचसां महानिबंधेषु कुत्राप्यनुपलंभात्पराकादिलिखनामा

वात्॥ एवंचोक्तव्यवस्थायामप्रतिभत्तानतुसत्वार्थे रेतल्लिखितत्तेषामेव शोभते। मम तु पालककुले ए
कपिंडदानक्रियान्वयित्वरूपं साप्तपौरुषमेव सापिंड्यं वीजिनश्चेति॥ गौतमोक्तेर्जनककुले पिताव
देवत्रीन्॥ मातृतश्चादित्रसवर्णासापत्नमातृकुलपरम्पर्यैकजाता वहव इति। शंखैकवाक्य
त्वादिति युक्तं प्रतिभाति॥ अतएवास्य द्व्यामुष्यायणत्वं हेमाद्रिप्रवरमंजरीदत्तनिर्णयनारायणा
दिभिरुक्तं॥ भट्टसोमेश्वरेणापि पृथायाः कुंतिभोजस्य पालककन्यात्वेपि ऊर्ध्वं सप्तमात्पितृबंधु
भ्यो वीजिनश्चेति गौतमोक्तेर्दत्रिमायाः पृथायाः जनकस्य शूरसेनस्य कुलेपि साप्तपौरुषं पालक
कुले पितावदिव॥ सापिंड्यमुक्तमपि वा कारणाग्रहणेऽनुपपन्नं॥ सापिंड्यदीपिकायां तु दत्तक्रीता
दीनां जनकगोत्रेणोपनयने कृते जनककुले साप्तपौरुषं सापिंड्यं पालकमातापितृकुले॥ त्रि
पुरुषं सपिंडे निर्वापान्निर्वापलक्षणं त्रिपुरुषं सापिंड्यं पालकगोत्रेणोपनयने तत्कुले साप्तपौ
रुषमित्युक्तम्॥ तन्न॥ चूडोपायनसंस्कारा निजगोत्रेण वै कृताः॥ दत्ताद्यास्तनयास्ते स्युरन्यथा
दास उच्यते इति॥ कालिकापुराणादुपनयनांतरं दत्तकनिषेधात् त्रिपुरुषमित्यत्रापि मूलं मृ
ग्यमित्यलं वहुना॥ मातृपितृद्वारकसापिंड्यावधीनां कमानामियं संख्याएवं वाजपेयिनोक्ताः॥
उद्वोढुः पितरौ पितुश्च पितरौ तज्जन्मकद्वंद्वपतिद्वंद्वं तस्य चतुष्कमष्टं च ततो व्यस्यक्रमात्षोडशः
वंशारंभकदंपतीप्रमितितिस्त्रिंशात्सप्तकक्षं रदाः एकैकान्वयकन्यकाः पितृकुलेत्वासप्तकक्षंभुवे
॥यद्यप्येकस्य वहवः सुताः स्युस्तदपीह तु॥ संवंधसाम्यादेकैव गणितेप्यवधार्यताम्॥ एक
स्मान्मिथुनात्सुता यदुहितां द्वंद्वद्वयं तद्द्वयात्तस्माद्द्वंद्वचतुष्कमष्टचततोतः षोडशातो रदाः॥ या
वत्सप्तमकक्षमत्रितनवः कन्याइहैकान्वयेतादंतेर्गुणिता रसैकरवद्रशेवंशे सपिंडाः पितुः॥
मातुर्जन्मदद्दंपती च मिथुनद्वंद्वं तयोः सागरास्तस्याः पंचमकक्षमश्वमितितिस्त्र्येकान्वयः पुंसु
ते॥ द्वंद्वाद्द्वंद्वयुगं ततो व्ययइतोष्टं पंचकक्षं शरक्षोएयः॥ सप्तगुणाः शराभ्रविधवो मातुः सपिं
डाः कुले॥ कुलद्वयस्य कन्यकायुता मिथः सपिंडकाः॥ हिमांशुदग्धरंध्रशो विवाहकर्म वर्जिता
इति॥ एतच्च सर्ववर्णसाधारणम्॥ सर्वत्र सापिंड्यसद्भावादिति विज्ञानेश्वरोक्तेः पंचमात्सप्त
माद्दूर्ध्वं मातृतः पितृतः क्रमात्॥ सपिंडता निवर्तेत सर्ववर्णेष्वयं विधिरिति हरनाथधृतदेवल
वचनाच्च॥ संवंधतत्वे सुमंतुः॥ पितृष्वसृसुतां मातृष्वसृसुतां मातुलसुतां मातृसगोत्रां समा
नार्षेयीं विवाह्य चांद्रायणं चरेत्परित्यज्यैनां मातृवद्बिभृयादिति दिक्॥ ऋषेरिदमार्षं प्रवरः॥
गोत्रप्रसिद्धं॥ समाने आर्षगोत्रे यस्य तस्याज्ञातायानभवतितां॥ अथ संक्षेपेण

गोत्रप्रवरनिर्णयः॥

नोचभिन्नोनिषेधे निमित्तं॥ सगोत्राय दुहितरं न प्रयच्छेदि
त्यापस्तंवोक्तेः असमानप्रवरैर्विवाह इति गौतमोक्तेश्च॥ तत्र गोत्रलक्षणमाह प्रवरमंजर्यां
वौधायनः॥ विश्वामित्रो जमदग्निर्भरद्वाजोथ गौतमः॥ अत्रिर्वसिष्ठः कश्यप इत्येते सप्तर्षयः
॥सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमिति॥ यद्यपि केवलभार्गवेष्वार्ष्टिषेणा
दिषु केवलांगिरसेषु च हरितादिषु नैतत्॥ भृग्वंगिरसोरुक्तेष्वनंतर्गतेः॥ तथाप्यत्रेष्टापत्तिरे
वेति केचित्॥ अत एव स्मृत्यर्थसारे प्रवरैक्यादेवात्रा विवाह उक्तः॥ यद्यपि वसिष्ठादीनां तु गो

त्रत्वमुक्तम्॥तेषांसप्तर्षित्वेनतदपत्यत्वाभावात्॥तथापितत्पूर्वभाविवसिष्ठाद्यपत्यत्वेन
गोत्रत्वमुक्तम्॥अतएवसर्वेषांपरेषांचैतद्गोत्रम्॥अत्रविशेषोमत्कृतेप्रवरदर्पणेज्ञेय
म्॥प्रवरास्तुप्रवरणान्निप्रवराः॥कल्पकाराहिवासिष्ठेतिहोतावसिष्ठवदित्यध्वर्युरित्यादि
नायेषांस्मरणमामनंतितेप्रवराः॥तच्चवरणंयद्यपिगोत्रभूतस्यापिक्वचिद्दृश्यते॥तथा
पिसर्ववद्दृषिभेदोद्रष्टव्यः॥अन्यथातेषांआर्षेयएकार्षेयइत्यादिनिर्देशानुपपत्तेः॥अन्ये
तुतद्गोत्राणांआर्षेयइतिभेदमाहुरितिदिक्॥तत्त्वंतुगोत्रभूतस्यपितृपितामहप्रपिताम
हाएवप्रवराः॥पितैवाग्रेथपुत्रोथपौत्रइतिशतपथश्रुतेः॥परंपरंप्रथममित्याश्वला
यनोक्तेश्च॥अत्रविशेषमाहबौधायनः॥एकएवऋषिर्यावत्प्रवरेष्वनुवर्तते॥तावत्स
मानगोत्रत्वमन्यत्रभृग्वंगिरसांगणादिति॥स्मृत्यर्थसारे॥त्रियमाणतयावापिसत्तयावा
नुवर्तनं॥एकस्यदृश्यतेयत्रतद्गोत्रंतस्यकथ्यते॥भृग्वंगिरोगणेषुतुमाधवीयेस्मृत्यंतरे॥
पंचानांत्रिषुसामान्यादविवाहस्त्रिषुद्वयोः॥भृग्वंगिरोगणेष्ववशेषेष्वेकोपिवारयेत्॥शे
षगोत्रेष्वेकोसमानःप्रवरोविवाहंवारयेदित्यर्थः॥बौधायनोपि॥भृग्वंगिरसांत्वधिकृत्य
ह्यार्षेयसन्निपातेऽविवाहस्त्र्यार्षेयाणां॥त्र्यार्षेयसन्निपातेऽविवाहःपंचार्षेयाणामिति॥
भृग्वंगिरोगणेष्ववशेषेष्वेकोपिवारयेत्॥भृग्वंगिरोगणेष्वपिजमदग्निगौतमभरद्वाजेष्वे
कप्रवरसाम्येसर्वेषामप्यसाम्येवासगोत्रत्वादेवाविवाहइतिदिक्॥ अथगोत्रा
णिप्रवराश्चोच्यंते॥ तत्रबौधायनः॥ गोत्राणांतुसहस्राणिप्रयुतान्य
र्बुदानिच॥ऊनपंचाशदेवैषांप्रवराऋषिदर्शनात्॥ तत्रसप्तभृगवः॥ वत्सा
विदाआर्ष्टिषेणायस्कामित्रयुवःवैन्याशुनकाइति॥वत्सानांभार्गवच्यावनाप्नवानौर्वजा
मदग्न्येतिभार्गवौर्वजामदग्न्येतिवाभार्गवच्यावनाप्नवानेतिवा॥विदानांभार्गवच्यावनाप्न
वानौर्ववैदेतिपंच॥भार्गवौर्वजामदग्न्येतिवाएतौद्वौजामदग्न्यसंज्ञौ॥आर्ष्टिषेणानांभार्ग
वच्यावनाप्नवानार्ष्टिषेणानूपेतिभार्गवार्ष्टिषेणानूपेतिवा॥एषांत्रयाणांपरस्परमवि
वाहः॥वात्स्यानांभार्गवच्यावनाप्नवानेतिवत्सपुरोधसयोः॥पंचभार्गवच्यावनाप्नवानवा
त्स्यपौरोधसेतिवैजवनेमथितेति॥एतेत्रयःक्वचित्॥एषामपिस्वैरंविवाहः॥अत्रतत्तद्ग
णस्थाऋषयोन्यश्चविशेषोमत्कृतेप्रवरदर्पणेज्ञेयः॥यस्कानांभार्गववैतहव्यसावेतसे
ति॥मित्रायुवानांभार्गववाध्र्यश्वदिवोदासेति॥भार्गवच्यावनदिवोदासेतिवा॥वाध्र्यश्वेत्ये
कोवा॥वैन्यानांभार्गववैन्यपार्थेति॥एतेएवश्येताः॥शुनकानांशुनकेतिवागार्त्समदेति
वाभार्गवगार्त्समदेतिद्वौवाभार्गवशौनहोत्रगार्त्समदेतित्रयोवा॥वेदविश्वज्योतिषांभार्ग
ववैदवैश्वज्योतिषेति॥शाठरमाठराणांभार्गवशाठरमाठरेति॥एतौद्वौक्वचित्॥यस्कादीनां
स्वगणंत्यक्त्वासर्वैर्विवाहः॥तदुक्तंस्मृत्यर्थसारे॥यस्कामित्रयुवोवैन्याःशुनकाःप्रवरेक्वचि
त्स्वंस्वंहित्वागणंसर्वैर्विवहेयुःपरैर्वरैरिति॥ अथांगिरसः॥ तेगौतमाभर
द्वाजाःकेवलांगिरसश्चेतित्रिधा॥तत्रगौतमाःदश॥आयास्याःशरद्वन्तःकौमंडादीर्घतमसः

औशनसः कारेणुपालयः॥ राहूगणाः सौमराजका वामदेवा बृहदुक्थाश्चेति॥ तत्रायास्यानां
आंगिरसायास्यगौतमेति॥ शारद्वतानामांगिरसौतथ्यकावनगौतमकौमंडेतिवा॥ आंगिर
सायास्यौशिजगौतमकाक्षीवतेतिवा॥ अंगिरसौतथ्यगौतमौशिजकाक्षीवतेतिवा॥ आं
गिरसौतथ्यगौतमौशिजकाक्षीवतेति॥ आंगिरसौशिजकाक्षीवतेतित्रयो वा॥ दीर्घतम
सामांगिरसौतथ्यकाक्षीवतगौतमदैर्घतमसेति त्रयो वा॥ औशनसामांगिरसगौतमौशनसे
तित्रयः॥ कारेणुपालानामांगिरसगौतमकारेणुपालेतित्रयः॥ राहूगणानामांगिरसराहू
गणगौतमेति॥ सोमराजकानामांगिरससौमराजकगौतमेति॥ वामदेवानामांगिरसवाम
देव्यगौतमेति॥ बृहदुक्थानामांगिरसौमांगिरसवार्हदुक्थगौतमेति॥ आंगिरसवामदेव्यवा
मदेववार्हदुक्थेतिवा॥ उतथ्यानामांगिरसौतथ्यगौतमेति॥ औशिजानामांगिरसऔ
शिजकाक्षीवतेति आपस्तंबः॥ आंगिरसआयास्यौशिजगौतमकाक्षीवतेति कात्यायनः॥
एतौ द्वौ केचित्॥ राघुवानामांगिरसराघुवगौतमेति केचित्॥ तत्र मूलं चिंत्यं॥ एषां सर्वेषां गौ
तमानामविवाहः॥ अथ भरद्वाजाः॥ ते चत्वारः॥ भरद्वाजाः॥ गर्गाः॥
ऋक्षाः कपयइति॥ भरद्वाजानामांगिरसबार्हस्पत्यभरद्वाजेति त्रयः॥ गर्गानामांगिरसबार्ह
स्पत्यभरद्वाजसैन्यगार्ग्येति पंच॥ आंगिरससैन्यगार्ग्येतिवा॥ अन्त्ययोर्व्यत्ययो वा॥ भारद्वाज
गार्ग्यसैन्येतिवा॥ गर्गभेदानामांगिरसतैत्तिरकापिभुवेति॥ ऋक्षाणां कपिलानां चांगिर
सबार्हस्पत्यभरद्वाजवान्दनमातवचसेति पंच॥ आंगिरसवान्दनमातवचसेति त्रयो वा॥
कपीनामांगिरसामहीयवौरुक्षयसेति॥ आमभुवामांगिरसभारद्वाजबार्हस्पत्यमंत्रवरा
मनवेति पंच॥ अयं कश्चित्॥ भरद्वाजानां सर्वेषामविवाहः॥ अथ केवलांगिरसः॥
हरितानामांगिरसांबरीषयौवनाश्वेति॥ आधोमंधाना वा॥ वान्तानामांगिरसमांधातृकौत्सेति॥ क
रावाणमांगिरसाजमीढकाण्वेति॥ आंगिरसघोरकाण्वेतिवा॥ रथीतराणामांगिरसवैरूपराथी
तरेति॥ आंगिरसवैरूपपार्षदश्वेतिवा॥ अष्टादंष्ट्रपार्षदवैश्वरूपेतिवा॥ अन्त्ययोः सनाविमौद्
ल्येतिवा॥ विष्णुवृद्धानामांगिरसपौरुकुत्सत्रासदस्यवेति॥ एषां स्वगणं विहाय सर्वैर्विवाहो भ
वति॥ हरितकुत्सयोस्तु न भवति॥ अथात्रयः ते चत्वारः॥ आत्रेयाः वाद्भुतकाः गविष्ठिराः मुद्ग
लाइति॥ आद्यानामात्रेयार्चनानसश्यावाश्वेति॥ वाद्भुतकानामात्रेयार्चनानसवाद्भुतकेति।
धनंजयानामात्रेयार्चनानसधानंजयेति केचित्॥ गविष्ठिराणामात्रेयार्चनानसगाविष्ठिरेति।
आत्रेयगाविष्ठिरपौर्वातिथेतिवा॥ मुद्गलानामात्रेयार्चनानसपौर्वातिथेति चामरथ्यसुमंग
लवैजवापानामात्रेयार्चनानसश्यावातिथेति॥ आत्रेयार्चनानसगाविष्ठिरेतिवा॥ सुमंग
लानामत्रिसुमंगलश्यावाश्वेति केचित्॥ अत्रेः पुत्रिकापुत्राणामात्रेयवामरथ्यपौत्रिकेति
॥ अत्रीणां सर्वेषामविवाहः॥ अथ विश्वामित्राः॥ ते दश॥ कुशि
का लौहिता रौक्षकाः कामकायनाः अजाः कताः धनंजयाः अघमर्षणाः पूरणाः इंद्रकौशिका
इति॥ कुशिकानां वैश्वामित्रदेवरातौदलेति॥ लोहितानां वैश्वामित्राष्टकलोहितेति॥ अन्य

श्रेष्ठमिहोच्यते॥षट्पंचकचतुर्मानं मध्यमं त्रिविधं स्मृतं॥ त्रिद्व्येकांगुलमानं यत्त्रिविधं तत्कनीयसं॥ एवं नवविधं प्रोक्तं चरलिंगं यथाक्रमं॥ अथ पंचसूत्रीनिर्णयः। गौतमीतंत्रे। लिंगमस्तकविस्तारो लिंगोच्छ्रायसमो मतः॥ परिधिस्तत्रिगुणितं तद्वत्पीठं व्यवस्थितं॥ प्रनालिकातथैवस्यात्पंचसूत्रविनिर्णयः॥ अत्रेदं तत्त्वं॥ लिंगमस्तकविस्तारं लिंगोच्चतासमं कृत्वा तत्त्रिगुणसूत्रवेष्टनार्हलिंगस्थौल्यं कृत्वा तत्समं दृष्टं चतुरस्त्रं वा पीठविस्तारमधश्चोर्ध्वं च कुर्यात्॥ पीठोच्चता तु लिंगोच्चतातो द्विगुणा। पीठमध्ये लिंगाद्द्विगुणस्थूलं पीठोच्चता॥ तृतीयांशेन कंठं कृत्वा तस्योर्ध्वमधश्च समं वप्रद्वयं वा कृत्वा लिंगविस्तारषष्ठांशेन पीठोपरि वाह्यमेखलां कृत्वा तदंतः संलग्नं तत्समं खातं च कृत्वा पीठाद्बहिर्लिंगसमदीर्घा पीठार्द्धदीर्घा वा मूले दैर्घ्यसमविस्तारमग्रे तदर्द्धविस्तारां तृतीयांशेन मध्ये खातां पीठवत्समेखलां प्रणालिकां कुर्यादिति अत्रमूलं सिद्धांतशेखरे शैवागमे च ज्ञेयं॥ तिथितत्त्वे ब्राह्मे॥ सर्वत्रैव प्रशस्तोब्जः शिवसूर्यार्चनं विना॥ तत्रैव वाराहपाद्मयोः॥ गृहे लिंगद्वयं नार्च्यं शालग्रामद्वयं तथा। द्विचक्रौ द्वारकायास्तु नार्च्यं सूर्यद्वयं तथा॥ शक्तित्रयं तथा नार्च्यं गणेशत्रयमेव च। द्वौ शंखौ नार्चयेच्चैव भग्नां च प्रतिमां तथा॥ नार्चयेच्च तथा मत्स्यकूर्मादिदशकं तथा॥ गृहे त्विदग्धा भग्नाश्च नार्च्याः पूज्या वसुंधरे॥ एतासां पूजनान्नित्यमुद्वेगं प्राप्नुयाद्गृही॥ शालग्रामाः समाः पूज्याः समेषु द्वितयं न हि॥ विषमा नैव पूज्यास्तु विषमेष्वेक एव हि॥ शालग्रामशिला भग्ना पूजनीया सचक्रका॥ खंडिता स्फुटिता वापि शालग्रामशिला शुभा॥ वाराहे॥ दद्याद्भक्ताय यो देवि शालग्रामशिलां नरः॥ सुवर्णसहितां दिव्यां पृथ्वीदानफलं लभेत्॥ तत्रैव॥ यः पुनः पूजयेद्भक्त्या शालग्रामशिलाशतं॥ तत्फलं नैव शक्नोहं वक्तुं वर्षशतैरपि॥ विष्णुपुराणे॥ ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्च पृथिवीपते॥ स्वधर्मतत्परो विष्णुमाराधयति नान्यथा॥ अविभक्तानामपि पृथग्देवपूजामाह प्रयोगपारिजाते॥ आश्वलायनः॥ पृथग्गृह्यैकपाकानां ब्रह्मयज्ञो द्विजातिनां॥ अग्निहोत्रं सुरार्चा च संध्या नित्यं भवेत्पृथक्॥ तत्रैव विष्णुधर्मे॥ शालग्रामशिलां वापि चक्रांकितशिलां तथा॥ ब्राह्मणः पूजयेन्नित्यं क्षत्रियादिर्न पूजयेत्॥ इदं स्पर्शसहितपूजाविषयं शूद्रो वानुपनीतो वा स्त्रियो वा पतितोपि वा॥ केशवं वा शिवं वापि स्पृष्ट्वा नरकमश्नुते॥ ब्राह्मण्यपि हरिं विष्णुं न स्पृशेच्च परस्य तौ॥ सनाथा मृतनाथा वा तस्या नास्तीह निष्कृतिः॥ स्त्रीणामनुपनीतानां शूद्राणां च जनेश्वर॥ स्पर्शने नाधिकारोस्ति विष्णोर्वा शंकरस्य वेति स्कांदात्॥ स्पर्शरहितां तु तेपि भवंत्येव॥ शालग्रामं तु स्पृष्टे तु हीनवर्णो वसुंधरे॥ स्त्री शूद्रकरसंस्पर्शो वज्रस्पर्शाधिको मतः॥ मोहाद्यः संस्पृशेच्छूद्रो योषिद्वापि कदाचन॥ स पतेन्नरके घोरे यावदाभूतसंप्लवं॥ यदि भक्तिर्भवेत्तस्य स्त्रीणां वापि वसुंधरे॥ दूरादेवास्पृशन्पूजां कारयेत्सुसमाहितः इति वाराहोक्तेः॥ शालग्राममात्रनिषेधान्न प्रतिमादौ॥ सर्ववर्णैस्तु संपूज्याः प्रतिमा सर्वदेवताः॥ लिंगमपि तु पूज्यानि मणिभिः कल्पितानि चेति॥ तत्रैवोक्तेः॥ चत्वारो ब्राह्मणैः पूज्याः त्रयो राजन्यजातिभिः॥ विश्यैर्द्वावेव संपूज्यौ तथैकः शूद्रजातिभिरिति स्कांदाच्च॥ अन्ये तु दीक्षितादीक्षितविषयत्वेन व्यवस्थामाहुः॥ विष्णुधर्मे॥ तयोरसंभवे चार्चा वै साचेह नवधा स्मृता॥ रत्नजा हेमजा चैव राजती ताम्रजा तथा॥ रैतिकर्त्ती तथा लोही शैलजा

ङ्गमजातथा॥अथमाधमाचविज्ञेयामृण्मयीप्रतिमाचया॥एषांफलानितत्रैवज्ञेयानि॥तत्रैवयामेश
लिंगमंत्रकाम्य॥तत्राप्यामलकीतुल्यासूक्ष्मैवयाभवेत्॥यथायथाशिलासूक्ष्मातथास्यात्तुम
हत्फलं॥तथा॥यवमात्रंतुयद्गर्त्तंस्याद्यवार्द्धंलिंगमुच्यते॥शिवनाभिरितिख्यातस्त्रिषुलोकेषुदुर्लभः॥
तत्रैव॥शालिग्राममयीमुद्रासंस्थितायत्रकुत्रचित्॥वाराणस्यायवाधिकंसमंताद्योजनत्रयं॥यो
मृतस्तत्समीपेतुमृतोवानीयतेतिकं॥सर्वोमोक्षमवाप्नोतिसत्यंसत्यंनचान्यथा॥तत्रैव॥चक्रांक
मिथुनंपूज्यंनैकंचक्रांकमर्चयेत्॥चक्रांकमिथुनात्सार्द्धंसालग्रामंप्रपूजयेत्॥तत्रैववाराहे॥
म्लेच्छदेशेशुचौवापिचक्रांकोयत्रतिष्ठति॥योजनानांतथात्रीणिममक्षेत्रंवसुंधरे॥तत्रैवशालग्रा
मंप्रकाम्य॥क्रयक्रीतापरिज्ञेयामध्यमायाचितावमा॥प्रयोगपारिजातेवाराहे॥एवंलक्षणसंप
न्नापारंपर्यक्रमागता॥उत्तमासातुविज्ञेयागुरुदत्तापितत्समा॥ अथपार्थिवपूजा
नंदिपुराणे॥ आयुष्मान्बलवान्श्रीमान्पुत्रवान्धनवान्सुखी॥वरमिष्टंलभेल्लिंगं
पार्थिवंयःसमर्चयेत्॥तस्मात्तुपार्थिवंलिंगंज्ञेयंसर्वार्थसाधकं॥तत्रैव॥गोभूहिरण्यवस्त्रादिव
लिपुष्पनिवेदने॥ज्ञेयोनमःशिवायेतिमंत्रःसर्वार्थसाधकः॥सर्वमंत्राधिकश्चायमोंकाराद्यःष
डक्षरः॥भविष्ये॥मूर्त्तयोष्टौशिवस्यैताःपूर्वादिक्रमयोगतः॥आग्नेय्यंताःप्रपूज्यास्तुवेद्यांलिंगे
शिवंयजेत्॥अत्रनप्राचीमग्रतःशंभोरितिरुद्रयामलेनिषेधात्तेनलिंगेशिवंप्राचीकिंतुप्रसि
द्धैव॥तिथितत्त्वेदेवीपुराणे॥मृदाहरणसंघट्टप्रतिष्ठाह्वानमेवच॥स्नपनंपूजनंचैवविसर्जन
मतःपरं॥हरोमहेश्वरश्चैवशूलपाणिःपिनाकधृक्॥शिवःपशुपतिश्चैवमहादेवइतिक्रमात्॥
स्कांदे॥शुष्काण्यपिचपत्राणिश्रीवृक्षस्यनिवेदयेत्॥ तत्रैवभविष्ये॥ धूत्तूरकै
श्चयोलिंगंसकृत्पूजयतेनरः॥सगोलक्षफलंप्राप्यशिवलोकेमहीयते॥ योगिनीतंत्रे शि
वागारेझल्लकंचसूर्यागारेचशंखकं॥दुर्गागारेवंशवाद्यंमधुरींचनवादयेत्॥ अथहेमाद्रौस्कां
दे॥स्पृष्ट्वारुद्रस्यनिर्माल्यंसवासाआप्लुतःशुचिः॥प्रयोगपारिजातेक्रियासारेमध्यमानामिका
मध्येपुष्पंसंगृह्यपूजयेत्॥अंगुष्ठतर्जन्यग्राभ्यांनिर्माल्यमपनोदयेत्॥अपनीतंचनिर्माल्यंच
ण्डेशायनिवेदयेत्॥अशून्यमस्तकंलिंगंसदाकुर्वीतपूजकः॥शूलपाणौलैंगे॥वरंप्राणपरि
त्यागःशिरसोवापिकर्त्तनं॥नचैवाऽपूज्यभुंजीतशिवलिंगेमहेश्वरं॥सूतकेमृतकेचैवनत्याज्यं
शिवपूजनम्॥तिथितत्त्वेलैंगे॥विनाभस्मत्रिपुंड्रेणविनारुद्राक्षमालया॥पूजितोपिमहादेवो
नस्यात्तस्यफलप्रदः॥तस्मान्मृदापिकर्त्तव्यंललाटेवैत्रिपुंड्रकं॥रुद्राक्षधारणेविशेषःशिवरह
स्ये॥एकवक्त्रःशिवःसाक्षाद्ब्रह्महत्यांव्यपोहति॥अवध्यत्वंप्रतिस्रोतोवह्निस्तंभंकरोतिच॥द्वि
वक्त्रोहरगौरीस्याद्गोवधाद्यघनाशकृत्॥त्रिवक्त्रोह्यग्निजन्मायपापराशिंप्रणाशयेत्॥चतुर्वक्त्र
स्स्वयंब्रह्मनरहत्यांव्यपोहति॥पंचवक्त्रस्तुकालाग्निरगम्याभक्ष्यपापनुत्॥षड्वक्त्रस्तुगुहोज्ञेयो
भ्रूणहत्यादिनाशयेत्॥सप्तवक्त्रस्त्वनंतःस्यात्स्वर्णस्तेयादिपापहृत्॥विनायकोऽष्टवक्त्रःस्या
त्सर्वानृतविनाशकृत्॥भैरवोनववक्त्रस्तुशिवसायुज्यकारकः॥दशवक्त्रःस्मृतोविष्णुर्भूत
प्रेतभयापहः॥एकादशमुखोरुद्रोनानायज्ञफलप्रदः॥द्वादशास्यस्तथादित्यःसर्वरोगनि

वहेत्सा:।त्रयोदशमुखः कामः सर्वकामफलप्रदः।चतुर्दशास्यश्रीकंठोवंशोद्धारकरः परः॥ इति
तथा॥विनामंत्रेणयोधत्तेरुद्राक्षंभुविमानवः॥सयातिनरकान्घोरान्यावदिंद्राश्चतुर्दश॥पंचामृ
तेनचगव्यैःस्नानकालेप्रयोजयेत्॥रुद्राक्षस्यप्रतिष्ठायांमंत्रंपंचाक्षरंतथा॥त्र्यंबकादिमंत्रंचतथा
तत्रप्रयोजयेत्॥यद्वा॥ॐअघोरेॐह्रींअघोरतरॐह्रौंह्रांनमस्तेरुद्ररूपायहुंस्वाहा॥अनेनाभिमंत्र्य
धारयेत्॥तथा॥अष्टोत्तरशतंकार्य्याचतुष्पंचाशदेववा॥सप्तविंशतिमानावाततोहीनाधमास्मृता
प्रजापतिः॥मोक्षार्थीपंचविंशत्याधनार्थीत्रिंशतंजपेत्॥पुष्ट्यार्थीपंचदशभिरभिचार
के॥सप्तविंशतिरुद्राक्षमालयादेहसंस्थया॥यःकरोतिनरःपुण्यंसर्वंकोटिगुणंभवेत्॥योद
दातिद्विजेभ्यश्चरुद्राक्षंभुविसन्मुखम्।तस्यप्रीतोभवेद्रुद्रःस्वपदंचप्रयच्छतीति॥पदार्थादर्शेवोपदेवः
रुद्राक्षानेकदेशान्द्वादशैव॥वाह्वोर्द्विदोःकलाभिर्नयनयुगकृतेएकमेकंशिखायां॥वक्षस्यष्टाधिकंयःक
लयतिशतकंसस्वयंनीलकंठः॥ हेमाद्रौशिवधर्मे॥ स्नानंपलशतंज्ञेयंअभ्यं
पंचविंशतिः॥पलानांद्वेसहस्रेतुमहास्नानंप्रकीर्तितं।पंचविंशत्पलंलिंगेत्वभ्यंगंकारयेद्बुधः॥शिव
स्यसर्पिषास्नानंप्रोक्तंपलशतेनच॥तावतामधुनाचैवदध्नाचैवततःपुनः।तावतैवचक्षीरेणगव्येने
वभवेत्ततः।भूयःसार्द्धसहस्रेणपलानामिक्षवेनच।रसेनकारयेत्स्नानंभक्त्याचोष्णांबुनाततः॥विष्णु
दौतुस्कांदे॥क्षीराद्दशगुणंदध्नाघृतेनैवदशोत्तरम्॥घृताद्दशगुणंक्षौद्रंक्षौद्राच्चैक्षवजंतथा॥ब्राह्मे॥
देवानांप्रतिमापत्रघृताभ्यंगंसमाचरेत्॥पलानितत्रदेयानिअष्टद्यापंचविंशतिः॥ इदंकौ
शिकनाभिप्रायेण॥तंत्रेवसंग्रहे॥ विष्वक्सेनायदातव्यंनैवेद्यस्यशतांशकं॥पादोदकं
प्रसादंचलिंगेचंडेश्वरायतु॥पंचायतनसन्निवेशमाहवोपदेवः॥ पदार्थादर्शेच॥
शंभौमध्यगतेहरीनहरभूदेव्योहरौशंकरेभास्येनागसुतारवौहरगणेशाजांबिकास्थापिताः॥दे
व्यांविष्णुहरैकदंतरवयोलंबोदरेजेश्वरेनाम्नाःशंकरभागतोतिसुखदाव्यस्ताखहानिप्रदाः॥शं
करभागतःईशानकोणादारभ्यप्रदक्षिणमित्यर्थः॥अत्रदिक्स्वरूपमुक्तं॥प्रयोगपारिजातेमं
त्रशास्त्रे॥देवस्यमुखमारभ्यदिशंप्राचींप्रकल्पयेत्॥तदादिपरिवाराणामंगाद्यावरणस्थितिः।
अत्रक्रमः॥पाद्मे॥रविर्विनायकश्चंडीईशोविष्णुस्तुपंचमः॥अनुक्रमेणपूज्यंतेव्युत्क्रमेतुमह
द्भयं॥यथाऽऽज्यपूजकयोर्मध्येप्राचीप्रोक्ताविचक्षणैः॥ अथकेशवादिमूर्तयः
वोपदेवपदार्थादर्शे॥केविगोवादापुन्पेप्रजाधुत्कममात्रिनाः॥वाधीनृहसानिश्रीपशाङ्ग
विगपेचपे॥अत्रकेविरित्यादिःकेशवविष्ण्वादिचतुर्विंशतिमूर्तयोभिधीयंते॥शाङ्खंखाब्जगदेत्येये
रित्यर्थः॥शिष्टोपुजेपधंत्वर्थतःसिद्धं।अत्रदक्षिणाधःकरक्रमेणज्ञेयं॥दक्षिणाधःकरक्रमादिति
हेमाद्रिवचनात्॥तेनहेमाद्रिणासंवादः॥विशब्देनविपरीतेगचेदित्यर्थः॥अत्रापिशादित्यनुवृत्तिः
।शंखात्पद्मचक्रेरित्यर्थः।गपेरित्यत्रापिशादित्यनुवृत्तिः।शंखात्गदापद्मेरित्यर्थः॥विपरीतेपप्र
गदेत्रापिशंखाद्बेयेचपेशंखाच्चक्रपद्मेरित्यर्थः॥विरित्यत्रापिपद्मचक्रेत्यर्थः॥तेनगपेरित्यष्टौमूर्तयः
चपेरित्यत्र च॥अत्रमूलंहेमाद्रौज्ञेयम्॥ अथबौधायनसूत्रेत्रिविक्रमींचानुसृत्यलिंग
र्चाप्रतिष्ठोच्यते॥यजमानःस्वोक्तकालेश्वेद्युःदशद्वादशषोडशान्यतरहस्तं॥मंडपेकृत्वाग्नेयेह

स्तमात्रं चतुरस्रं कुंडं स्थंडिलं वा कृत्वा ॥ हस्तमात्रां वेदीं नैर्ऋते वास्तुमंडलं मध्ये वेदीं तदुपरि सर्वतोभ-
द्रं च कृत्वा प्राणानायम्यास्यां मूर्तौ देवस्य सान्निध्यसिद्ध्यर्थं दीर्घायुर्लक्ष्मीसर्वकामसमृद्ध्यक्षयसु-
खकामोऽमुकमूर्तिप्रतिष्ठां करिष्य इति ॥ संकल्प्य गणेशपूजनपुण्याहवाचनमातृकापूजननांदी-
श्राद्धानि कृत्वाचार्यं चतुरो वा ऋत्विजश्च वृत्वा वस्त्राद्यैः पूजयेत् ॥ अथाचार्यो यदत्र संस्थितमिति सर्ष-
पान् विकीर्यापोहिष्ठेति कुशोदकेन भूमिं प्रोक्ष्य देवा आयांतु यातुधाना अपयांतु विष्णो देवयजनं
रक्षस्वेति भूमौ प्रादेशं कृत्वा समंततस्तुलायद्वनिमार्गेण मंडपप्रतिष्ठां कृत्वा अरुत्वा पूर्वं वाग्नौ हिर-
ण्योपधाने देवं पंचगव्यहिरण्ययवदूर्वाश्वत्थपलाशपर्णैरापो हिष्ठेति तिसृभिर्हिरण्यवर्णा इति च-
तसृभिः पवमानः सुवर्जन इत्यनुवाकेनाभिषिच्य व्याहृतिभिश्च इदं विष्णुरिति पुष्पफलयवदूर्वाः
समर्प्य नमस्ते रुद्र मन्यव इति ॥ रक्षोहणमिति हस्ते कंकणं बध्वा वाससाच्छाद्य अवते हेड उदुत्त-
ममिति जलेऽधिवासयेत् ॥ इदं बौधायनोक्तं ॥ ततश्च लिंगे अर्चायां वाग्निं प्रतिष्ठाप्य गोक्षीरेण नी-
वारचरुं कृत्वा आज्यभागांते पलाशोदुंबराश्वत्थशम्यपामार्गसमिद्भिराज्येन चरुणा तिलैर्वा
प्रत्येकमष्टाविंशतिमष्टौ वाहुतीर्लोकपालमूर्तिमूर्तिपतिभ्यो हुत्वा स्थाप्यदेवमंत्रेणाष्टोत्त-
समित्तिलैर्वा स्वर्वाज्यैश्च सहस्रमष्टशतमष्टाविंशतिं वा हुत्वा अग्निर्यजुर्भिरित्यनुवाकेन दशाहु-
तीर्जुहुयात् ॥ प्रतिद्रव्यं होमांते देवपादनाभिशिरः स्पृशेत् ॥ आज्यहोमे चोत्तरतः सजलकुंभे संपातं नये-
त् ॥ तेषां मंत्राः ॥ इंद्रायेंदो इति इंद्रस्य ॥ स्योना पृथिवीति पृथिवीमूर्तेः ॥ अघोरेभ्य इति तत्पतेः शर्वस्य ॥ अग्न
आयाहीत्यग्नेः ॥ अग्निं दूतमित्यग्निमूर्तेः ॥ नमः शर्वाय च पशुपतये चेति पशुपतेः ॥ यमाय सोमं
यमस्य ॥ असि हि वीरेति यजमानमूर्तेः ॥ कहि श्रुतं तत्पतेरुग्रस्य ॥ असुन्वंतमिति नैर्ऋतेः ॥ आकृष्णे-
न० सूर्यमूर्तेः ॥ यो रुद्रो अग्नाविति तत्पते रुद्रस्य ॥ इमं मे वरुण ॥ शन्नो देवीः जलमूर्तेः ॥ नमो भवायेति
भवस्य ॥ आ नो नियुद्भिः ॥ वायोः ॥ वात आवातु ॥ वायुमूर्तेः ॥ तमीशानं तत्पतेरीशानस्य ॥ आप्याय-
स्व ॥ कुबेरस्य ॥ वयं सोम सस्य इति सोममूर्तेः तत्पुरुषायेति महादेवस्य ॥ अभि त्वा ईशानस्य ॥ अनिव-
लस्येत्याकाशस्य ॥ नमः उग्राय चेति तत्पतेर्भीमस्य ॥ ततो देवस्य पादौ स्पृशेत् ॥ एवं द्वितीये हुत्वा
नाभिं ॥ तृतीये मध्यं ॥ चतुर्थे उरः ॥ पंचमे शिरः स्पृशेत् ॥ प्रतिपर्वसंपातजलेन देवमभिषिंचेत्
ततः [illegible] शेषं समाप्य [illegible] ॥ स्थिरलिंगे [illegible] नामद्भिः स्नापयन्होमा-
दि कार्यं ॥ [illegible] देवं नत्वा ॥ [illegible] गते देवदेवेश [illegible] नमस्कृत्वा ॥ [illegible] कुंभः
[illegible] पुनराचा-
यं [illegible] समष्टशतमष्टा-
विंशतिं [illegible]
थिव्यामावी राजानमिति च संस्नाप्य ॥ आप्यायस्व दधिक्राव्णस्तेजोसि मधुवाता आयं गौरिति
चाष्टभिः संस्नाप्य ॥ लिंगं चेन्नमस्ते रुद्र मन्यव इत्यष्टाभिः संस्नाप्य घृतेनाभ्यज्योद्वर्तनं ने [illegible]
न प्रक्षाल्य गंधं दत्वा संपातोदकेनाभिषिंच्य सपल्लवैश्चतुर्भिः कुंभैरापो हिष्ठेति त्रिभिरव [illegible]
प्रत्येकं समुद्रज्येष्ठेति चतुर्भिः कलशैर्विति प्रत्येकं समुद्रज्येष्ठेति चतुर्भिः कलशैर्विति च [illegible]

पऔदुंबरादिपीठे अर्च्चामुपवेश्य परितोऽष्टदिक्षु सजलकुंभान् संस्थाप्य गंधपुष्पदूर्वाः क्षिप्त्वा
ऽऽद्ये सप्तमृदं। द्वितीये पुष्करपर्णशमीविकंकताश्मंतकत्वचः पल्लवांश्च। तृतीयादिषु सप्तधान्यपं
चरत्नफलपुष्पाणि कुशदूर्वागोरोचनाः संपातोदकसर्वौषधीः क्षिप्त्वा क्रमेणापोहिष्ठेति त्रिभि
र्हिरण्यपेति चतुर्भिः पवमानानुवाकेन वाऽभिषिंच्यैककुंभे शमीपलाशवटखदिरबिल्वाश्वत्थ
विकंकतपनसाम्रशिरीषोदुंबराणां पल्लवान् कषायांश्च क्षिप्त्वा पंथेत्यवरत्यभिषिंच्य पंचरत्नो
दकेन हिरण्यवर्णा इति संस्थाप्य वाससी द्वे उपवीतादि दीपांतं कृत्वा॥ हिरण्यगर्भः॥ य आत्म
दा यः प्राणतः यस्येमे। येन द्यौः॥ यं क्रंदसी॥ आपोह यत्॥ यश्चिदापो इत्यष्टौ पिष्टीपान्दत्वा
सुवर्णशलाकया तेजस्पात्रस्थं मधुघृतं च गृहीत्वा॥ चित्रं देवानां तेजोसीति मंत्राभ्यां॥ ॐ न
मो भगवते तुभ्यं शिवाय हरये नमः॥ हिरण्यरेतसे विष्णो विश्वरूपाय ते नमः इति च दक्षिणसव्ये दे
वनेत्रे मंत्राट् न्यालिखेत्। अंजंति त्वामंजनेन मधुना वा त्वा देवस्य त्वेति मध्वाज्यशर्कराभिरुत्वाते
नैवाजंनेन पुनरंजयेत्। अत्रानज्मीति शेषः॥ स्थिरलिंगे तु स्वर्णसूच्याग्रेण ॐ नमो भगवते
रुद्राय हिरण्यरेतसे परायपरमात्मने विश्वरूपायोमाप्रियाय नमः इत्यंजनादिनांजयेत्। त
त आदर्शभस्मादि दर्शयेत्॥ ततः कर्त्ता आचार्याय गामृत्विग्भ्यश्च दक्षिणां दद्यात्॥ अथाचार्यः
प्रत्यङ्मारो प्रणवं वदन् पुरुषसूक्तेन स्तुत्वा वंशपात्रे पंचवर्णोदमेन देवस्य नीराजनं कारयि
त्वा रुद्राय चतुष्पथादौ दद्यात्॥ मंत्रस्तु॥ ॐ नमो रुद्राय सर्वभूताधिपतये दीप्तशूलध
राये मादपिनाय विश्वाधिपतये रुद्राय वै नमो नमः॥ शिवमगर्हितं कर्मास्तु स्वाहेति॥ अश्वत्थप
र्णभूतेभ्यो नमः इति॥ केचिदेतद्रात्रौ स्थिरप्रतिष्ठायामिच्छंति॥ अथाचार्यः सर्वतोभद्रे देवानावा
हयेत्॥ मध्ये ब्रह्माणं पूर्वादिदिक्षु द्वादिलोकपालान्॥ ईशानेंद्राद्यंतरालेषु वसून् रुद्रान् आदि
त्यान् अश्विनौ विश्वान्देवान्॥ पितॄन् नागान् स्कंदवृषौ॥ ब्रह्मेशानाद्यंतरालेषु दक्षविष्णु
दुर्गास्वधाकारं मृत्युरोगान् समुद्रान् सरितः मरुतः गणपतिं चेति॥ मध्ये एव पृथिवीं मेरुं संस्था
प्य देवं चावाह्य॥ प्राणादि॥ वज्रंशक्तिं दंडं खड्गं पाशं अंकुशं गदां शूलं॥ तद्बाह्ये गौतमं भरद्वाजं
विश्वामित्रं कश्यपं जमदग्निं वसिष्ठमत्रिमरुंधतीं च॥ तद्बाह्ये नवग्रहान्॥ तद्बाह्य ऐन्द्रीं कौमारीं
ब्राह्मीं वाराहीं चामुण्डां॥ वैष्णवीं माहेश्वरीं वैनायकीमिति॥ एतानामभिरावाह्यसंस्माह्मीवारु
चीयान्देवं तं मंत्रेण वाह्यमंडलमध्ये चार्यां सुप्रतिष्ठो भवेति निवेश्य॥ संपूज्य वह्निमंडले दे
वतानां नामभिस्तिलाज्येन दशदशाहुतीर्हुत्वा शय्यायां देवमारोप्य पुरुषसूक्तेन नारायणा
भ्यां स्तुत्वा देवे न्यासं कुर्यात्॥ यथा॥ पुरुषात्मने नमः॥ प्राणात्मने० प्रकृतितत्वाय० बुद्धित
त्वाय० अहंकारतत्वाय० मनस्त० इति सर्वांगे॥ प्रकृतित० बुद्धित० हृदि। शब्दत० शिरसि॥ स्प
र्शत० त्वचि॥ रूपत० दृशि॥ एवं रसगंधश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूप
स्थपृथिव्यप्तेजोवाय्वाकाशसत्वरजस्तमो देहतत्वानि विन्यसेत्॥ ततः पुरुषसूक्ताद्यमृग्
द्वयं करयोः॥ तदुत्तरं जानुनोः॥ तदुत्तरं कट्योः॥ तं यज्ञमिति तिस्रः नाभिहृत्कंठेषु॥ तस्माद
श्वेति द्वयं बाह्वोः॥ ब्राह्मणोस्येति द्वयं नासयोः॥ नाभ्या इति द्वयमक्ष्णोः॥ अंत्यं शिरसि॥ केचित्तु

न्यासमन्यथाहुः॥पुरुषप्रकृतिमहदहंकारतत्त्वानि॥शब्दस्पर्शरूपरसगंधतन्मात्राणि॥आ
काशवायुतेजोपृथिवीश्रोत्रत्वक्चक्षुरसनघ्राणवाक्पाणिपादपायूपस्थमनस्तत्त्वानी
ति॥केचिदेतानि स्थिरलिंगादावेवेच्छंति॥ततः सुखशायी भवेति शय्यायां देवं स्थापयित्वा मंडल
शय्ययोरंतरालेन गंतव्यमिति प्रैषं दत्त्वा मंडलदेवताभ्यो नामभिः पायसेन चरुणा बलीन्दद्यात्
।नीवारचरुशेषेण शिवलिंगे नेदं स्थिरप्रतिष्ठायां स्थिरलिंगादौ त्वयं विशेषः॥अग्निस्थापनहोम
वर्जं सर्वं पूर्ववत्कृत्वा इदानीमपि स्थापनं कृत्वा पूर्वोक्तहोमं कुर्यात्॥नात्र नैवारश्चरुः॥वि
ष्णुश्चेत्पूर्वोक्तहोमं कृत्वा॥पुरुषसूक्तेन प्रत्यृचमाज्यं हुत्वेदं विष्णुरिति॥पादौ स्पृष्ट्वा पुनस्तावद्धु
त्वा विष्णोर्नुकमिति नाभिं स्पृशेत्॥पुनस्तावद्धुत्वातो देवेति शिरः स्पृष्ट्वा पुनस्तावद्धुत्वा पुरुष
सूक्तेन सर्वांगं स्पृशेत्॥स्थिरलिंगं चेदग्निस्थापनादि पूर्वोक्तसमिदाज्यतिलाहुतीर्हुत्वा यात इ
षुरित्यनुवाकांते द्रापे सहस्राणीत्यनुवाकाभ्यां प्रत्यृचमाज्यं हुत्वा सर्वो वै रुद्र इति मूलं स्पृशेत्॥पु
नस्तावद्धुत्वा सर्वं रुद्रेण सर्वांगं स्पृशेत्॥ततो धामंत इति पूर्णाहुतिं जुहुयान्नवा॥एवमधिवा
सनं कृत्वा परेद्युः सद्यो वा पीठिकां स्थापयित्वा महीमूषुमातरं वाससादित्यौरिति स्तुत्वा॥ह्रीं नम इति
संपूज्य तेनैव पूर्णाहुतिं हुत्वोत्तिष्ठ ब्रह्मणस्पत इति देवमुत्थाप्य पुष्पांजलिं दत्त्वा॥पुरुषसूक्तेन स्तु
त्वोदुत्यमित्युत्थाप्य॥कनिक्रददिति सूक्तेन विष्णुं सद्योजातमिति पंचानुवाकैर्लिंगं गृहं प्रवेश्य पी
ठिकायां॥इंद्रादिनामभिरष्टरत्नानि क्षिप्त्वा सप्तधान्यरूप्य॥श्यामनःशिलाः क्षिप्त्वा पायसेन सं
लिप्य प्रणवेनागमास संस्कृत्वा सुवर्णशलाकामंतरितां कृत्वा ॐ सुलग्ने प्रतितिष्ठ परमेश्वरस्तु
त्वाऽतो देवेति विष्णुं रुद्रेण च लिंगं स्थापयेत्॥ततः प्राणप्रतिष्ठा॥चलार्चादौ त्वधिवासनांते प
रेद्युरुत्तिष्ठ ब्रह्मणस्पत इति देवमुत्थाप्य॥पुरुषसूक्तोक्तनारायणाभ्यां स्तुत्वा घृते व्रीहिचरुं
कृत्वा तद्देवतामंत्रेण दशाहुतीर्हुत्वा नामभिर्जुहुयात् अग्नये स्वाहा॰ सोमाय॰ धन्वंतरये॰ कु
ह्वै॰ अनुमत्यै॰ प्रजापतये॰ परमेष्ठिने॰ ब्रह्मणे॰ अग्नये॰ सोमाय॰ अग्नीपितराय॰ अग्नये
न्नपतये॰ प्रजापतये॰ विश्वेभ्यो देवेभ्यः सर्वेभ्यो देवेभ्यः॥भूर्भुवः स्वः अग्नये स्विष्टकृत इति॥त
तः सप्त ते पुनस्त्विमाभ्यां पूर्णाहुतिः॥ततः आचार्यो या ओषधीरिति सर्वौषधीः समर्प्य संपा
तोदकं देवमंत्रेण शतवारमभिमंत्र्य तेनैवाभिषिंचेत्॥तत उत्तिष्ठेति देवमुत्थाप्य विश्वतश्चक्षु
रित्युपस्थाप्य देवं ध्यात्वा जयेत्॥ब्रह्मणे नमः॥एवं विष्णवे रुद्राय इंद्रादीनष्टौ॥वसुभ्यो रुद्रे
भ्य आदित्येभ्योऽश्विभ्यां मरुद्भ्यः कुबेराय गंगादिमहानदीभ्योऽग्नीषोमाभ्यामिंद्राग्निभ्यां द्यावा
पृथिवीभ्यां धन्वंतरये सर्वौषधाय विश्वेभ्यो देवेभ्यो ब्रह्मण इति॥ततः संपातोदकेन यजमानम
भिषिच्य देवं ध्यात्वा॥प्रतितिष्ठ परमेश्वरेति पुष्पांजलिं निवेद्य सच्चिदानंदब्रह्मैव भक्तानुग्र
हाय गृहीतविग्रहं करचरणाद्यवयविनं शंखचक्राद्यायुधवंतं निजवाहनायुधेतं निजहृत्क
मले स्थितं सर्वलोकसाक्षिणमरणीयां स परमेशस्य परमां श्रियं गमयेति॥मंत्रेण पुष्पांज
लावागतं विभाव्यार्चायां विन्यस्य प्राणप्रतिष्ठां कुर्यात्॥यथा॥प्राणप्रतिष्ठामंत्रस्य ब्रह्मवि
ष्णुरुद्रा ऋषयः ऋग्यजुःसामानि छंदांसि॥क्रियामयवपुः प्राणाख्या देवता॥आं बीजं क्रों

शक्तिःप्राणप्रतिष्ठायांविनियोगः॥ततोन्यासादीन्क्रमेणशिरोमुखहृदयगुह्यपादेषुविन्यस्यओं
कंखंगंघंङंअंपृथिव्यप्तेजोवाय्वाकाशात्मनेआंहृदयायनमः॥ॐचंछंजंझंञंशब्दस्पर्शरूप
रसगंधात्मनेईंशिरसेस्वाहा॥ॐटंठंडंढंणंउंश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मनेऊंशिखायैवष
ट्॥ॐतंथंदंधंनंएंवाक्पाणिपाद पायूपस्थात्मनेऐंकवचायहुं॥ॐपंफंबंभंमंओंवचना
दानविहरणोत्सर्गानंदात्मनेऔंनेत्रत्रयायवौषट्॥ॐयंरंलंवंशंषंसंहंळंक्षंअंमनोबुद्ध्यहंकार
चित्तात्मनेअःअस्त्रायफट्॥एवंन्यासंनिदेवेचकृत्वादेवंस्पृष्ट्वाजपेत्॥ॐआंह्रींक्रोंयंरंलंवंश
षंसंहंसःदेवस्यप्राणाइहप्राणाः॥ॐहंसःदेवस्यजीवइहस्थितः॥ॐआंह्रींक्रोंयंरंलंवंशंषंसंहंसः
देवस्यसर्वेंद्रियाणि॥ॐआंह्रींक्रोंयंरंलंवंशंषंसंहंसदेवस्यवाङ्मनश्चक्षुःश्रोत्रघ्राणप्राणाइ
हागत्यसुखंचिरंतिष्ठंतुस्वाहेति॥ततोहृदयंस्पृष्ट्वाजपेत्॥अस्यैप्राणाःप्रति
ष्ठंतुअस्यैप्राणाःक्षरंतुच॥अस्यैदेवत्वमर्चायैमामहेतिचकश्चनेति॥ततःप्रणवेनसंरुध्यस
जीवंध्यात्वाध्यावाघोरितिऋचंजप्त्वाकर्णेगायत्रींदेवमंत्रंचजप्त्वापुरुषसूक्तेनोपस्थायपाद
नाभिशिरस्सुस्पृष्ट्वाइहैवैधीतित्रिर्जपेत्॥ततःकर्त्तास्वागतंदेवदेवेशमद्भाग्यात्त्वमिहागतः॥प्राकृत
त्वमदृष्ट्वामांबालवत्परिपालय॥धर्मार्थकामसिद्ध्यर्थंस्थिरोभवशुभायनः॥सान्निध्यंतुसदादेव
स्वार्चायांपरिकल्पय॥यावच्चंद्रावनीसूर्यास्तिष्ठंत्यप्रतिघातिनः॥तावत्त्वयात्रदेवेशस्थेयंभक्तानु
कंपया॥भगवन्देवदेवेशत्वंपितासर्वदेहिनां॥येनरूपेणभगवंस्त्वयाव्याप्तंचराचरं॥तेनरू
पेणदेवेशस्वार्चायांसंनिधौभवेतिनमेत्॥एतदंतंसर्वदेवानांसमानं॥देवमंत्रश्चमूलमंत्रोवैदि
कोवाग्राह्यः॥अथाचार्यःकर्त्तावालिंगमर्चेद्वा॥ॐभूःपुरुषमावाहयामि॥ॐभुवः॥ॐस्वः॥ॐ
भूर्भुवःस्वःपुरुषमावाहयामीत्यावाह्यप्रणवेनासनंदत्वातेनैवदूर्वाश्यामाकविष्णुक्रांतापद्ममि
श्रंपाद्यं॥इमाआपःशिवतमाःपूताःपूततमामेध्यामेध्यतमाअमृताअमृतरसाःपाद्यास्तांजु
षंतांप्रतिगृह्यंतांप्रतिगृह्णातुभगवान्महाविष्णुर्विष्णवेनमइतिपाद्यं॥भगवान्महादेवोरुद्राय
नमःइतिलिंगे॥इमाआपः०आचमनीयाः॥स्ताजुषंतामितिएलालवंगकंकोलकर्पूरमिश्र
माचमनीयं॥आपःक्षीरकुशाग्रैश्चाक्षतैर्यवतंदुलैः॥यवैःसिद्धार्थकैश्चैव॥अर्घ्यइत्यर्घ्यं॥
ततोवेदमंत्रैःप्रणवेनचरत्नांबुकलशेनस्नाप्येदंविष्णुरितिविष्णौनमोस्तुनीलग्रीवायेऽ
तिलिंगेप्रतिसरंविस्रस्यदेवंनत्वा॥इमेगंधाःशुभादिव्याःसर्वगंधैरलंकृताः॥पूताब्रह्मपवि
त्रेणपूताःसूर्यस्यरश्मिभिः॥पूताइमादिशवेवत्॥इतिगंधं॥इमेमाल्याःशुभादिव्याःसर्वमा
ल्यैरलंकृताः॥पूता०माल्यमिमेपुष्पाइतिपुष्पं॥वनस्पतिरसोधूपोगंधाढ्योधूपउत्तमः॥आ
घ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतां॥प्रतिगृह्यतांप्रतिगृह्णात्वित्यादि॥धूपं॥ज्योतिःशुक्रंचते
जश्चदेवानांसततंप्रियः॥प्रभाकरःसर्वभूतानांदीपोयंप्रतिगृह्यतांइतिदीपंदत्वाविष्णौ॥संक
र्षणवासुदेवप्रद्युम्नानिरुद्धपुरुषोत्तमाधोक्षजनृसिंहाच्युतजनार्दनोपेंद्रहरिकृष्णेतिद्वादश
नामभिःकेशवादिद्वादशनामभिर्वापुष्पाणिसमर्प्यतैरेवतर्पणंकृत्वापायसघृतगुडशर्क
शर्करान्वउतःशुद्धोदनहविष्योदनानियविन्नेतेविततमितिनिवेद्यकृशरमाज्यमिश्रंजुहुयात्॥वा

सुदेवायस्वाहा॥संकर्षणाय॰प्रद्युम्नाय॰अनिरुद्धाय॰शांत्यै॰श्रियै॰सरस्वत्यै॰पुष्ट्यै॰विष्णवेइति
हुत्वाविष्णोर्नुकम्॥तदस्यप्रियं॥प्रतद्विष्णुः॥परोमात्रया॥विचक्रमे॥त्रिर्देवइतिद्वादशनामभिश्च
अमुष्मैस्वाहेतिजुहुयात्‌लिंगेतुदीपांतंकृत्वाभवायदेवायशर्वायईशाय॥पशुपतये॰रुद्रा
य॰उग्राय॰भीमाय॰महतेदेवाय॰नमइतिपुष्पाणिदत्वानैवेद्यंदत्त्वापवित्रंतोऽग्निमा
यसंगुडौदनंचनिवेद्यपूर्वोक्तनामभिःकृशरंहुत्वाभवस्यदेवस्यपत्न्यैस्वाहाइत्याद्यष्टभिःगु
डौदनंहुत्वाभवस्यदेवसुताय स्वाहेत्याद्यैर्हरिद्रौदनंहुत्वाव्यंबकंमानोमहांतंमानस्तोके आ
रात्तेगोघ्नंविकिरिदविलोहितसहस्राणिसहस्रशइतिपंचभिर्हुत्वाशिवायशंकरायसहमा
नायशितिकंठायकपर्दिने॥ताम्राय॰अरुणाय॰अपगुर्माणाय॰हिरण्यबाहवे॰सस्पिं
जराय॰बभ्रुशाय॰हिरण्यायेतिचजुहुयात्॥ततःस्विष्टकृदादिशेषंसमाप्यपूर्वोक्तसर्वं
हविर्भिर्विष्णवेलिंगायवाबलिंदद्यात्॥मंत्रस्तुत्वामेकमाद्यंपुरुषंपुरातनंनारायणंविश्व
जयजामहे॥त्वमेवयज्ञोविहितोविधेयस्त्वमात्मनात्मन्प्रतिगृह्णीष्वहव्यमिति॥लिंगेतु
नारायणपदेरुद्रंशिवमितिवदेत्॥ततोऽन्यपर्णेषुभूर्भुवःस्वरोमितित्रिरभ्युक्ष्यहुतशे
षंनिधायअग्निनासहप्रदक्षिणीकृत्यविश्वभुजेसर्वभुजेआत्मनेपरमात्मनेनमः॥इतिन
त्वाऽंगुलीयंकुंडलद्वयंवस्त्रयुग्मेनाचार्यंपूजयित्वा॥आचार्यायशतंतदर्धंतदर्धंवाद्वादश
तिस्रएकांवागांदत्वाऋत्विग्भ्योपिदक्षिणांदत्वाशतंद्वादशवाविप्रान्भोजयेदितिसंक्षे
पः॥प्रासादमात्रेतूक्तनेतुमात्स्योक्तजलाशयप्रतिष्ठाविधिमेवकुर्यात्॥गोकर्णारण्यवा
त्रीप्रक्षेपादितुनभवतिद्वारलोपात्॥वारुणहोमस्थानेवास्तुहोमः॥अन्यत्तद्वत्॥०

इतिकमलाकरभट्टकृतेलिंगा

र्चाप्रतिष्ठाविधिः॥अथपुनः

प्रतिष्ठा॥०

तामधिकृत्यहयशीर्षपंचरात्रेचांडालमद्यसंस्पर्शदूषितावह्निनाथवा॥अशुद्धजनसं
स्पृष्टाविप्रक्षत्रजदूषिता॥संस्कार्येतिशेषः॥पदार्थादर्शेब्राह्मे॥खंडितेस्फुटितेदग्धेभ्र
ष्टेमानविवर्जिते॥यागहीनेपशुस्पृष्टेपतितेदुष्टभूमिषु॥अन्यमंत्रार्चितेचैवपतितस्प
र्शदूषिते॥यागहीनेपशुस्पृष्टेपतितेदुष्टभूमिषु॥अन्यमंत्रार्चितेचैवपतितस्पर्शदूषिते
दशस्वेतेषुनोचक्रुःसन्निधानंदिवौकसः॥यागःपूजा॥पशुर्गर्दभादि॥पंचरात्रे॥खंडि
तास्फुटितादग्धाप्रस्माद्र्चाभयावहा॥तस्मात्समुद्धरेत्तांतुपूर्वोक्तविधिनानरः॥अर्चा
भंगादावुपवासःकार्यः॥नराज्ञोविलवेश्रीयात्पुराचीविलवेतथेति॥विष्णुधर्मोक्तेः॥सि
द्धांतशेखरे॥चोरचांडालपतितश्वोदक्याःस्पर्शनेसति॥शिवाद्युपहतौचैवप्रतिष्ठांपुनरा
चरेत्॥पंचरात्रे॥अंगादंगादिसंधानेप्रतिष्ठांपुनराचरेत्॥जलाधिवासविहितनेत्रोन्मी
लनवर्जितम्॥शुद्धिविवेकेविष्णुः॥द्रव्यवत्कृतशौचानांदेवतार्चानांभूयःप्रतिष्ठापनेशु
द्धिरिति॥अर्चाःप्रतिमाः॥तद्द्रव्यस्यताम्रादेरुक्तवत्॥शौचंकृत्वापुनःप्रतिष्ठांकुर्यादित्य

त्यर्थः ॥ स्मृत्यर्थसारेप्येवम् ॥ तद्विधिर्बौधायनसूत्रे ॥ पूर्वप्रतिष्ठितस्य बुद्धिपूर्वमेकरात्रं द्विरात्रमे
कमासं द्विमासं वार्चनादिविच्छेदे शूद्ररजस्वलाद्युपस्पर्शने पूर्वोक्तकाले पुण्याहं वाचयित्वायु
ग्मान् ब्राह्मणान् भोजयित्वा निशायां जलाधिवासं कृत्वा श्वोभूते कलशपूर्णेन पंचगव्येन त
न्मंत्रैः स्नापयित्वा अन्यं कलशं शुद्धोदकेनापूर्य तस्मिन् रत्नानि प्रक्षिप्य तं कलशं गा
यत्र्या अष्टसहस्रमष्टशतमष्टाविंशतिवारं वाभिमंत्र्य तेनोदकेन देवं स्नापयेत् ॥ ततः शुद्धोदकेन
स्नपयेत् सहस्रगोदत्ताय यथासंभवमर्चयित्वा गुडोदनं निवेदयेदिति ॥ बुद्धिपूर्वं तु विच्छेदे पूर्वोक्तां प्रति
ष्ठां पुनः कुर्यात् ॥ पूर्वोक्तविष्णुवचनात् ॥ इदं मलमासशुक्रास्तादावपि कार्यमिति मदनरत्ने हेमाद्रौ
च ॥ देवार्चाप्रासादभेदने तु शूलपाणौ काश्यपः ॥ वापीकूपारामसेतुसभातडागवप्रदेवतायतनभे
दने प्रायश्चित्तं च तस्य आहुतीर्जुहुयादिदं विष्णुर्मानस्तोके विष्णोः कर्माणि पादोसीति ॥ यादेवता।
ये ब्राह्मणान् भोजयेदिति ॥ शंखलिखितौ ॥ प्रतिमारामकूपसंक्रमध्वजसेतुनिपातभंगेषु तत्समुत्था
नं प्रतिसंस्कारोष्टशतं च निपातितानामिति ॥ समुत्थानं प्रतिक्रिया ॥ प्रतिसंस्कारः पुनः प्रतिष्ठा ॥
अष्टशतं पणाः दंड इत्यर्थः ॥

## अथ जीर्णोद्धारः

स च लिंगादौ दग्धे भ
ग्ने चलिते वा कार्यः ॥ अयं चानादिसिद्धप्रतिष्ठितलिंगादौ भंगादिदुष्टेपि न कार्यः ॥ तत्र तु महाभिषे
कं कुर्यादिति त्रिविक्रमः ॥ कर्तामुकदेवस्य जीर्णोद्धारं करिष्य इत्युक्त्वा पुण्याहं वाचयित्वाचार्यमृत्विज
श्च वृत्वा लिंगं ॥ ॐ व्यापकेश्वर हृदयाय नमः ॥ ॐ व्यापकेश्वर शिरसे स्वाहेति ॥ एवं षडंगं कृत्वा घोर
मंत्रशतं जप्त्वाग्निं प्रतिष्ठाप्याघोरेण घृतसर्षपैः सहस्रं हुत्वेंद्रादिभ्यो नाम्ना बलिं दत्वा जीर्णं देवं प्रण
वेन संपूज्य ब्रह्मादिमंडलदेवानां होमं पूर्वोक्तं कृत्वा देवं प्रार्थयेत् ॥ जीर्णभग्नमिदं चैव सर्वदोषावहं
नृणां ॥ अस्योद्धारे कृते शांतिः शास्त्रेस्मिन् कथिता त्वया ॥ जीर्णोद्धारविधानं च नृपराष्ट्रहितावहम्
॥ तदधितिष्ठ तां देव प्रहरामि तवाज्ञयेति ॥ ततः क्षीराज्यमधुदूर्वाभिः समिद्भिश्चाष्टोत्तरसहस्रं शतं वा
देवमंत्रेण हुत्वा ॥ अमानां दशांशेन लिंगचालनार्थं सहस्रं शतं वा पायसेन हुत्वा लिंगं प्रार्थयेत् ॥
लिंगरूपं समागत्य येनेदं समधिष्ठितं ॥ याया त्वं संश्रितः स्थानं संत्यज्यैव शिवाज्ञया ॥ अत्र स्थाने च
या विद्या सर्वा विद्येश्वरैर्युता ॥ शिवेन सह संतिष्ठेत् तन्मंत्रितजलेनाभिषिच्य विसर्जयेत् ॥ ततोस्त्रमंत्रि
तेन खनित्रेण खात्वा लिंगमादाय नद्यादौ वामदेवेन लिंगं प्रणवेन मूर्तिं क्षिपेत् ॥ दारुजं तु मधुना
भ्यक्ताघोरेण दहेत् ॥ हेमरत्नादिमयं तु दग्धं चलितं वायोग्यं चेत् ॥ पुनस्तत्रैव स्थापयेत् ॥ ततः शां
त्यै अघोरेण तिलैः सहस्रं हुत्वा प्रार्थयेत् ॥ भगवन् भूतभव्येश लोकनाथ जगत्पते ॥ जीर्णलिंगस
मुद्धारः कृतस्तवाज्ञया मया ॥ अग्निना दारुजं दग्धं क्षिप्तं शैलादिकं जले ॥ प्रायश्चित्ताय देवेश
अघोरास्त्रेण तर्पितम् ॥ ज्ञानतोज्ञानतो वापि यथोक्तं न कृतं यदि ॥ तत्सर्वं पूर्णमेवास्तु त्वत्प्रसा
दान्महेश्वरेति ॥ ततो यजमानः प्रार्थयेत् ॥ गोविप्रशिल्पिभूपानामाचार्यस्य च यज्वनः ॥ शांतिर्भव
तु देवेश अच्छिद्रं जायतामिदम् ॥ मूर्तौ तु विशेषः ॥ त्वत्प्रसादेन निर्विघ्नं देहं निर्मापयत्यसौ ॥ वासं कु
रु सुरश्रेष्ठ तावत्त्वं चाल्पके गृहे ॥ वसन् तोषसहितस्त्विह मूर्तिं वै नवपूर्ववत् ॥ यावत्कारयते भक्त्या कु
रुतस्य च वांछितमिति ॥ ततो नवां मूर्तिं लिंगं वा कृत्वोक्तविधिना स्थापयेत् ॥ मूलं च त्रिपुरार्णवे स्पष्टं

इतिजीर्णोद्धारः॥ अथतुलसीग्रहणम्॥ देवयाज्ञिकधृतेस्मृतिसा
रे॥ नधात्रीच्छायायांतेभौमभार्गवभानुषु॥ पर्वद्वयेचसंक्रांतौद्वादश्यांसूतकद्वये॥ तुलसींयेवि
चिन्वंतितेच्छिंदंतिहरेःशिरः॥ विष्णुधर्मोत्तरे॥ रविवारंविनादूर्वांतुलसीं द्वा
दशींविना॥ जीवितस्याविनाशायनप्रविचिन्वीतधर्मवित्॥ तथा॥ संक्रांत्यावर्कपक्षांतेद्वादश्यांनि
शिसंध्ययोः॥ येछिंदंतितुलसीपत्रंतेछिंदंतिहरिमस्तकं॥ पाद्मे॥ द्वादश्यांतुलसीपत्रंधात्रीपत्रंच
कार्तिके॥ लूनातिसनरोगच्छेन्निरयानतिगर्हितान्॥ रुद्रयामले॥ द्वादश्यांच
दिवास्वापंतुलस्यवचयस्तथा॥ विष्णोश्चैवदिवास्नानंवर्जनीयंसदाबुधैः॥ विष्णुधर्मेनच्छिंद्या
त्तुलसींविप्राद्वादश्यांवैष्णवःक्वचित्॥ देवार्थेतुलसीच्छेदोहोमार्थेसमिधांतथा॥ इंदुक्षयेनदुष्यंत
गवार्थेतुतृणस्यच॥ ग्रहणमंत्रस्तुपाद्मे॥ तुलस्यमृतनामासिसदात्वंके
शवप्रिया॥ केशवार्थंविचिन्वामिवरदाभवशोभने॥ इति॥ पारिजातेदक्षः समित्पु
ष्पकुशादीनांद्वितीयःप्रहरोमतः॥ अथपुष्पादेःपर्युषितत्वम्॥ भार्गवा
र्चनेभविष्ये॥ प्रहरंतिष्ठतेजातीकरवीरमहर्निशं॥ तुलस्यांबिल्वपत्रेषुसर्वेषुजलजेषुच॥ नपर्यु
षितदोषोस्तिमालाकारगृहेपिच॥ वृहन्नारदीये॥ वर्ज्यंपर्युषितंपुष्पंवर्ज्यंपर्युषि
तंजलं॥ नवर्ज्यंतुलसीपत्रंनवर्ज्यंजान्हवीजलं॥ तत्रैवपाद्मे॥ तुलसीपर्युषिता
नैवबिल्वंतुत्रिदिनावधि॥ पद्मंपंचदिनान्यात्संशेषंपर्युषितंविदुः॥ स्कांदे॥ प
लाशंदिनमेकंतुपंकजंचदिनत्रयं॥ पंचाहंबिल्वपत्रंचदशाहंतुलसीदलम्॥ पदार्थादर्शे
राघवभट्टस्त्वन्यथाह॥ बिल्वापामार्गजातीतुलसिसमिशताकेतकीभृंगदूर्वा मंदाभोजाद्विदर्भा
मुनितिलतगरब्रह्मकल्हारमल्ली॥ चंपाश्वारातिकुंभीदमनमरुवकाबिल्वतोह्यानिशस्तात्रिंशत्
३० श्री ३ का १ यु ६ रीशी ११ दधि ४ निधि ९ वसु ८ भू १ भू १ यमा २
भूयरावम्॥ अस्यार्थः॥ शताशतावरीमंदःमंदारःअहिर्नागकेशरः॥ मुनिरगस्त्यः॥ अश्वारातिः
करवीरः॥ कुंभीपाटलेतिवैदिकनिघंटुः॥ अरयःषट्॥ ईशाःएकादश॥ उदधयश्चत्वारः॥ निध
योनव॥ वसवोष्टौ॥ भूरेकः यमौद्वौ॥ बिल्वमारभ्याहियर्यंतंगणयित्वा॥ दर्भमारभ्यपुनस्त्रिंशद्
दिगणायेदित्यर्थः॥ एतद्द्वितीयंपर्युषितानीत्यर्थः॥ टोडरानंदेस्कांदेदमनमुपक्रम्य॥ तस्यभक्त्या
भगवतःपरमप्रीतिकारिणी॥ शुष्कापर्युषितावापिनदुष्टाभवतिक्वचित्॥ निर्णयामृतेमात्स्ये॥ बि
ल्वपत्रंचमाध्यंचतमालामलकीदले॥ कल्हारंतुलसीचैवपद्मंचमुनिपुष्पकं॥ एतत्पर्युषितंन
स्यात्कुशाश्चकलिकास्तथा॥ स्मृतिसारावल्याम्॥ जलजानांचसर्वेषांपत्राणां महतस्य चा॥
स्यपुष्पस्यरजतसुवर्णकृतयोरपि॥ नपर्युषितदोषोस्तितीर्थतोयस्यचैवहि॥ मुकुलैर्नार्चयेदे
वंचपंकेजलजैर्विना॥ अथशिवनिर्माल्यनिर्णयः॥ सिद्धांतशेखरे॥ भा
हिरण्यगोरत्नताम्ररौप्यांशुकादिकान्॥ विहायशेषंनिर्माल्यंचंडेशायनिवेदयेत्॥ अन्यत्र
न्नादियानीयंतांबूलंगंधपुष्पकं॥ दद्याच्चंडायनिर्माल्यंशिवभुक्तंतुसर्वशः॥ आचार्यशिवधं
डानामाज्ञाभंगेनलक्षकं॥ धनस्यभक्षणेतेषांपादोनंलक्षमीरितं निर्माल्यभक्षितेलक्षपादत

गृह्णीरित्ता॥ दानंच भक्षणसमं न तदृश्येक्षणे॥ अकामाद्भक्षणे यदा निर्माल्यस्पर्शे तु [illegible] प्र
पंचकसाहस्रमर्दनसहितं तत॥ कामतो भक्षणे दोषाभावश्चित्तेनवान्यतः॥ निर्माल्यलंघने च
[illegible] ततः॥ स्पर्शश्च लंघनसमो विक्रयो भक्षणेनच॥ स्मृत्यर्थसारेपि॥ शै
वशैवनिर्माल्यनैवेद्यभक्षणे चांद्रं॥ अभ्यासे द्विगुणं॥ अन्त्याभ्यासे पतनम्॥ अयं निर्माल्ये पित्रनाप
ध्येयेवमिति॥ इदंच ज्योतिर्लिंगाद्यतिरिक्तविषयम्॥ तथाच पुरुषार्थप्रबोधे भविष्ये॥ ज्योतिर्लिंगंवि
नालिंगं यः पूजयति सत्तमः॥ तस्य नैवेद्यनिर्माल्यभक्षणात्तप्तकृच्छ्रकं॥ शालग्रामोद्भवे लिंगे बाण
लिंगे स्वयंभुवि॥ रसलिंगे तथार्षे च सुरसिद्धप्रतिष्ठिते॥ हृदये चंद्रकांते च स्वर्णरूप्यादिनिर्मिते॥ शि
वदीक्षावता भक्तेनेदं भक्ष्यमितीर्यते॥ तथा॥ बाणलिंगे स्वयंभूते चंद्रकांते हृदि स्थिते॥ चांद्रायण
समं ज्ञेयं शंभोर्नैवेद्यभक्षणम्॥ लिंगे स्वयंभुवे बाणे रत्नजे रसनिर्मिते॥ सिद्धप्रतिष्ठिते चैव न चंडाधि
कृतिर्भवेत्॥ यत्र चंडाधिकारोस्ति तद्भोक्तव्यं न मानवैः चंडाधिकारो नो यत्र भोक्तव्यं तत्र भक्तितः॥
त्रैविक्रम्याम्॥ बाणलिंगे च लौहे च सिद्धलिंगे स्वयंभुवि॥ प्रतिमासु च सर्वासु न चंडोधि
कृतो भवेत्॥ अत्र ब्रह्महापि शुचिर्भूत्वा निर्माल्यं प्रसुधारयेत्॥ तस्य पापं महच्छीघ्रं नाशयिष्यति म
हाव्रते इति स्कांदात् शुचिना न ग्राह्यं शिवनिर्माल्यं किंतु स्नात्वेति स्मार्त्ताः॥ अनुपनीतेन न ग्राह्यमिति
श्रीदत्तः॥ शिवदीक्षाहीनैर्न ग्राह्यमिति शैवाः॥ तिथितत्वे हेमाद्रौ च वाराहे॥ अग्राह्यं शिवनैवेद्यं प
त्रं पुष्पं जलं फलं॥ शालग्रामशिलासंगात् सर्वं याति पवित्रताम् पंचायतनपूजायां तन्नेत्रनिवेदित
मित्यर्थः॥ शिवपुराणे॥ येवीरभद्रशयिताः शिवभक्तिपराङ्मुखाः॥ शं
भोरन्यत्र देवेषु ये भक्ता ये न दीक्षिताः॥ तेषामनर्हमीशस्य तत्प्रसादचतुष्टयम्॥ काशीखंडे
जलस्य धारणं मूर्ध्नि विश्वेशस्नानजन्मनः॥ एष जालंधरो बंधः समस्तसुरवल्लभः॥ तथा॥ स्ना
पयित्वा विधानेन यो लिंगस्नपनोदकं त्रिः पिबेत् त्रिविधं पापं तस्येहाशु विनश्यति॥ लिंगस्नपनवा
र्भिः कुर्यान्मूर्ध्न्यभिषेचनं॥ गंगास्नानफलं तस्य जायते त्वविपाप्मनः॥ इदं पूर्ववाक्यवशाद्विश्वे
श्वरविषयमिति केचित्॥ काशीस्थपुराणप्रसिद्धसर्वलिंगविषयं॥ काशीखंडे रत्ने
श्वराख्याने नैवेद्यदर्शनादिस्मृतेः॥ अथ कृषिः॥ राजमार्त्तंडः॥ आर्क्षेपूर्ण
रयोः स्वेष्वमघामूलानुराधाश्विनी॥ प्राजापत्यकरद्विदैवतयुतप्रालेयपादेषु च॥ निर्दोषे
समे हले श्रमसुमनोमाल्याभिरभ्यर्चिते दत्त्वाक्षेत्रपते बलिं हलधरः क्षेत्रं ततः कर्षयेत्॥ प्राजेशश्र
वणोत्तरादितिमघामार्त्तंडतिष्याश्विनी॥ यो ह्यानुराधमरीचयः शतभिषक्स्वातीविशाखास्तथा॥
॥ जीवार्केंदु सितेंदुनंदनदिने लग्ने च सौम्योदये॥ सस्यानां वपने तथैव लवने शस्तास्तथारोपणे
॥ चंडेश्वरः॥ हस्तचित्रादितिस्वातीरेवत्यां श्रवणत्रये॥ स्थिरलग्ने गुरौ वीरे वी
जधार्यं तु शुक्रयोः॥ ॐ धनदाय सर्वलोकहिताय देहि मे धान्यं स्वाहा॥ लेखयित्वा इमं मंत्रं धान्या
गारे निधापयेत्॥ सस्यवृद्धिं परां कुर्यात् वर्जितं प्रतिपूजयेत्॥ दक्षिणदिक्षु खगमनगमनमभिनव
सुनारीषु॥ अयमपि सस्यधनानां नवधाबुधवासरे कुर्युः॥ शनिवारे च नो कार्यो धनधान्यव्ययो
बुधे॥ अथ वस्त्रम्॥ श्रीपतिः॥ रोहिणीषु करपंचके श्विभेष्युत्तरासु च पुन

नेषु रुद्राग्निवाजिवसुवारुणशंकरेषु॥ एतेषु गोमहिषदंतितुरंगमादिनानाप्रकारपशुजा॰
तिगतिः प्रशस्ता॥ अथ गजदंतच्छेदः॥ ज्योतिर्निबंधे॥ त्वाष्ट्रे वैष्णवे श्वि
सामादित्ये वसुदैवते। दंतिनां शुभदं कर्म पुष्ये हस्ते च कीर्तितं॥ अथ निक्षेपः॥
भरणीत्रीणि पूर्वाणि आर्द्राश्लेषामघा तथा॥ चित्रा ज्येष्ठा विशाखा च मूलं मृगपुनर्वसु॥ एभिर्द
त्तं प्रयुक्तं च यद्धनं निक्षिप्यते धनं॥ दृष्टं तो धावमानस्य धनिनो नोपपद्यते॥ अथ ऋण
मोक्षः॥ श्रीधरः॥ वागीशमंददिवसांशकलग्नयुक्ते रिक्तासु मंददिवसे कुलिकोद
ये च॥ मैत्रद्वितीयपदमैत्रमुहूर्तयुक्ते ऋणमेव न ऋणमोक्षमुशंति संतः॥ अथ रा
जमुद्रा॥ मृदुध्रुवक्षिप्रचरेषु भेषु योगे प्रशस्ते शनिचंद्रवर्ज्जे॥ वारे तिथौ पूर्णज
यान्वये च मुद्राप्रतिष्ठा शुभदा हि राज्ञां॥ अथ नौचंक्रमणं॥ पौष्णाश्विनीतु
रगवारुणमित्रचित्राशीतांशुरश्मिवसवानलवन्यमूनि॥ वारे च जीवभृगुनंदनकेप्रशस्तनौ
कादिसंघटनवाहनमेव कुर्यात्॥ अथ भोगः॥ गुरुभार्गवमानुराधाविधानृ
पौष्णाश्विरोहिणीषु स्यात्॥ स्वास्तृतासु कुर्यात् शयनाशनभोगभोगादीन्॥ अथ श्म
श्रुकर्म॥ श्रीपतिः॥ पुष्ये पौष्णे चाश्विनीश्वेंदवे च शाक्रे हस्ते ध्रुवे त्रिके भेप्यदित्याः॥ क्षौरं का
र्यं वै क्षमवारित्रये च मुक्त्वा भौमादिमयातं गिरावान्॥ नस्नातभुक्तोत्कटभूषितानामभ्यंगयात्रा
समरोत्सुकानां॥ क्षौरं विदध्यान्निशिसंध्ययोर्वा जिजीविषूणां नवमेन चान्हि॥ त्रिस्थलीसेतौ
वृद्धगार्ग्यः॥ ॥ रव्यारसौरिवारेषु रात्रौ याते
व्रताहनि॥ श्राद्धाह प्रतिपद्रिक्ता भद्रासौरेषु वर्जयेत्॥ गार्ग्यः॥ षष्ठ्यमावास्ययोर्नवम्यां च चतुर्दश्य
ष्टमी तथा॥ आशुसन्निहितं पापं त्रिषु तैलभगेक्षुरे॥ राजमार्तंडः॥ देव
कार्ये पितुः श्राद्धे रवेरंशपरिक्षये॥ क्षौरकर्म न कुर्वीत जन्ममासे च जन्मभे॥ बृहस्पतिः॥
राजकार्ये नियुक्तानां नराणां भूपजीविनां॥ श्मश्रुलोमनखच्छेदे नास्ति कालविशोधनं॥
तथा॥ क्षौरं नैमित्तिकं कार्यं निषेधे सत्यपि ध्रुवं॥ पित्रादिमृति दीक्षासु प्रायश्चित्ते च तीर्थके॥
केचित्तु तत्राद्द्मन्यथा पठंति॥ मुंडनस्य निषेधेपि कर्तनं तु विधीयते इति॥ नारदः
नृपविप्राज्ञया यज्ञे मरणे बंधमोक्षणे॥ उद्वाहे खिलवारर्क्षतिथिषु क्षौरमिष्टदं॥ भारते
प्राङ्मुखः श्मश्रुकर्माणि कारयीत समाहितः॥ उदङ्मुखो वाथ भूत्वा तथायुर्विंदते महत्॥
अपरार्के॥ उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत्सुधीः॥ केशश्मश्रुलोमनखान्युदक्
संस्थानि वापयेत्॥ दक्षिणं कर्णमारभ्य धर्मार्थं पापसंक्षये॥ शिखार्थं नवसंस्कारे शिखा
यंतु शिरो वपेत्॥ यतीनां तु विशेषो निगमे॥ कक्षोपस्थशिखावर्ज्जमृतुसंधिषु वापयेदि
ति॥ अन्येपि विधिप्रतिषेधाः प्रागुक्ताः॥ अथ धनसंग्रहः॥ ब्रह्मानिला
र्कमघमूलत्रिपूर्वरौद्रे पौष्णानुराधगुरुविष्णुविशाखयुक्ते॥ वारे कुजार्कभृगुनंदनसोमजा
नां भेधिधनस्य करणं भवति प्रशस्तम्॥ अथ नवान्नभुक्॥ श्रीपतिः॥ रेवती
श्रुतिपुनर्वसुहस्तब्रह्मतः स्थगपिहितयेपि॥ अन्नरासुकथितं पृथुकानां प्राशनं च सनवान्न

विधानं॥ अथनवभोजनपात्रम्॥ज्योतिर्निबंधे॥ भोज्यपात्रंसुधासिंधौषट्ये
ह्यसमाहरेत्॥तत्रान्नप्राशनप्रोक्तकालेभोजनमाचरेत्॥ अथनवपर्णफलादिभ
क्षणम्॥चंडेश्वरः॥ मूलाश्विनीतिष्यहरींद्रभेषुपौष्णोत्तरेंदवपुनर्वसुवासवेषु॥वा
रेषुभूमितनयार्कजवारवर्ज्यंतांबूलनूतनफलाशनंहितार्थी॥ अथहोमेष्वाहुतिपा
तः॥ ज्योतिषे॥ नरशिखिभृगुभास्करिचंद्रमाकुजसुरेड्यविधुंतुदकेतवः॥रवि
भतोदिनभंगणयेत्क्रमात्त्रिखगंत्रितयंत्रितयंन्यसेत्॥दिनकरार्कितमःकुजकेतवोहुतभु
जःशुभनाशकराःस्मृताः॥दहनचक्रमिदंप्रविलोक्यतांदहनकर्मणिसर्वसमृद्धये॥ अ
थशांतिरत्नेविष्णुधर्मे॥ क्रूरग्रहमुखेचैवसंजातेहवनेशुभे॥शांतिंविधायगांर
यांब्राह्मणायकुटुंबिने॥आयसींप्रतिमांकृत्वानिक्षिपेत्तामधोमुखीं॥गोमूत्रमधुगंधाद्यैर
र्चितांप्रतिमांततः॥स्वस्थंनिधायसंपूज्यतत्रहोमोविधीयते॥अत्रापवादःक्रियासारे॥नित्ये
नैमित्तिकेदुर्गाहोमादौनविचारयेत्॥ अथज्वरादौफलं॥श्रीपतिः॥ स्वा
त्याश्लेषारौद्रपूर्वासुशाक्रेरोगोत्पत्तिर्बाधतेयस्यपुंसः॥तस्मैपथ्यंप्राहुरत्रिःप्रयत्नःस्याद्दुग्धा
ब्धेर्लब्धजन्मापिवैद्यः॥व्याध्युत्पत्तिर्यस्यमैत्रेभयोक्तप्राणत्राणंजायतेतस्यकृच्छ्रात्॥वैश्वे
सौम्येरोगमुक्तिस्तुमासाद्विंशत्यास्याद्धारणांमघाख्ये॥पक्षाद्धस्तेवासवेसद्विदैवेमूलाश्विन्यो
रग्निधिष्ण्येनवाह्नात्॥याम्येत्वाष्ट्रेवैष्णवेवारुणेवैनैरुज्यंस्यान्नूनमेकादशाहात्॥आहि
र्बुध्न्यतिष्यसंज्ञेयमाख्येप्राजापत्यादित्ययोःसप्तरात्रात्॥ ज्योतिषे॥ एका
होनिधनंदशाहमनिलाद्वारुणवियत्पर्वताःसप्तोकाविलयष्ठमासयुगलंमासोश्रुतिःपक्ष
कः॥द्वौमासावथविंशतिर्दशनिशाःपक्षांतपक्षानखाः॥मासोपक्षदशांतपक्षककुभःपी
डादिनान्यश्विभात्॥ दैवज्ञः॥ उरगवरुणरौद्रावायुभेंद्रत्रिपूर्वायमदहनविशा
खापापवारेणयुक्ताः॥तिथिषुनवमिषष्ठीद्वादशीवाचतुर्थीभवतिमरणयोगोरोगिणां
कालहेतुः॥अत्रकुभेहेमींनक्षत्रप्रतिमांकृत्वाद्वादशदलेषुसंकर्षणादिद्वादशमूर्तीर्द्वाद
शादित्यान्वासंपूज्यदूर्वाशमीतिलक्षीराज्यैर्गायत्र्यातद्दैवतायेअष्टोत्तरशतंहुत्वादध्योदनं
बलिंदत्त्वाचार्यायगांप्रतिमांचदत्त्वाविप्रान्भोजयेदितिसंक्षेपः॥विशेषस्तुव्रतहेमाद्रौय
दार्थादर्शेचज्ञेयः॥ अथभैषज्यम्॥चंडेश्वरः॥ मूलानुराधमृग
तिष्यपुनर्वसौचपौष्णाश्विनीश्रवणशक्रकरत्रयेच॥वारेषुवाक्पतिसितेंदुदिनेप्रश
स्तंभैषज्यभक्षणममीषुहितंनराणाम्॥ अथारोग्यस्नानम्॥श्रीपतिः
रुद्रोर्वीरेभार्गवेचध्रुवेषुसार्पादित्यस्वातिपुक्तेषुभेषु॥पित्र्येचांत्येवापिकुर्यात्कदाचिन्नैवस्ना
नंरोगनिर्मुक्तजंतुः॥चरविलग्नेरविभौमवारेरिक्तेतिथौस्याद्दलेचपक्षे॥धिष्ण्येचरे
रोगनिवृत्तानांस्नानंनराणांनिरुजत्वकारि॥ अथदंतधावनम्॥पृथ्वीचं
द्रोदयेविष्णुः॥ प्रतिपद्दर्शषष्ठीषुचतुर्दश्यष्टमीषुच॥ नवम्यांभानुवारेचदंतका
ष्ठंविवर्जयेत्॥नारदः॥चतुर्दश्यष्टमीपर्वमासीसंक्रमणेषुच॥नंदासुचनवम्यांचदंत

काष्ठं विवर्जयेत्॥ श्राद्धे यज्ञे च नियमे तथा प्रोषितभर्तृका॥ व्यतीपाते च संक्रान्तौ नंदाभूताष्टपर्व
सु तैलक्षौररतिमांसं दंतकाष्ठं च वर्जयेत्॥ वसिष्ठः॥ शन्यर्कशुक्रवारेषु कुजाहे व्रतवासरे॥
जन्माहे श्राद्धदिवसे दंतकाष्ठं विवर्जयेत्॥ हेमाद्रौ स्कांदे॥ अभ्यंगे जलधि
स्नाने दंतधावनमैथुने॥ जाते च निधने चैव तत्कालव्यापिनी तिथिः॥ संवर्तः॥ रवौ
विवाहे चाशौचे वर्जयेद्दंतधावनं॥ व्यासः॥ अलाभे दंतकाष्ठानां निषिद्धायां तथा
तिथौ॥ अपां द्वादशगंडूषैर्विदध्याद्दंतधावनम्॥ अथामलकस्नानं व्यासः॥
श्रीकामः सर्वदा स्नानं कुर्वीतामलकैर्नरः। सप्तमीं नवमीं चैव पर्वकालं विवर्जयेत्॥ चंद्र
सूर्योपरागे च स्नानमामलकैस्त्यजेत्॥ क्रतुः॥ षष्ठी च सप्तमी चैव नवमी च त्रयोदशी॥ संक्रा
तौ रविवारे च स्नानमामलकैस्त्यजेत्॥ मनुः॥ नवमी दशमी चैव तृतीया च त्रयोदशी॥ प्रतिप
द्द्वादशी कृष्णा स्नानं तासु विवर्जयेत्॥ पद्मे॥ दर्शे स्नानं न कुर्वीत मातापित्रोस्तु जीवतोः॥ पुत्रः
कुर्वन्निराचष्टे पित्रोरुन्नतिजीविते इतिकराव्ययमाधवः॥ स्नानमात्रं निषिद्धं॥ तत्र गार्ग्य स्नान
परं तन्निराचष्टे पित्रोरुन्नत्यनैमित्तिकपरमिति॥ हेमाद्रिः॥ अथ तैलनिषेधः॥
कात्यायनः॥ पक्षादौ च रवौ षष्ठ्यां रिक्तायां च तथा तिथौ॥ तैलेनाभ्यज्यमानस्तु
चक्षुर्भिः परिहीयते॥ गर्गः॥ पंचदश्यां चतुर्दश्यामष्टम्यां रविसंक्रमे॥ द्वादश्यां सप्त
मीषष्ठ्योस्तैलस्पर्शं विवर्जयेत्॥ न च कुर्यात्तृतीयायां त्रयोदश्यां तिथौ तथा॥ शास्त्रनीतिम
न्विच्छन्दशम्यामपि पंडितः॥ तत्रैवायुर्वेदे॥ षष्ठ्यां दिनक्षयेऽष्टम्यामे
कादश्यां च पर्वसु॥ द्वादश्यां च चतुर्दश्यां पंचम्यां प्रतिपत्तिथौ॥ व्रते श्राद्धदिने जन्मत्रितये श्र
वणार्द्रयोः॥ ज्येष्ठोत्तराफाल्गुनीषु व्यतीपाते च वैधृतौ॥ विष्टियोगे च संक्रांतौ मन्वादिषु यु
गादिषु॥ नाभ्यंगं तत्र बालानां वृद्धानां तु न दोषकृदिति॥ व्यवहारतत्त्वे॥ संक्रांतिभद्राव्यति
पाते वैधृतौ षष्ठ्यष्टमीपर्वसु नार्कभूसुते॥ स्नाने द्वितीया दशमी च गर्हिताः षष्ठ्यादि माधा
रदधावनेऽधमाः॥ अस्यापवादमाह तत्रैव प्रचेताः॥ सर्षपं गंधतैलं च यत्तैलं पुष्पवासितं।
अन्यद्रव्ययुतं तैलं न दुष्यति कदाचन॥ आयुर्वेदे॥ निषिद्धतिथिवारर्क्षग्रह
रोष्वपि रात्रिषु॥ किंचिद्गोघृतयुक्तं वा विप्रपादरजोन्वितम्॥ भानोर्दूर्वान्वितं भौमे भूयुक्तं
बुधे पुष्पयुग्गुरौ॥ सर्वेषां सर्वदा तैलमभ्यंगेषु न दुष्यति॥ मंगलेष्वप्यदोषः॥ मांगल्ये विषुवे
स्नाने वृद्धिः श्रद्धोत्सवेषु च॥ स्नेहपात्रसमायुक्तो मध्याह्नात्प्राक्तु तद्दिष्यते॥ इति
मदनपारिजाते कात्यायनोक्तेः॥ हेमाद्रौ बृहन्मनुः॥ तैलाभ्यंगो नार्कवारे न भौमे
नो संक्रांतौ वैधृतौ विष्टिषष्ठ्योः पर्वण्यष्टम्यां न चेष्टः सरस्थः प्रोक्तान्मुक्त्वा वासरे सूर्यसूनोः॥
तिलस्नाननिषेधस्तु षट्त्रिंशन्मते॥ तथा सप्तम्यमावास्यासंक्रांतिग्रहजन्मसु॥ धनपुत्र
कलत्रार्थी तिलपिष्टं न संस्पृशेत्॥ अथ गृहारंभः॥ ज्योतिर्निबंधे बा
दरायणः॥ वैशाखे फाल्गुने पौषे श्रावणे मार्गशीर्षके॥ सूत्रारंभः शिलामासः स्तंभारंभः
प्रशस्यते॥ नारदः॥ सौम्याः फाल्गुनवैशाखमाघश्रावणकार्तिकाः॥ मासास्तु

गृहनिर्माणेपुत्रारोग्यधनप्रदाः॥अत्रवृषसिंहवृश्चिकाःवैशाखश्रावणकार्त्तिकाःसौरज्ञे
या॥ इतिकालादर्शः॥ तंत्रैवकारणांतरे॥स्थिरमासेस्थिरेराशौस्थिरें
शेनववेश्मनां॥कुर्वीतस्थापनंशंकोःशंभुस्थापनमेववा॥कार्त्तिकनिषेधस्तुलापरः॥कुं
भेमाघेपिसर्वेषांमंदिराणामुपक्रमं॥महर्षयःप्रशंसंतिधामागारंविहायच॥निषेधोधाम
हपरः॥पाकभोजनशालादौमार्गशीर्षश्चफाल्गुनः॥रथ्यागृहमठादौचसहस्यःशुचिरेव
च॥पौषाषाढनिषेधस्तुप्रधानगृहपरः॥नप्रधानगृहारंभंकुर्यात्पौषेशुचावपीतितत्रैवो
क्तेः॥ ज्योतिस्तत्त्वे॥पूर्वापरा स्यंतुनभोतपोषेयाम्योत्तरास्यंसहसिद्धिती
ये॥कार्यंगृहंजीवबुधर्क्षगार्कनीचास्तगोजीवसितौचहित्वा॥ रत्नमालायां॥
कर्कनक्रहरिकुंभगतेर्केपूर्वपश्चिममुखानिगृहाणि॥तौलिमेषवृषवृश्चिकयातेदक्षिणो
त्तरमुखानिवदंति॥दैवज्ञवल्लभः॥शोकोधान्यंपंचतानिःपशुत्वंस्वाप्निर्नैःस्वस्तगरंमृत्यु
नाशम्॥रत्नधान्यमितिकालादर्शेपाठः॥स्वश्रीप्राप्तिंवह्निभीतिंचलक्ष्मीकुर्युश्चैत्राद्याग्रगृ
हारंभकाले॥गर्गः॥उत्तरामृगरोहिण्यःपुष्यमैत्रेकरत्रये॥धनिष्ठाद्वितयेपौष्णेगृहारंभःप्र
शस्यते॥रोहिण्यश्रवणत्रयेदितियुगेहस्तत्रयेमूलकेरेवत्युत्तरफाल्गुनीषुरगभेमैत्रोत्त
राषाढयोः॥शस्तंवास्तुकुजार्कवर्जितदिनेगोकुंभसिंहेमुखे॥कन्यापामिथुनेनभःशुचि
सहोराधोर्ज्जकेफाल्गुने॥ कालादर्शेसनत्कुमारः॥ आदित्यभौमवर्ज्जंतु
सर्वेवाराःशुभःप्रदाः॥ वास्तुशास्त्रे॥ मार्गशीर्षेतथापौषेवैशाखेश्रावणेत
था॥फाल्गुनेचकृतंवेश्मसर्वसंपत्प्रदंभवेत्॥कार्त्तिकेमाघमासेचचैत्रेज्येष्ठेतथाश्विने
॥मास्याषाढेभाद्रपदेनकुर्यात्सर्वथागृहं॥द्वितीयाचतृतीयाचपंचमीसप्तमीतथा॥त्र
योदशीचदशमीपूर्णाचैकादशीतथा॥वेश्मारंभेशुभायस्युर्विशेषाःशुक्लपक्षगाः॥
व्यवहारसारे॥शिलान्यासःप्रकर्तव्योगृहाणांश्रवणेमृगे॥पौष्णेहस्तेचरोहिण्यांपुष्या
श्विसुत्तरात्रये॥ वास्तुप्रदीपे॥ अधोमुखैर्भैर्विदधीतखातंशिलास्तथैवो
र्ध्वमुखैश्चपट्टं॥तिर्यङ्मुखैर्द्वारकपाटयानंगृहप्रवेशोमृदुभिर्ध्रुवैश्च॥लल्लः॥स्नानंच
पाकशयनंचभोज्यंगजालयवाजिगृहंधनस्यदेवस्यपूर्वादिदिशिक्रमेणमध्येसभाभू
पनिवेशनाय॥ शिल्पशास्त्रे॥ कन्यासिंहेतुलायांभुजगपतिमुखंर
शंभुकोणेग्निखातंवायव्येस्यान्नदास्यंत्वलिघरमकरेईशखातंवदंति॥कुंभेमीनेचमेषे
निर्ऋतिशिमुखंखातवायव्यकोणेचाग्नेकोणेमुखंवैवृषमिथुनगतेकर्कटेरक्षखातं॥
तत्वचिंतामणौ॥पत्रदैर्घ्यंगृहादीनांद्वात्रिंशद्धस्ततोधिकं॥नतत्रचिंतयेद्धीमानयुगाना
यव्ययादिकान्॥ राजमार्त्तंडः॥ आयव्ययौमासशुद्धिंतृणागारेनचिंत
येत्॥शिलान्यासादिनोकुर्यात्तथागारेपुरातने॥ व्यवहारतत्त्वे॥ निषिद्धेष्व
पिकालेषुस्वानुकूलेशुभेदिनेतृणकाष्ठगृहारंभेमासदोषोनविद्यते॥चंडेश्वरः॥पूर्णादि
त्वष्टमीयावत्पूर्वास्यंवर्ज्जयेद्गृहं॥उत्तरास्यंनकुर्वीतनवम्यादिचतुर्दशीं॥अमावास्याष्टमी

यावत्पश्चिमास्यंविवर्जयेत्॥नवम्यादौतथायाम्यंयावत्कृष्णाचतुर्दशी॥ध्रुवंदृष्ट्वायवास्तृत्वाकर्त्त
व्यंवास्तुरोपणं॥सायान्हवर्जेदिवसेरात्रौमध्यमहानिशाम्॥वराहः॥दक्षिणपूर्वेकोणेकृत्वा
पूजांशिलांन्यसेत्॥प्रथमाम्॥शेषाःप्रदक्षिणेनस्तंभाश्चैवंसमुत्थाप्याः॥ कालादर्शेवा-
स्तुशास्त्रेतु॥खातेचैवशिलान्यासेवृषचक्रंप्रशस्यते॥ तच्चोक्तंशांतिरत्ने॥ च
तुर्हस्तप्रमाणंतुखात्वागर्त्तंसमंततः॥कुंभोदकैःसेचयेयुःशांतिपाठःपुरःसरं॥ततईशानदिग्भा
गेसाक्षतंरत्नपंचकंसाम्रकुंभंस्थिरंमुक्त्वावास्तुपूजनपूर्वकं॥कुंभोपरिशिलान्यासःकर्त्तव्यस्त
दनंतरं॥ अथगृहप्रवेशः॥बृहस्पतिः॥ नंदायांदक्षिणद्वारंभद्रायांपश्चि
मेनतु॥जयायामुत्तरंद्वारंपूर्णायांसर्वतोविशेत्॥ वसिष्ठः॥ कृत्वाशुक्रंपृष्ठतोवामतो
र्कंविप्रानग्रआनयन्तःपूर्णकुंभं॥हर्म्यंरम्यंतोरणस्रग्वितानैःस्त्रीभिःस्रग्वीगीतवाद्यैर्विशेच्च
॥व्यवहारतत्त्वे॥ सौम्यायनेश्रावणमार्गयोर्वाजन्मर्क्षलग्नोपचयोदयांशे॥वामंगते
र्कंगृहवास्तुपूजांकृत्वाविशेद्देशभकूटशुद्धं॥वास्तुशास्त्रे॥लग्नान्नागाग्निगोदिक्षुद्वेद्वेराशी
नियोजयेत्॥एकमेकंन्यसेत्कोणेसूर्यंवामंविचिंतयेत्॥ वसिष्ठः॥ चंद्रजार्कसितवा
सरेषुतुश्रीकरंसुतमहार्थलाभदम्॥सूर्यभूसुतदिनेस्थिरंभवेत्किंतुचौरभयमत्रनिर्दिशेत्॥
रत्नकोशे॥ पुष्येधनिष्ठामृदुवारुणेषुस्वातौध्रुवर्क्षेत्रिषुचोत्तरासु॥अक्षीणचंद्रेशुभदो
नृपस्यतिथावरिक्तेचगृहप्रवेशः॥ नारदः॥ प्रवेशोमध्यमोज्ञेयःसौम्यकार्त्तिक
मासयोः॥माघफाल्गुनवैशाखज्येष्ठमासेषुशोभनः॥अकपाटमनाच्छन्नमदत्तबलिभोजनं
गृहंनप्रविशेद्धीमानापदामाकरोहितत्॥ज्येष्ठःसुतगृहपरः॥वृद्धगार्ग्यः॥ भानोश्चभौम
स्यविहायवारौमूलादियोगान्नशुभांश्चवापि॥रिक्तातिथींश्चापिमृदुध्रुवर्क्षेसौम्यायनेचप्रवि
शेद्गृहाणि॥ रत्नमालायां॥ त्वाष्ट्रमित्रशशिपुष्यदेवतास्वामनंतिमुनयो
मूत्न्यथ॥मित्रगेहरतिभूषणांबरोद्गीतमंगलविधानमेषुच॥रोहिणीपुनरात्रयंचध्रुवानि॥
प्रवेशश्चवास्तुपूजांकृत्वाकार्य्यः॥जीर्णोद्धारेतथोद्यानेतथागृहनिवेशने॥नवप्रासादभव
नेप्रासादपरिवर्त्तने॥द्वाराभिवर्त्तनेतद्वत्प्रासादेषुगृहेषुच॥वास्तुप्रशमनंकुर्य्यात्पूर्वमेववि
चक्षणः॥ इतिमात्स्योक्तेः॥तत्रैव॥ कृत्वाग्रतोद्विजवरानथपूर्णकुंभं
दध्यक्षताम्रदलपुष्पफलोपशोभनम्॥दत्वाहिरण्यवसनानितथाद्विजेभ्योमंगल्यशांति
निलयंस्वगृहंविशेच्च॥गृह्योक्तहोमविधिनाबलिकर्मकुर्यात्प्रासादवास्तुशमनेचविधिर्य
उक्तः॥संतर्पयेद्विजवरानथभक्ष्यभोज्यैःशुक्लांबरःस्वभवनंप्रविशेत्सधूपम्॥ अथ
कलिवर्ज्यानि॥बृहन्नारदीये॥ समुद्रयातुःस्वीकारःकमंडलुविधारणम्॥
द्विजानामसवर्णासुकन्यासूपयमस्तथा॥देवराच्चसुतोत्पत्तिर्मधुपर्केपशोर्वधः॥मांसदानं
तथाश्राद्धेवानप्रस्थाश्रमस्तथा॥दत्तायाश्चैवकन्यायाःपुनर्दानंपरस्यच॥दीर्घकालंब्रह्म
चर्यंनरमेधाश्वमेधकौ॥महाप्रस्थानगमनंगोमेधश्चतथामखः॥इमान्धर्मान्कलियुगेवर्
ज्यानाहुर्मनीषिणः॥कमंडलुःसोदकंचकमंडलुमित्युक्तं॥मृण्मयोवा॥दत्ताऊढा॥ऊढायाः

पुनरुद्वाहं ज्येष्ठांशं गोवधस्तथा ॥ कलौ पंच न कुर्वीत भ्रातृजायां कमंडलुमिति हेमाद्रौ वचना-
त् ॥ ऊढायाः पुनः पुरुषसंयोगान्तरे देयेति केचन नेत्यादिभिर्विवाहितोक्ता ॥ हेमाद्रौ ब्राह्मे ॥
गोत्रान्मातुः सपिंडाच्च विवाहो गोवधस्तथा ॥ नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभिः ॥ गोत्वा-
त् गोत्रजायाः पितृष्वसुः ॥ मातुः सपिंडात् मातुलात् तत्कन्याया विवाहः कलौ न कार्यः ॥ तेन या-
नि तद्विधायकानि तानि युगांतरविषयाणि ॥ तथा च व्यासः ॥ तृतीयां मातृ-
तः कस्मात्तृतीयां पितृतस्तथा ॥ शुल्केन चोद्वहिष्यंति विप्राः पापविमोहिताः ॥ इति क-
लौ तन्निंदामाह ॥ मातृतस्तृतीयां मातुलकन्यामित्यर्थः ॥ उक्तं चैतत्प्राक् ॥ मद्यं
स्त्रीष्वप्यश्वसुरामाचामेमित्यादिना विहितमपि वर्ज्यम् ॥ हेमाद्रौ आदित्यपुराणे ॥
विधवायां प्रजोत्पत्तौ देवरस्य नियोजनं ॥ बालायाः क्षतयोन्याश्च वरेणान्येन संस्कृतिः ॥ कन्या-
नामसवर्णानां विवाहश्च द्विजन्मभिः ॥ आततायिद्विजाग्र्याणां धर्मयुद्धेन हिंसनं ॥ द्विजस्याब्धौ
तु नौयातुः शोधितस्यापि संग्रहः ॥ सत्रदीक्षा च सर्वेषां कमंडलुविधारणम् ॥ महाप्रस्थानग-
मनं गोसंज्ञप्तिश्च गोसवे ॥ सौत्रामण्यामपि सुराग्रहणस्य च संग्रहः ॥ अग्निहोत्रहवण्याश्च
लेहो लीढापरिग्रहः ॥ वृत्तस्वाध्यायसापेक्षमघसंकोचनं तथा ॥ प्रायश्चित्तविधानं च विप्राणां
मरणांतिकं ॥ संसर्गदोषस्तेयान्यमहापातकनिष्कृतिः ॥ संसर्गदोषस्तत्संसर्गित्वं पंचम उ-
क्तः ॥ स्तेयं च तदन्यानि महापातकानि ब्रह्महसुरापानगुरुतल्पानि त्रीणि ॥ तेषां कामकृता-
नां मरणांतिकं प्रायश्चित्तं विप्राणां कलौ नेत्यर्थः ॥ मरणांतिके द्विजातिवधनिमित्तं द्वादशा-
ब्दं द्विगुणं ब्रह्मवधनिमित्तं च द्विगुणं भवति ॥ तच्चतुर्थेनास्ति निष्कृतिरिति निषिद्धं ॥ न चान्य-
हत्याविधिनात्र बाधः ॥ तेन ब्रह्महत्यानिमित्तस्यैव बाधो न जातिवधनिमित्तस्य ॥ भिन्नविष-
यत्वात् ॥ संसर्गिणस्तु कामतोपि व्रतस्यैवोक्तेर्न मरणांतिकम् ॥ नापि लेपे तेन पतितो वधनु-
कत्वात् ॥ तेन तयोर्मरणांतिकाभावात्तयोरेव निष्कृतिर्नास्त्येषां त्रयाणाम् ॥ युगांतरे तु कलौ
निषेधवलादेव प्रवृत्तिः ॥ एतद्विप्रपरं न क्षत्रियादेः ॥ तदुक्तं विप्राणां मरणांतिकमिति ॥ वि-
शेषस्त्वस्मत्कृते प्रायश्चित्तरत्ने ज्ञेयः ॥ वरातिथिपितृभ्यश्च पशूपाकरणक्रिया ॥ दत्तौरसे-
तरेषां तु पुत्रत्वेन परिग्रहः ॥ सवर्णामांगनादुष्टैः संसर्गः शोधितैरपि ॥ अयोनौ संग्रहे वृत्ते प-
रित्यागो गुरुस्त्रियाः ॥ परोद्देशात्मसंत्यागः उच्छिष्टस्यापि वर्जनं ॥ प्रतिमाभ्यर्चनार्थाय संकल्प-
श्च सधर्मकः ॥ अस्थिसंचयनादूर्ध्वमंगस्पर्शनमेव च ॥ शामित्रं चैव विप्राणां सोमविक्रयणं
तथा ॥ षड्भक्तानशने चान्नहरणं हीनकर्मणः ॥ माधवीये पृथ्वीचंद्रोदये च ॥
शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणाम् ॥ भोज्यान्नता गृहस्थस्य तीर्थसेवातिदूरतः ॥
शिष्यस्य गुरुदारेषु गुरुवद्वृत्तिशीलता ॥ आपद्वृत्तिर्द्विजाग्र्याणामश्वस्तनिकता तथा ॥ प्र-
जार्थं तु द्विजाग्र्याणां प्रजारणिपरिग्रहः ॥ ब्राह्मणानां प्रवासित्वं मुखाग्निधमनक्रिया ॥ बला-
त्कारादिदुष्टस्त्रीसंग्रहो विधिनोदितः ॥ यतेश्च सर्ववर्णेषु भिक्षाचर्याविधानतः ॥ नवोद-
के दशाहं च दक्षिणा गुरुचोदिता ॥ ब्राह्मणादिषु शूद्रस्य पचनादिक्रियापि च ॥ भृग्वग्निप-

ततश्चैव वृद्धादिमरणं तथा॥ गोतृप्तिशिष्टे पयसि शिष्टैराचमनक्रिया॥ पितापुत्रविरोधेषु सा
क्षिणां दंडकल्पनं॥ यतेः सायंगृहत्वं च सूरिभिस्तत्त्वदर्शिभिः॥ एतानि लोकगुप्त्यर्थं कलेरादौ म
हात्मभिः॥ निवर्तितानि विद्वद्भिर्व्यवस्थापूर्वकं बुधैः॥ सुराग्रहणस्य तत्कर्तुः संग्रहीत्व्यवहार
कः॥ न च मद्यं चेति सामान्येन निषिद्धस्यानेनोपसंहार इति वाच्यम्॥ निषेध
स्य निवृत्तिमात्रफलत्वेन विशेषानपेक्षत्वात्॥ न हिंस्यादित्यस्य न ब्राह्मणं हन्यादित्यनेनोपसं
हारे हिंसांतरस्यादोषत्वापत्तेश्च॥ निरूपितं चैतद्धेमाद्रिणाप्यत्रैतु परम्यते॥ सुराग्रहस्योद्दे
श्यस्य सौत्रामणिविशेषणाविवक्षया वाजपेयेपि निषेधः॥ सौत्रामण्यां तु पयोग्रहा वा सुरि
त्वायसत्वोक्तेर्वैकल्पिकपयोग्रहेप्यधिकारः॥ वाजपेये तु तत्प्रतिमानाभावात्सोमसुरयोः
सहयागेनांशे सुराद्रव्यत्वात्तत्र स्वतंत्रयागनामत्वेन तां विना संस्थायोगात्कलौ नाधिका
र इति युक्तं प्रतीमः॥ त्रिकांडमंडनादिलिखनं तु निर्मूलमनाकरं च॥ हन्नेति॥ एकाहाद्ब्राह्मणः
शुध्येद्योग्निवेदसमन्वितः इत्युक्तेः॥ आद्यस्याशौचस्य संकोचः॥ न तस्य निष्कृतिर्दृष्टा भृग्वग्निप
तनादिभिरित्युक्तस्य प्रायश्चित्तस्य विधानमुपदेशः कलौ कर्तैव लिप्यते इति व्यासोक्तेः॥ पतित
संसर्गदोषसत्त्वेपि यानित्यं नेत्यर्थः॥ केचिदाहुः ते मूर्खाः मानाभावात्॥ तेनायमर्थः
तत्संसर्गात्तु पंचमः॥ स्तेये च॥ तदस्मानि महापातकानि॥ ब्रह्मवधसुरापानगुरुतल्पानि स्त्री
णि तेषां कामकृतानां प्रायश्चित्तं कलौ न तेषु कामतो मरणांतस्यैवोक्तेः॥ न तथा नेद्वादशा
ब्दे हि गुरुरपि आत्मनो ब्रह्मवधनिमित्ते चतुर्विंशत्यब्दमिति चतुर्गुणाद्वादशाब्दायत्तेस्तस्य च चतु
र्थेनास्ति निष्कृतिरिति निषेधात्॥ सर्गिणो व्रतस्यैवोक्तेः॥ स्तेये च राज्ञो वधकर्तृत्वान्नात्मवधा
पत्तिः॥ अतो वैगुण्येपि युक्तोधिकारः॥ न च विधिना निषेधबाधात्॥ आत्मवधदोषाय वादेपि ब्र
ह्मवधाभावात्॥ युगांतरदोषसाम्येपि कलौ दोषाधिक्यात्॥ एतद्धि परम्॥ सवर्णा नाम
सवर्णा क्षत्रियादिः॥ तयादृष्टेः॥ अयोनौ शिष्यादौ॥ चतस्रस्तु परित्याज्याः॥ शिष्यगा गुरुगा
च येस्तु तास्त्यागः॥ परोद्देशेन ब्राह्मणाद्यर्थं आत्मत्यागः॥ यद्वा परोद्देशात्मत्यागो दानं मनसा
पात्रमुद्दिश्येत्युक्तं॥ उद्दिष्टस्य पात्रस्य वर्जनं प्रतिग्रहसमर्थोपीत्युक्तं॥ वेतनग्रहणेन प्रतिमा
पूजा॥ स्वाशौचकालादि ज्ञेयं॥ स्पर्शनं तु त्रिभागतः इत्युक्तः स्पर्शः षडितिउयोचितस्त्र्यहं स्थि
त्या धान्यम ब्राह्मणाद्धरेदित्युक्तमन्नचौर्यं॥ आपदि स्नात्रादिवृत्तिः॥ मुखेनैव धमेदग्निमित्यु
क्तं धमनं॥ दशाहेनैव शुद्ध्येत भूमिस्थं च नवोदकमित्युक्तो दशाहः॥ गुरवे तु वरं दत्त्वेत्युक्ता द
क्षिणा॥ शूद्रेषु दासगोपालेति॥ कंदुपक्वं स्नेहपक्वं पयसा दुग्धेन पाचितं॥ एतान्यशूद्रान्नभुजो
भोज्यानि मनुरब्रवीदित्यपरार्कोक्त मंत्रोक्ता शूद्रस्य पाकक्रिया॥ पितापुत्रविवादे तु साक्षिणां
त्रिपणो दंड इत्युक्तः॥ सायंगृहत्वम्॥ विधूमे सन्नमुसले इत्युक्तं॥ पृथ्वी चंद्रेण तु॥ अटंति व
सुधां विप्राः    पृथिवीदर्शनाय तु॥    अग्निकेतासनाहारा यत्र सायंगृहास्तु
ते॥ इति विष्णुपुराणोक्तो निषिद्धः॥ तेनाज्ञातशीलपथ्यादेः आहारो विनियोगेन कार्यः कन्या
वित्यर्थ उक्तः॥ अश्वालंभगोवधस्तथैव तिवापाठः॥ दिवराच्च सुतोत्पत्तिः कलौ पंच विवर्जयेत् अत्र

ग्निहोत्रंतदर्थमाधानम्॥एतच्चसर्वाधानपरं।अर्द्धाधानेस्मृतंश्रौतंस्मार्तंयोस्तुश्रुतिस्मृतिः॥सर्वाधानंतयोरैक्यकृतिःपूर्वयुगाश्रितेतिलौगाक्षिवचनादितिस्मृतिचंद्रिकायाम्।एतेनचत्वार्यब्दसहस्राणिचत्वार्यब्दशतानिच॥कलेर्यदागमिष्यंतितदात्रेतापरिग्रहः संन्यासश्चनकर्तव्योब्राह्मणेनविजानतेतिमाधववचनंव्याख्यातं॥सर्वाधानेपिविशेषमाहदेवलः॥यावद्वर्णविभागोस्तियावद्वेदःप्रवर्तते॥संन्यासंचाग्निहोत्रंचतावत्कुर्यात्कलौयुगेइति॥अत्रपूर्वयुगाश्रितेतिलौगाक्षिवाक्येपूर्वयुगानिकृतादीनीत्येकोर्थः॥अन्येतुयुगस्यपूर्वेकलेः॥पूर्वोभागःसचत्वार्यब्दसहस्राणीति॥पूर्वोक्तवाक्याच्चतुश्चत्वारिंशच्छतवर्षावच्छिन्नःतस्मिन्भागेसर्वाधानंकार्यं॥तदुत्तरंतुयावद्वर्णविभागोस्तीतिवाक्याद्वर्णविभागपर्यंतमर्द्धाधानमित्याहुः॥समासस्त्विदं॥ ॥ ॥ ॥ ॥ ॥ ॥

इतिश्रीमन्नारायणभट्टसूरिसूनुरामकृष्णभट्टात्म
जदिनकरभट्टानुजकमलाकरकृतेनिर्णय
सिंधौतृतीयपरिच्छेदेकलिवर्ज्यानि।
तृतीयपरिच्छेदःसमाप्तः४॥०
इतउत्तरश्राद्धनिर्णयः॥

ॐलंबोदरायनमः॥नानानिबंधवैमत्यभ्रांतचित्तोद्धिधीर्षया॥कमलाकरसंज्ञेनक्रियतेश्राद्धनिर्णयः॥तत्स्वरूपमाहपृथ्वीचंद्रोदयेमरीचिः॥प्रेतंपितॄंश्चनिर्दिश्यभोज्यंयत्प्रियमात्मनः॥श्रद्धयादीयतेयत्रतच्छ्राद्धंपरिकीर्तितं॥ब्राह्मणस्वीकारांतश्चतुर्थ्यंतपदोपनीतपित्राद्युद्देश्यकस्त्यागःश्राद्धमित्यर्थः॥तत्रयद्यपिहोमपिंडभोजनानिप्रधानमितिहेमाद्रिः॥होमश्चपिंडदानंचतथाब्राह्मणभोजनं॥श्राद्धशब्दाभिधेयंस्यादेकस्मिन्नौपचारिकइति॥श्रीधरश्चतथापिकचिद्विशेषंवक्ष्यामः॥निमित्तभेदेभोजनस्यपिंडानांवानिषेधेनप्राधान्यविरुणाद्धि॥असोमयाजिनोरविपयोपागवन्।यच्चशूलपाणिः॥नित्यश्राद्धमदैवंस्यादर्घ्यपिंडविवर्जितमितिहारीतोक्तेर्नित्यश्राद्धमघादौपिंडनिषेधोस्तिनचप्राप्तिंविनाशः॥नचातिदेशंविनाप्राप्तिः॥नचांगत्वेनविनातिदेशः॥प्रधानस्यानतिदेशात्तु॥नांदीमुखानांप्रत्यब्दंकन्याराशिगतेरवौ॥पौर्णमास्यांप्रकर्तव्यंवराहवचनंयथेति॥पौर्णमास्यांश्राद्धंविहितंतत्रनांदीमुखाःकेइत्याकांक्षायां॥ब्राह्मे॥पितापितामहश्चैवतथैवप्रपितामहः॥त्रयोह्यश्रुमुखाह्येतेपितरःसंप्रकीर्तिताः॥तेभ्यःपूर्वतरायेचप्रजावंतःसुखैधिताः॥तेतुनांदीमुखानांदीसमृद्धिरितिकथ्यतेइतिवचनोक्ताः॥एवंचतस्मिन्श्राद्धेपित्रादित्रयोर्ध्वानांप्रसन्नमुखत्वरूपंविश्वेदेवव्याहृतंनांदीमुखत्वंपारिभाषिकं॥तदुक्तं॥प्रसन्नमुखसंज्ञास्तुमंगलीयायतस्तुतेइति॥अतएवात्रनांदीश्राद्धधर्मातिदेशःनो

दीमुखशब्दस्य देवतापरस्य कर्म्मनामत्वाभावात्। नापि नांदीमुखत्वं पितृविशेषणं॥ पारिभाषिकत्वात्॥ तथाचैतस्य श्राद्धस्य कर्माराशिगते रवौ विधानात्तन्निमित्तत्वपिकन्यागते सूर्ये काम्येच धुरिलोचनाविति वाक्याद्धुरिलोचनौ विश्वेदेवौ वृद्धिश्राद्धे तु॥ मातृश्राद्धं तु सर्वेषामित्यादिना मातृश्राद्धं तु पूर्वं स्यात् पितॄणां तदनंतरम्। ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतमिमादिवाक्यानुरोधेन मात्रादित्रयमातामहादित्रयाणां देवतात्वे सिद्धे तेषामेव विश्वेदेवसाधारणं ऊर्ध्ववक्त्रादिरूपं नांदीमुखत्वं॥ अतएवात्र वचनं॥ ऊर्ध्ववक्त्रास्तु येतत्र ते नांदीमुखसंज्ञिता इति॥ तच्च॥ नांदीमुखेभ्यो देवेभ्यः प्रदक्षिणाकुशासनं। पितृभ्यस्तन्मुखेभ्यश्च प्रदक्षिणामितिस्थितिरिति पराशरवचनाद्विश्वेषां देवानां पितॄणां च विशेषणं। तथाच नांदीश्राद्धमिति कर्मनामधेयं॥ अतएवात्र नांदीमुखे सत्यवसुसंज्ञकौ वैश्वदेविके इतिवचनात्सत्यवसू विश्वेदेवौ॥ अत्र पितृशब्दस्य सपिंडीकरणात् श्राद्धजन्यपितृभावायत्तिपरत्वेन मातृपितृमातामहादिसाधारणात् सर्वत्र नांदीमुखत्वं विशेषणाभ्यां एवं प्रदक्षिणाद्यन्नोदृष्टौ नांदीमुखान् पितॄन्॥ यज्ञेन दधिकर्कंधुमिश्रान् पिंडान् यवैः क्रियेति याज्ञवल्क्योक्तेरिति ग्रंथांतरे॥ कलौ श्राद्धे मधु नैव देयम्॥ अक्षतागोपशुश्चैव श्राद्धे मांसं तथा मधु। देवराच्च सुतोत्पत्तिः कलौ पंच विवर्जयेत्॥ इति श्राद्धदीपकलिकामदनपारिजातयोर्निगमोक्तेः॥ पंचेति न परिसंख्या॥ दोषत्रयापत्तेः॥ कलावन्यनिषेधवाक्यानर्थक्यापत्तेश्च॥ अतः प्रदर्शनमात्रार्थमेतत्॥ एतद्वाक्योपात्तत्वोपाधिनाचर्यं चत्वोपपत्तिः॥ यत्तु यच्छ्राद्धं मधुना हीनं तद्रसैः सकलैरपि॥ मिष्टान्नैरपि संयुक्तं पितॄणां नैव तृप्तये॥ अणुमात्रमपि श्राद्धे यदि नस्याच्च माक्षिकं नामापि कीर्त्तनीयं स्यात्पितॄणां प्रीतये ततः॥ इति हेमाद्रौ ब्राह्मवचनं॥ यच्च॥ कथंचिदपि विप्रेभ्यो न दद्यात् भोजने मधु॥ पिंडास्तु नैव दातव्याः कदाचिन्मधुना विनेति॥ श्राद्धदीपकलिकायां नागरखंडवचनम्॥ यच्च॥ सुमंतुः ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः॥ मधुप्रधानं शूद्रस्य सर्वेषां चाविरोधि यदिति हेमाद्रौ पुलस्त्यवचनं तत्कलियुगातिरिक्तपरं। न च यथाचारं प्रदेयं तु मधु मांसादिकं तथा॥ देशाचाराः परिग्राह्यास्तत्तद्देशीयजैर्नरैः॥ अन्यथा पतितो ज्ञेयः सर्वधर्मबहिष्कृत इति श्राद्धे मदनरत्ने नारदीये वचनाद्देशाचारतोऽव्यवस्थितिर्वाच्या॥ कलिनिषेधवैयर्थ्यापत्तेः॥ तस्मात्कलौ श्राद्धे मधु नैव देयमिति सिद्धम्। केचित्तु॥ कथंचिदपि विप्रेभ्यो न दद्यात् भोजने मधु॥ पिंडास्तु नैव दातव्याः कदाचिन्मधुना विनेति॥ नागरखंडवचने कालेदात्रन्यपरस्मरणेन निषिद्धस्य कलिकालादेः सर्वस्यापवादाद्भोजने मधुनिषेधे पि पिंडे मधु कलौ देयमेव॥ कलौ मधुनिषेधवाक्यानां भोजनपरत्वात्॥ तेन सर्वकालं तिला ग्राह्याः पितृकृत्ये विशेषतः॥ भोज्यपात्रे तिलान्दृष्ट्वा निराशाः पितरो गता इति॥ यथा भोजने तिलनिषेधे पि न पिंडे तन्निषेधस्तथात्रापि पिंडे न मधुनिषेध इत्याहुः॥ तन्न मे उपकारकत्वेनातिदेशोक्तेः॥ तेन भोजनं प्रधानं पिंडांगा पिंडदानमात्र विधिरंगभूतात्कर्मांतरमेव प्रकरणांतरन्यायादिति॥ तत्त्वाजातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि॥ न पक्वं भोजयेद्विप्रान् सच्छूद्रो पि कदाचनेत्यादिर्जातश्राद्धे शूद्रश्राद्धादौ भोजन

स्यनिषेधेनांगत्वापत्तेः॥ ततोपशोकरोतीतिवद्रुपजीव्यविरोधेनविकल्पापत्तेश्च॥ तेनश्राद्धशब्दा
भिधेयत्वेनोभयप्राप्तौनिषेधः पर्युदासोवा॥ दीक्षितोनददातिनजुहोतिनासोमयाजीसंनयेदिति
वदितितत्त्वं॥ धर्मप्रदीपेपि॥ यजुषांपिंडदानंतुबह्वृचानांद्विजार्चनं॥ श्राद्धशब्दाभिधेयंस्यादुभयं
सामवेदिनां॥ नच॥ पितॄन्यजेतपितृभ्योदद्यादित्युभयप्रयोगदर्शनाद्यागदानोभयात्मकापि
तरोदेवताइतिपित्रुद्देश्यकत्वाद्यागत्वंविप्रापेक्षयाचदानत्वमित्यविरुद्धं॥ एतेननायंयागः॥
देवतोद्देशेनत्यागोयागः॥ यागोद्देश्याचदेवतेत्यन्योन्याश्रयादितिगौडमतमपास्तं॥ वेदशब्दविशे
षोद्देश्यकत्वस्यतस्येदमितिस्वत्वत्यागरूपप्रतियोगित्वस्यवादेवतात्वात्॥ तत्रैवसुमंतुः॥ श्राद्धात्प
रतरंनान्यच्छ्रेयस्करमुदाहृतं॥ आदित्यपुराणे॥ नसंतिपितरश्चेतिकृत्वाम
नसियोनरः श्राद्धंनकुरुतेतत्रतस्यरक्तंपिबंतिते॥ तद्भेदानाहविश्वामित्रः॥ नित्यंनैमित्तिकंका
म्यंवृद्धिश्राद्धंसपिंडनं॥ पार्वणंचेतिविज्ञेयंगोष्ठ्यांशुध्यर्थमष्टमं॥ कर्मांगंनवमंप्रोक्तंदैविकंद
शमंस्मृतं॥ यात्रास्वेकादशंप्रोक्तंपुष्ट्यर्थंद्वादशंस्मृतमिति॥ एषांलक्षणानिभविष्ये॥ अहन्य
हनियच्छ्राद्धंतन्नित्यमितिकीर्तितम्॥ वैश्वदेवविहीनंतदशक्तावुदकेनतु॥ एकोद्दिष्टंतुयच्
छ्राद्धंतन्नैमित्तिकमुच्यते॥ तदप्यदैवंकर्तव्यमयुग्मान्भोजयेद्द्विजान्॥ कामायविहितंकाम्य
मभिप्रेतार्थसिद्धये॥ वृद्धौयत्क्रियतेश्राद्धंवृद्धिश्राद्धंतदुच्यते॥ गंधोदकतिलैर्युक्तंकुर्यात्पात्रच
तुष्टयं॥ अर्घार्थंपितृपात्रेषुप्रेतपात्रंप्रसेचयेत्॥ येसमानाइतिद्वाभ्यामेतज्ज्ञेयंसपिंडन
म्॥ नित्येनतुल्यंशेषंस्यादेकोद्दिष्टंस्त्रियाअपि॥ एतदुभयमेवस्त्रियाः॥ तेनस्त्रीकर्तृकंस्त्रीसं
प्रदानकंचेत्युभयनियमः॥ इतिकल्पतरुः॥ अमायांचैवयत्क्रि
यतेतत्पार्वणमितिस्मृतम्॥ क्रियतेपर्वणियद्वातत्पार्वणमितिस्थितिः॥ अत्रपर्व॥ चतुर्द्दश्य
ष्टमीचैवअमावास्याचपौर्णिमा॥ पर्वाण्येतानिराजेंद्ररविसंक्रमणंतथेति विष्णुपुराणोक्तं
संक्रांत्यादि॥ गोष्ठ्यांयत्क्रियतेश्राद्धंगोष्ठीश्राद्धंतदुच्यते॥ बहूनांविदुषांसम्यक्सुखार्थंपितृ
तृप्तये॥ क्रियतेशुद्धयेयत्तुब्राह्मणानांतुभोजनम्॥ शुध्यर्थमितितत्प्रोक्तंवैनतेयमनीषिभिः
॥ निषेककालेसोमेचसीमंतोन्नयनेतथा॥ ज्ञेयंपुंसवनेचैवश्राद्धंकर्मांगमुच्यते॥ देवानु
द्दिश्ययच्छ्राद्धंतत्तुदैविकमुच्यते॥ गच्छन्देशांतरंयस्तुश्राद्धंकुर्यात्तुसर्पिषा॥ यात्रार्थमिति
तत्प्रोक्तंप्रवेशेचनसंशयः॥ शारीरोपचयेश्राद्धमर्थोपचयएवच॥ पुष्ट्यर्थमेतद्विज्ञेयमौ
पचापिकमुच्यते॥ गोष्ठ्यांश्राद्धकर्तृसमुदायेसंभूयसामग्रीसंपादनेनयुगपत्तीर्थादिप्राप्तौ
विदुषांश्राद्धंसंपदासुखार्थंभिन्नपाकाशक्तौबहुपितृकःश्राद्धमेकःकुर्यादितिकल्पतरुः
शंखधरश्च॥ शुद्धिश्राद्धंप्रायश्चित्तांगमितिमैथिलाः॥ अत्रपार्वणैकोद्दिष्टवृ
द्धिसपिंडीकरणात्मकंचतुर्विधमेवमुख्यं॥ तस्यैवायंप्रपंचः॥ अथश्राद्धदे
शाः॥० मनुः॥ शुचिंदेशंविविक्तंतुगोमयेनोपलिप्यच॥ दक्षिणाप्रवणंचै
वप्रयत्नेनोपपादयेत्॥ पृथ्वीचंद्रोदयेविष्णुधर्मे॥ दक्षिणाप्र
वणेदेशेतीर्थादौचगृहेपिवा॥ भूसंस्कारादिसंयुक्तेश्राद्धंकुर्यात्प्रयत्नतः॥ तत्रैवप्रभास

नामपिपिंडोक्तेः॥पैवांधववांधवावेमादितर्पणावाधापत्तेश्चनामगोत्रसर्वश्राद्धनिषेधोनान्य
त्रेतिगौडाः॥विप्रासुतस्यशूद्रापुत्रश्राद्धनिषेधोनान्यत्र॥अत्रदानंचान्नमागान्नसर्वंकार्यमिति
मैथिलाः॥ तन्न॥ अयभागस्यश्राद्धपरत्वेमानाभावात्॥अन्नदानेचा
निषेधात्॥न्यागान्नसर्वंकरणेऽन्नगीनमवधानापत्तेरुक्त्वेचमानाभावात्॥इदंचस्वाम्यनु
ज्ञाभावे॥ तदुक्तंतत्रैवब्राह्मे॥ स्वेनुनिमेयुगेहेयुस्वाम्यनुज्ञापिते
षुच॥श्राद्धमेतेषुदानंमंवर्ज्यमितेषुनोच्यते॥किरातेषुकलिंगेषुकोंकणेषुरुतसेषुच॥सिं
धोरुत्तरकूलेषुनर्मदायाश्चदक्षिणे॥वर्णेराकरतोयायान्देयंश्राद्धमुच्यते॥इदंकाम्यविष
यं॥अन्यथातत्रत्यानांसर्वश्राद्धाकरणापत्तेः॥नर्मदादक्षिणेप्यवादः॥ स्कांदे॥
सह्यस्यचोत्तरेयत्रयत्रगोदावरीनदी॥पृथिव्यामपिकृत्स्नायांसप्रदेशोतिपावनः॥परा
कीयत्वापवादआदित्यपुराणेअटवीपर्वताःपुण्यानदीतीर्थानियानिच॥सर्वाण्यस्वामि
कान्याहुर्नहितेषुपरिग्रहः॥वनानिगिरयोनद्यस्तीर्थान्यायतनानिच॥देवखातान्यगर्तां
श्चनस्वाम्यंतेपुविद्यते॥ स्मृतिसारे॥ नैकंवासानचद्वीपेनांतरिक्षे
कदाचन॥श्रुतिस्मृत्युदितंकर्मनकुर्यादशुचिःक्वचित्॥दिवोदासीये॥म्लेच्छदेशेतथा
रात्रौसंध्यायांचिन्नवर्जितः॥नश्राद्धमाचरेद्विद्वान्नान्यकोशेकथंचन॥ अथ
श्राद्धकालः तेचसंक्रांतियुगादिमहालयादयःप्रायेणाद्वैपरिच्छेदद्वयेउक्ता
एव॥केचिन्नूच्यते॥ पृथ्वीचंद्रोदयेवृद्धपराशरः॥ श्राद्धंदद्याद्
चंद्रेभच्छायायांग्रहणसंक्रमे॥नवोदकेनवान्नेचनवच्छन्नेतथागृहे॥नवेस्ववेषुचेहंतेपित
रोहिमघास्वपि॥पितरःस्पृहयंत्यन्नमष्टकासुमघासुचेति॥ शानानपपाठः
नवोदकेनवकूपादाविति केचित्नववर्षपक्रमेआर्द्राप्रवेशे॥ इतिगौडाः॥
नवान्नश्राद्धविशेषोज्योतिषे॥ज्येष्ठाश्लेषार्द्धगेसूर्येमृगनेत्रानिशात्मके॥नवान्नेभोज
नश्राद्धं ॥जन्मचंद्रतिथौनच॥अश्लेषाकृत्तिकाज्येष्ठामूलाजपदेकेषुच॥
भृगुभौमदिनेरिक्तेतिथौनाद्यान्नवोदनं॥तत्रैवदृश्चिकेशुक्लपक्षेतुनवान्नंशस्यतेवुधैः
अतःकृष्णपक्षेनेतिगौडाः॥मैथिलास्तुअक्षतायवणांचैवधान्यजातंनरोत्तमेतिवारा
होक्तेःप्रतिधान्यंश्राद्धमाहुः॥तन्नजातपदस्यश्राद्धयोग्यसमूहपरत्वात्॥ हेमा
द्रौजाबूकर्ण्यः॥शंखमाहुरमावास्याक्षीणचंद्राद्विजोत्तमाः॥अष्टकानुभवेत्यमंतत्रदत्तं
तथाक्षयं॥तत्रैवशंखः॥यदाविष्टिर्व्यतीपातोभानुवारस्तथैवच॥पद्मकंनामतन्प्रोक्तम
यनाच्चचतुर्गुणं॥याज्ञवल्क्यः॥अमावास्याष्टकावृद्धिःकृष्णपक्षोयनद्वयं॥द्रव्यंब्राह्मण
संपत्तिर्विषुवत्सूर्यसंक्रमः॥व्यतीपातोगजच्छायाग्रहणंचंद्रसूर्ययोः॥श्राद्धंप्रतिरुचि
श्चैवश्राद्धकालाःप्रकीर्तिताः॥कृष्णपक्षःसर्वोपि॥शौकेनाप्यपरपक्षंनातिक्रमेन्मासि
मासिवाशनमितिस्मृतेः॥ऊर्ध्वंवाचतुर्थ्यायदहःसंपद्येतेकृतेचतुर्दशीमितिकात्यायने
क्तेःमासिमासिकार्यमपरपक्षस्यापराह्णःश्रेयानित्यापस्तंबोक्तेश्च॥वीरशयासर्वकृष्णप

क्षेषु नित्यं॥ तेनोपसंहारान्महालयपरत्वं परास्तं॥ अत्र प्रत्यहं पंचम्यादियदहः संपन्निवेति
त्रयः पक्षाः॥ यदेकदिने श्राद्धं तदा दार्शस्यैव॥ याज्ञवल्क्येनामावास्यायाः
पृथङ्निर्देशात्॥ एतेन कृष्णपक्षे यदहः संपद्यते॥ अमावास्यायां तु विशेषेणेति निगमो
क्तेश्च॥ गुणोऽपरपक्षश्राद्धस्यामावास्येति शूलपाणिमतमप्यपास्तं॥ अशक्तौ दर्शेनापि
मासिश्राद्धसिद्धिरिति नारायणवृत्तिः॥ निरग्नीनां कस्मिंश्चिद्दिने॥ आहिताग्नेस्तु दर्शे ए
व॥ न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मन इति मनूक्तेः॥ सर्वकृष्णपक्षाशक्तौ मात्स्ये॥ अ
नेन विधिना श्राद्धं त्रिरब्दस्येह निर्वपेत्॥ कन्याकुंभवृषस्थेर्के कृष्णपक्षे च सर्वदा॥ क
कोपि॥ आहिताग्नेः संवत्सरे त्रिः श्राद्धनियम इति॥ देवलः॥ अ
नेन विधिना श्राद्धं कुर्यात्संवत्सरे सकृत्॥ द्विश्चतुर्वा यथा श्राद्धं मासे मासे दिने दिने॥ कृष्ण
पक्षेष्वपि महालयस्य श्रेष्ठत्वं॥ तच्चोक्तं प्राक्॥ व्यतीपाते विशेषमाह॥ हेमाद्रौ शं
खः॥ फलं लक्षगुणमुत्पन्ने भ्रमणे कोटिरुच्यते॥ पतने शतकोट्यस्तु पाते वेदन्न
मक्षयं॥ ज्योतिःशास्त्रे॥ द्वाविंशतिस्तथोत्पन्ने भ्रमणे चैकविंशतिः॥ प
तने दश नाड्यस्तु पतिते सप्त नाडिकाः॥ अमी च हि व्यतीपाते प्रागुक्तौ॥ हेमाद्रौ
मार्कंडेयः॥ यदा च श्रोत्रियोऽभ्येति गृहं वेदविदग्निचित्॥ तेनैकेनापि कर्तव्यं श्राद्धं च विधि
वत्सुभं॥ इदं चापिंडं कार्यमिति हेमाद्रिः॥ एतज्जीवत्पितृकोपि कुर्यात्॥ उद्वाहे पुत्रजनने
पित्र्येष्ट्यां सौमिके मखे॥ तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुरिति मैत्रायणीयपरिशि
ष्टोक्तेः॥ तिथिविशेषे फलविशेषः याज्ञवल्क्येनोक्तः॥ कन्यां कन्यावेदिनश्च पशून्वै स
त्सुतानपि॥ द्यूतं कृषिं च वाणिज्यं द्विशफैकशफांस्तथा॥ ब्रह्मवर्चस्विनः पुत्रान्स्वर्णरौ
प्ये सकुप्यके॥ ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा॥ प्रतिपत्प्रभृतिष्वेकां वर्जयित्वा
चतुर्दशीं॥ एताः कृष्णपक्षस्य एव॥ महालये तु फलभूमेति पृथ्वीचंद्रः॥ योगीमास्यां हेमा
द्रौ पितामहः॥ अमावास्याव्यतीपाते यौर्णमास्यष्टकासु च॥ विद्वान्श्राद्धमकुर्वाणो नरकं
प्रतिपद्यते॥ एतन्माघ्यादिपरम्॥ व्रीहिपाके च कर्तव्यं यवपाके च पार्थिव॥ योगीमासीत्
यामाघीश्रावणी चन्द्रयोत्तम॥ प्रोष्ठपद्यामतीतायां तथा कृष्णात्रयोदशी॥ एतास्तु श्राद्ध
कालान्वै नित्यानाह प्रजापतिरिति विष्णुधर्मोक्तेः॥ विष्णुः॥ माघी प्रोष्ठपद्यू
र्ध्वं कृष्णात्रयोदशीति॥ अत्र माघीयोर्णमेति कल्पतरुः॥ श्रावणपूर्वमपि मघायोगसंभ
वात् त्रयोदशी विशेषणमिति गौडाः॥ नक्षत्रेष्वपि याज्ञवल्क्यः॥ स्वर्गं ह्यपत्यमोजश्च शौ
र्यं क्षेत्रं बलं तथा॥ पुत्रान् श्रैष्ठ्यं च सौभाग्यं समृद्धिं मुख्यतां शुभम्॥ प्रवृत्तचक्रतां वापि
वाणिज्यप्रभृतीनपि॥ अरोगित्वं यशो वीतशोकतां परमां गतिं॥ धनं वेदान्भिषक्सि
द्धिं कुप्यं गामप्यजाविकाम्॥ अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति॥ कृत्तिकादिभ
रण्यंतेषु कामानाप्नुयादिमान्॥ फलानत्रप्यपि भारतकोर्मादेर्ज्ञेयानि माधवीये म
एविः॥ कृत्तिकादिषु ऋक्षेषु श्राद्धे यत्फलमीरितम्॥ विष्कुंभादिषु योगेषु तदेव फल

मिष्यते॥ बृहस्पतिः॥ आरोग्यं चैव सौभाग्यं शत्रूणां च पराजयं। सर्वान्का-
मान् श्रियं विद्यां धनमायुर्यथाक्रमं॥ सूर्यादिदिवसेष्वेतच्छ्राद्धकृल्लभते फलम्॥ अमावि-
चषण्णवतिश्राद्धादीनि प्रागुक्तानि॥ मार्कंडेयपुराणे॥ श्राद्धार्हद्रव्यसं-
पत्तौ तथा दुःस्वप्नदर्शने॥ जन्मर्क्षे ग्रहपीडासु श्राद्धं कुर्वीत चेच्छया॥ अथ श्राद्धा-
धिकारिणः। चंद्रिकायां सुमंतुः॥ मातुः पितुः प्रकुर्वीत संस्थितस्यौरसः सुतः। पि-
तृमेधिनं संस्कारं मंत्रवद्यं क्रमाद्दतः॥ तत्रैव हेमाद्रौ शंखः॥ पितुः पु-
त्रेण कर्त्तव्या पिंडदानोदकक्रिया॥ पुत्राभावे तु पत्नी स्यात्तदभावे तु सोदरः॥ अत्र यद्यपि
पुत्रपदं दौहित्रादिद्वादशविधपुत्रपरम्। ते च द्वादश पुत्राः॥ याज्ञवल्क्येनोक्ताः
औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः। क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा॥ गृ-
हे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः॥ कानीनः कन्यकाजातो मातामहसुतः स्मृतः॥ अ-
क्षतायां क्षतायां वा जातः पौनर्भवः सुतः॥ दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्॥ क्री-
तश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयं कृतः॥ दत्तात्मा तु स्वयं दत्तो गर्भे विन्नः सहोढजः॥
उत्सृष्टो गृह्यते यस्तु सोपविद्धो भवेत्सुतः॥ पिंडदोंशहरश्चैषां पूर्वाभावे परः इति॥ तथा-
पि दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रह इति हेमाद्र्यादिधृतपुराणे कलावितरेषां पुत्रत्वनि-
षेधाद्दौरसदत्तकपरमेव॥ यद्यपि पिंडदोंशहरश्चैषां पूर्वाभावे परः पर॥ इति याज्ञवल्क्यो-
क्तेरौरसाभावे दत्तकस्यापि तस्याप्यौरसाभावे पौत्रस्य तदभावे प्रपौत्रस्य तदभावे दत्तकादेरिति न्याय्यम्॥
पुत्रेण लोकान् जयति पौत्रेणानंत्यमश्नुत इति॥ अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति
विष्टपमिति गौतमवाहनः॥ धृतवसिष्ठहारीतशंखलिखितोक्तेः॥
लोकानंत्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैरिति याज्ञवल्क्योक्तेश्च॥ पुत्रः पौत्रश्च तत्पुत्रः पुत्रिकापुत्र
एव च॥ पत्नी भ्राता च तज्जश्च पिता माता स्नुषा तथा॥ भगिनी भागिनेयश्च सपिंडः सोदकस्तथा॥
असन्निधाने पूर्वेषामुत्तरे पिंडदाः स्मृता इति स्मृतिसंग्रहे प्रपौत्रानंतरं पुत्रिकापुत्रोक्तेस्तत्समत्वाच्च
दत्तकस्य। यद्यपि बृहस्पतिना। पौत्रश्च पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ। रिक्थे च पिंडदाने च समौ
तौ परिकीर्तिताविति पौत्रसाम्यमुक्तं॥ याज्ञवल्क्येन च औरसो धर्मपत्नीजस्तत्सम-
पुत्रिकासुत इत्यौरससाम्यं। तथापि लोके राजसमो मंत्रीत्यादौ किंचिन्न्यूनेन समशब्दप्रयोगाद्गौ-
णमुख्ययोः साम्यायोगाच्च स्तुत्यर्थं तन्न तु समविकल्प इति भ्रमितव्यम्॥ पुत्रः पौत्रः प्रपौत्रो वा भ्रा-
ता वा भ्रातृसंततिः। सपिंडसंततिर्वापि क्रियार्हा नृप जायते। तेषामभावे सर्वेषां समानोदकसं-
ततिः॥ मातृपक्षसपिंडेन संबद्धा ये जलेन वा॥ कुलद्वये पि चोच्छिन्ने स्त्रीभिः कार्याः क्रिया नृप॥
तत्संघातगतैर्वापि तद्रिक्थात्कारयेन्नृप इति॥ विष्णुपुराणाच्च॥०
प्रपौत्रानंतरं दत्तकादय इति पृथ्वीचंद्रमदनरत्नकालादर्शादयः॥ मदनपारिजातेप्येवं॥
शौपदेवरुद्रधरादयस्तु पुत्रेषु विद्यमानेषु नान्यं वै कारयेत्स्वधामिति मनूक्तेः॥ पितामहे पितुः
पश्चात्पंचत्वमागच्छति॥ पौत्रेणैकादशाहादिक्रियं चाहर्यो ऽशमा। नेतरेण कर्तव्यं पु

अंशश्चेति तामहरतिछंदोगपरिशिष्टे च पुत्रशब्दस्य द्वादशविधसुतपरत्वात्॥ सर्वाभावे परः परइ
त्यस्यानन्यपरत्वाच्च॥ दत्तकाद्यभावे पौत्रादीनामधिकार इत्याहुः॥ तन्नौरसमुख्ययोः साम्यायोगात् दत्तके
सति पौत्रस्यांशहरत्वस्याप्यभावापत्तेः॥ पुत्रपदस्यौरसमात्रपरत्वाच्चिंत्यं॥ अत एव निषेधादुपनी
तपौत्रसत्वेप्यनुपनीतपुत्रस्यैवाधिकारः। औरसश्चानुपनीतोपि कुर्यादित्याह पृथ्वीचंद्रो
दये सुमंतुः॥ श्राद्धं कुर्यादवश्यं तु प्रमीतपितृको द्विजः॥ व्रतस्थो वाव्रतस्थो वा एक एव भ
वेद्यदि॥ वृद्धमनुः॥ कुर्यादनुपनीतोपि श्राद्धमेको हि यः सुतः॥ पितृयज्ञाहुतिं पाणौ जुहुयाद्ब्राह्म
णस्य सः॥ एको मुख्यः॥ औरस इत्यर्थः॥ मनुः॥ नह्यस्मिन्युज्यते कर्म किंचिदामौंजिबंधनात्
॥ नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते॥ ब्रह्म वेदः॥ सुमंतुरपि॥ नाभिव्या
हारयेद्ब्रह्म यावन्मौंजी निबध्यते॥ मंत्राननुपनीतोपि पठेदेवैक औरसः॥ अयं मंत्रपाठस्त्रिव
र्षकृतचूडस्यैव॥ अनुपेतोपि कुर्वीत मंत्रवत्पितृमेधिकं॥ यद्यसौ कृतचूडः स्याद्यदि स्याच्च त्रिव
त्सरः॥ इति सुमंतूक्तेः॥ यत्तु व्याघ्रः॥ कृतचूडस्तु कुर्वीत उदकं पिंडमेव च॥
स्वधाकारं प्रयुंजीत वेदोच्चारं न कारयेदिति॥ यच्च स्मृतिसंग्रहे॥ कृतचूडो
नुपेतश्च पित्रोः श्राद्धं समाचरेत्॥ उदाहरेत्स्वधाकारं न तु वेदाक्षराण्यसाविति॥ तत्प्रथमवर्ष
चूडाविषयमिति माधवमदनरत्नपृथ्वीचंद्राः॥ त्रिवर्षोर्ध्वं मंत्रवत्त्वस्य विकल्प इति चंद्रि
कावोपदेवश्च॥ दत्तकादिपरो निषेधः॥ इति वयम्॥ मदनरत्ने स्कांदे
यत्नेषु मंत्रवत्कर्म पत्नी कुर्याद्यथानृप॥ तथोर्ध्वदैहिकं कर्म कुर्यात्साधर्मसंस्कृता॥ अश
नौ तु कात्यायनः॥ असंस्कृतेन पत्न्या वह्निप्रदानं समंत्रकम्॥ कर्तव्यमितरत्सर्वं कारयेद
न्यमेव हि॥ पुत्रश्च न जन्मतोऽधिकारी किंतु वर्षोत्तरमित्याह कालादर्शः॥ चौलाद्वाप्यादिका
दर्वाक्कृतं कुर्यात्पित्र्यमेधिकं॥ मदनरत्ने सुमंतुरपि॥ पुत्रश्चौ
ल्यतिमात्रेण संस्कुर्यादृणमोचनात्॥ पितरं नाद्विकाच्चौलात्पैतृमेधेन कर्मणा॥ एतच्चौर
सस्यैव॥ दत्तकादीनां तूपनीतानामेवाधिकारः॥ इति कालादर्शः॥ पृथ्वीचंद्रोद
ये स्कांदे॥ पित्रोरनुपनीतोपि विदध्यादौरसः सुतः॥ और्ध्वदैहिकमन्ये तु संस्कृताः श्राद्धका
रिण इति॥ अन्यत्रापि दर्शमहालयादावनुपनीतस्याधिकारोस्माभिः पूर्वमुक्तः॥ प्रपौत्रा
भावे दत्तकाद्या एकादशपुत्राः तदभावे भर्तुः पत्नी तस्याश्च सः॥ अपुत्राशयनं भर्तुः पालयंती
व्रते स्थिता॥ पत्न्येव दद्यात्तत्पिंडं कृत्स्नमंशं लभेत च इति वृद्धमनूक्तेः॥ भार्यापिंडं पतिर्दद्याद्भर्त्रे
भार्या तथैव च॥ श्वश्र्वादेश्च स्नुषा चैव तदभावे सपिंडका इति॥ पुत्राभावे तु पत्नी स्यात्पत्न्यभा
वे तु सोदर इति च हेमाद्रौ शंखोक्तेः॥ पृथ्वीचंद्रस्तु॥ कानीनगूढ
सहजपुनर्भूतनयाश्च ये॥ पत्न्यभावे धिकुर्युस्ते अप्रशस्ताः स्मृता हि ते इति स्मृतिसंग्रहात्पत्न्य
भावे कानीनाद्या॥ इत्याह॥ पत्युरपि सपत्नीपुत्रे सति नाधिकारः॥ पितृय
त्नः सर्वा मातर इति सुमंतूक्तेः॥ विदध्यादौरसः पुत्रो जननी चौर्ध्वदैहिकं॥ तदभावे सपत्नीजः
क्षेत्रजाद्यास्तथाप्तताः॥ तेषामभावे तु पतिस्तदभावे सपिंडका इति मदनरत्ने कात्यायनोक्तेश्च

वह्वीनामेकपत्नीनामेष एव विधिः स्मृतः॥ एका चेत्पुत्रिणी तासां सर्वासां पिंडदस्तु सः इति बृहस्पति
वचनाच्च॥ अपरार्केप्येवम्॥ तेन यत्तु शुद्धिविवेक उक्तम्॥ सत्यपि सपत्नीपुत्रे प
त्युरेवाधिकार इति॥ तन्निरस्तम्॥ यच्च तत्रैव कात्यायनः॥ न भार्यायाः पतिर्दद्या
दपुत्रायाअपि क्वचित्॥ यच्च विष्णुपुराणम्॥ कुलद्वयेपि चोच्छिन्ने स्त्रीभिः
कार्या क्रिया नृपेति॥ यच्च मार्कंडेयपुराणं॥ सर्वाभावे स्त्रियः कुर्युः स्वभर्तॄ
णाममंत्रकमिति॥ तदासुरादिविवाहोढाविषयं॥ धर्म्यविवाहे रूढा या सा पत्नी परिकीर्तिता॥
क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते॥ न सा दैवे न सा पित्र्ये दासीं तां मुनयो विदुरिति माध
वीये शातातपोक्तेः॥ यत्तु शुद्धिरत्नाकरे शूलपाणिश्च॥ अपुत्रस्य च या पत्नी सा पितृपिं
डप्रदा भवेत्॥ तस्य पिंडान्दशैकं वा एकाहेनैव निक्षिपेदिति जाबालोक्तेः॥ भर्तुर्धनहरा पत्नी
तां विना दुहिता स्मृता॥ अंगादंगात्संभवति पुत्रवद्दुहिता नृणामिति बृहस्पतिना दुहितुर्धन
हारित्वोक्तेश्च॥ पुत्राभावे क्रमात्तदभावे सपत्नीपुत्र इत्याहतुः॥ तन्न सर्वविरोधात्॥ मातुर्दुहि
तरः शेषमृणात्ताभ्य ऋतेऽन्वय इति॥ दुहितुर्मातृधनग्राहित्वेन पुत्रस्य तच्छ्राद्धानधिकाराप
त्तेश्चोपेक्ष्यं॥ वचनं तु भ्रातृपुत्राद्यभावविषयं॥ पत्न्यभावे त्वविभक्तस्य सोदरः॥
पूर्वोक्तशंखवचनात्॥ विभक्तस्य दुहिता॥ धनहारित्वात्पूर्वोक्तजाबालिवच
नाच्च॥ तत्राप्यूढानूढासमवाये ऊढैव॥ दुहिता पुत्रवत्कुर्यान्मातापित्रोस्तु संस्कृता॥
आशौचमुदकं पिंडमेकोद्दिष्टं सदा तयोरिति॥ भरद्वाजोक्तेः॥ तदभा
वे दौहित्रः धनहारित्वात्॥ मातापित्रोरुपाध्यायाचार्ययोरौर्ध्वदेहिकं॥ कुर्वन्मातामहस्या
पि व्रती न भ्रश्यते व्रतादिति चंद्रिकायां वृद्धमनूक्तेः॥ यथाव्रतस्थोपि सुतः पितुः कुर्यात्क्रि
यां नृप॥ उदकाद्यां महाबाहो दौहित्रोपि तथार्हतीत्यपरार्के भविष्योक्तेश्च॥ एतद्धनहारि
णोऽवश्यकं नान्यस्येत्याह॥ तत्रैव स्कांदः॥ श्राद्धं मातामहानां तु अवश्यं धनहारिणा॥ दौ
हित्रेणार्थनिष्कृत्यै कर्तव्यं स्वसुतैरिति॥ तेन दौहित्रीत्वपुत्रीकृत इति देवयाज्ञिकोक्तिः प
रास्ता॥ अत्र पत्नीदौहित्रसमवाये अंशहरत्वात्पत्न्येव कुर्यात्॥ दौहित्रभ्रातृपुत्रसत्त्वे विभ
क्तस्य दौहित्रः अविभागे भ्रातृपुत्रः भ्रातृतत्पुत्रसत्त्वे कनिष्ठश्चेद्भ्रातैव॥ ज्येष्ठश्चेत्तत्पुत्रः कु
र्यादिति दाक्षिणात्यग्रंथाः॥ हारलतादौ तु॥ भ्रातुर्भ्राता स्वयं चेन्न त
द्भार्या चेन्न विद्यते॥ तस्य भ्रातृसुतश्चैव यस्य नास्ति सहोदरः॥ इति शातातपोक्तेः
पत्नी कुर्यात्सुताभावे तदभावे सहोदर इति कौर्मोक्तेश्च॥ ज्येष्ठभ्रातैव कुर्यान्न तत्सुतः॥ यत्तु ना
नुजस्य तथाग्रज इति॥ तत्कनिष्ठभ्रातृसत्त्वविषयं॥ यच्च मनुः॥ सर्वेषा
मेकजातानामेकश्चेत्पुत्रवान्भवेत्॥ सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत्॥ इ
ति तत्सोदराभावविषयमित्युक्तम्॥ एतेन पुत्रत्वातिदेशोयम्॥ अतस्तस्मिन्सत्येकादश
पुत्राः प्रतिनिधयो न कार्याः॥ स एव पिंडदोंशहरश्चेति अत्रापीति वाचस्पतिमनुटीकाक
सेतुरत्नाकरादयः परास्ताः॥ द्वादशपुत्राभावे पत्नी दुहितर इति याज्ञवल्क्योक्तेश्च॥ तस्मा

दत्तकपुत्रप्रशंसेयमिति विज्ञानेश्वरः॥ अविभक्तविषयं वा॥ मदनरत्ने स्मृतिसंग्रहे॥ पुत्रः कुर्यात्पितुः श्राद्धं पत्नी च तदसन्निधौ॥ धनहार्यप्यदौहित्रस्ततो भ्राता च तत्सुतः॥ भ्रातुः सहोदरो भ्राता कुर्याद्दाहादि तत्सुतः॥ ततस्त्वसोदरो भ्राता तदभावे च तत्सुत इति॥ भ्रातृपुत्राभावे क्रमेणापि तृमातृस्नुषा स्वस्तृतत्पुत्रादयः धनहारित्वात्॥ भगिनीतत्सुतयोर्विशेषमाह॥ मदनरत्ने कात्यायनः॥ अनुजा वाग्रजा वापि भ्रातुः कुर्वीत सत्क्रियां॥ ततस्त्वेसोदराऽतद्दत्त्रमेणतनयस्तयोः॥ अपरार्के काष्र्णाजिनिः॥ पुत्रः शिष्योथवा पत्नी पिता भ्राता स्नुषा गुरुः॥ स्त्रीहारी धनहारी च कुर्यात्पिंडोदकक्रियां॥ मार्कंडेयपुराणे॥ पुत्रो भ्राता च तत्पुत्रः पत्नी माता तथा पिता॥ वित्ताभावेपि शिष्याश्च कुर्वीरन्नौर्ध्वदैहिकं॥ तेन धनहारी एतस्मिन्न इति कालादर्शः॥ अत्र पाठक्रमो न विवक्षितः सर्ववाक्येष्वथ ततः शब्दादिभिः श्रौतक्रमोक्तेः॥ अथ जिह्वायाः अयवक्ष इतिवत्॥ पृथ्वीचंद्रोदये वृद्धमनुः॥ स्नुषा स्वस्रीय तत्पुत्रज्ञातिसंबंधिबांधवाः॥ पुत्राभावेतु कुर्वीरन्सपिंडांतं यथाविधि॥ मार्कंडेयपुराणे॥ पुत्राद्युत्सन्नवंशोऽश्व सखापि श्वसुरस्य च॥ जामातास्तेहवत्कुर्यादखिलं पैतृमेधिकम्॥ चंद्रिकायां वृद्धशातातपः॥ मातुलो भागिनेयस्य स्वस्त्रीयो मातुलस्य च॥ श्वसुरस्य गुरोश्चैव सख्युर्मातामहस्य च॥ एतेषां चैव भार्याणां स्वसुर्मातुः पितुस्तथा॥ श्राद्धमेषां तु कर्तव्यमिति वेदविदो विदुः॥ शुद्धिविवेके पृथ्वीचंद्रोदये च ब्राह्मे॥ दत्तानां चाप्यदत्तानां कन्यानां कुरुते पिता॥ चतुर्थेहनि तासां च कुर्वीरन्सुसमाहिताः दत्ता वादत्ताः॥ मातामहानां दौहित्राः कुर्वन्त्यहनि चापरे॥ तेपि तेषां प्रकुर्वंति द्वितीयेहनि सर्वदा॥ जामातुः श्वसुराश्च कुर्युस्तेषां तेपि च संयुताः॥ मित्राणां तदपत्यानां श्रोत्रियाणां गुरोस्तथा॥ भागिनेयसुतानां च सर्वेषां त्वपरेहनि॥ राज्ञः सति सपिंडे तु निरपत्ये पुरोहितः॥ मंत्री वा तदशौचं तु पुराचीर्णं करोति सः॥ अत्र द्वितीयाहादौ श्राद्धविधानमस्थिसंचयपरं॥ कालादर्शे॥ दाहादिमत्रवत्पित्रोर्विदध्यादौरसः सुतः तदभावे तु पौत्रश्च प्रपौत्रः पुत्रिकासुतः॥ दौहित्रो धनहारी च भ्राता नान्तत्पुत्र एव च॥ पिता माता स्नुषा चैव स्वसा तत्पुत्र एव च॥ सपिंडश्च सोदको मातुः सपिंडश्च सहोदकः॥ स्त्री च शिष्यर्त्विगाचार्या जामाता च सखापि च॥ [illegible] धौ रिक्थेन कारयेदवनीपतिः॥ गौतमः॥ पुत्राभावे [illegible] डाः शिष्याश्च दद्युस्तदभावे चऋत्विगाचार्यौ॥ यत्तु चंद्रिका [illegible] श्रीणां श्राद्धं प्रकर्तव्यं सर्वेषां वर्णलिंगिनामिति॥ तत्त्ववर्णविहि [illegible] नां न कुर्यात्कर्म किंचन॥ कामाद्वो भाम्दया मोहा [illegible] नब्राह्मणेन कर्तव्यं शूद्रस्यौर्ध्वदैहिकं॥ [illegible] दितियारस्करोक्तेश्च॥ पारसव उद्व [illegible] यस्मादेरधिकार उक्तः॥ तचामत्वे [illegible] पि

नेष्टव्यमित्युक्तम्। तत्रासन्निधौ पत्न्यादेः सर्वत्राधिकारे प्राप्ते प्रोषितावसिते पुत्रः कालादति
चिरादपि॥ एकादशाद्याः क्रमशो ज्येष्ठस्य विधिवत्क्रिया॥ ज्येष्ठेनैव तु यत्कृतमित्यादौ देशां
तरे अपवादात्॥ पुत्रनाश एव पत्न्यादेः सपिंडनादावधिकारः असन्निधौ तु तत्पूर्वमेव नो
र्ध्वं॥ अतोऽनधिकारिणा भ्रात्रादिना कृतमप्यकृतमेवेति पुनरावर्तनीयम्॥ मासिकाप
कर्षोऽप्यावर्तनीयः॥ एकादशाहमासिकानि नावर्तंते॥ तन्न्यायसापि कर्तव्यं सपिंडीक
रणं पुनरिति वदारुत्रिविधानाभावादिति केचित्॥ तन्न॥ अस्य निर्मूलत्वात्॥ अतस्त
दपि कनिष्ठकृतमावर्तते॥ वृद्धिश्रौतपिंडपितृयज्ञार्थं तु कृतं तु नावर्तते॥ नासपिंड्याग्नि
मान्पुत्रः पितृयज्ञं समाचरेत्॥ न पार्वणेनाभ्युदयं कुर्वन्नलभते फलमिति वृद्धमनुरनि
षेदनादिति॥ भ्राता वा भ्रातृपुत्रो वा इत्यादिहारीतादिवचोभ्यः कनिष्ठादेरप्यधिकारात्
यथा ज्येष्ठकर्तृकत्वबाधस्तथा पुत्रकर्तृत्वस्यापि बाधः सपिंडने तु बहु वक्तव्यं तन्नि
र्णये वक्ष्यामः॥ अधिकारिविशेषेण क्रियाव्यवस्थोक्ता विष्णुपुराणे॥ पूर्वाः क्रिया मध्य
माश्च तथा चैवोत्तराः क्रियाः॥ त्रिप्रकाराः क्रिया ह्येतास्तासां भेदान् शृणुष्व मे॥ आद्याहाद्द्वादश
हाच्च मध्ये याः स्युः क्रिया नृप॥ ताः पूर्वा मध्यमा मासि मास्येकोद्दिष्टसंज्ञिताः॥ प्रेते पितृत्वमापन्ने
सपिंडीकरणादनु॥ क्रियंते याः सगोत्रैश्चैव राज्ञा वा धनहारिणा॥ पूर्वा मध्याश्च कर्तव्याः पुत्राद्यै
रेव चोत्तराः॥ दौहित्रैर्वा नरश्रेष्ठ कार्यास्तत्तनयैस्तथा॥ मृताहनि तु कर्तव्याः स्त्रीणामप्युत्तराः
क्रियाः दौहित्रतत्पुत्रयोर्धनहारिणोरिदं॥ एवमतस्य धनहर्तुः॥ यश्चार्थहरः सपिंडदायी स्या
पस्तंबोक्तेः॥ प्रेतस्य प्रेतकार्याणि अकृत्वा धनहारकः॥ वर्णानां यद्वधे प्रोक्तं तद्व्रतं प्रयतश्चरेदि
ति पृथ्वीचंद्रोदये व्याघ्रपादोक्तेः॥ मदनरत्ने स्कांदेपि॥ मलमेतन्मनु
ष्याणां द्रविणं तत्प्रकीर्तितमित्युक्त्वा॥ ऋषिभिस्तस्य निर्दिष्टा निष्कृतिः पावनी परा॥ आदेह
पतनात्तस्य कुर्यात्पिंडोदकक्रियामित्युक्तम्॥ क्रियानिबंधे कात्यायनः॥ न च माता न च पित्रा
कुर्यात्पुत्रस्य पैतृकं॥ गायत्रश्च तथा भ्राता भ्रातॄणां तु कनीयसां॥ पृथ्वीचंद्रोद
ये बौधायनः॥ पित्रा श्राद्धं न कर्तव्यं पुत्राणां तु कथंचन॥ भ्रात्रा चैव न कर्तव्यं
भ्रातॄणां च कनीयसाम्॥ यदि स्नेहेन कुर्यात्तु सपिंडीकरणं विना॥ गयायां तु विशेषेण ज्या
यानपि समाचरेत्॥ अन्याभावे पित्रादिरपि कुर्यात्॥ उत्सन्नबांधवं प्रेतं पिता भ्राताथवाग्रजः
जननी वापि संस्कुर्यान्महदेनोऽन्यथा भवेदिति मनूक्तेः॥ ब्रह्मचारिणस्तु शुद्धिविवेके पृथ्वीचं
द्रोदये च ब्राह्मे आसमावृत्तस्यापि कर्तव्यं ब्रह्मचारिणः॥ श्राद्धं तु मातापितृभिर्न तु तेषां करोति
सः॥ श्राद्धं मासिकाब्दिकादि सर्वं कार्यमित्यर्थः॥ न त्विति निषेधोऽन्यसत्त्वे॥ यत्तु छंदोगपरि
शिष्टे॥ न त्यजेत्सूतके कर्म ब्रह्मचारी स्वकं क्वचित्॥ न दीक्षणात्परं यज्ञे न कृच्छ्रादि तपश्चरन्
॥ पितर्यपि मृते नैषां दोषो भवति कर्हिचित्॥ आशौचं कर्मणोंते स्यात्त्र्यहं वा ब्रह्मचारिणां
यच्च याज्ञवल्क्यः॥ न ब्रह्मचारिणः कुर्युरुदकं पतितास्तथेति॥ तदप्यन्यसत्त्वे॥ असमाभावे
तु ब्रह्मचारिणापि कार्यम्॥ पूर्वोक्तवृद्धमनुवचनात्॥ आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती

तीव्रती॥सकटान्नेचनाश्नीयान्नचतैस्सहसंवशेदितितेनैवोक्तेः ब्रह्मचारिणः शवकर्मणि
व्रतान्निवृत्तिरन्यत्रमातापित्रोरितिवसिष्ठोक्तेः॥अत्राशौचमेकाहंदत्तस्यमःप्रागुपनयनान्मृ
तस्यपंचवर्षोत्तरंसपिंडीकरणवर्ज्जंषोडशश्राद्धादिसर्वंकार्यमित्युक्तंदेवजानीये॥असंस्कृ
तानांभूमौपिंडंदद्यात्॥संस्कृतानांकुशेष्वितिप्रचेतोवचनाच्च॥एतच्चाग्रेवक्ष्यामः॥अविभ
क्तानांविशेषमाह पृथ्वीचंद्रोदयेमरीचिः॥ बहवःस्युर्यदापुत्राःपितुरेकत्रवा
सिनः॥सर्वेषांतुमतंकृत्वाज्येष्ठेनैवतुयत्कृतं॥द्रव्येणचाविभक्तेनसर्वैरेवकृतंभवेत्॥ज्ये
ष्ठस्यकर्तृत्वेपिसर्वेफलभागिनइत्यर्थः॥तेनयेब्रह्मचर्यपरान्नवर्ज्जनादयःफलिसंस्का
रास्तेसर्वेषांभवंतीतिसिद्धम्॥संसृष्टिनामप्येवं॥तुल्यत्वात्॥विभक्तानांविशेषमाहोश
नाः॥नवश्राद्धंसपिंडत्वंश्राद्धान्यपिचषोडश॥एकेनैवतुकार्याणिसंविभक्तधनेष्वपि॥ल
घुहारीतः॥सपिंडीकरणांतानियानिश्राद्धानिषोडश॥पृथङ्नैवसुताःकुर्युःपृथग्द्रव्याअ
पिक्वचित्॥ऊर्ध्वंसपिंडीकरणात्सर्वेकुर्युःपृथक्पृथक्॥ मदनरत्ने॥ वि
भक्तास्तुपृथक्कुर्युःप्रतिसंवत्सरादिकम्॥एकेनैवाविभक्तेषुकृतेसर्वैस्तुतत्कृतम्॥एते
नाह्निकादिष्वविभक्तानामनियमइतिवदन्शूलपाणिःपरास्तः॥दत्तकस्तुजनकस्यपु
त्राद्यभावेदद्यात्तत्सवे॥गोत्ररिक्थेजनपितुर्नभजेद्दत्रिमःसुतः॥गोत्ररिक्थानुगःपिंडो
व्यपैतिददतःस्वधेतिमनूक्तेः॥इदंजनकस्यपुत्रसत्वविषयम्॥एतच्चप्रवरमंजर्यांका-
त्यायनलौगाक्षिभ्यांस्पष्टमुक्तम्॥ अथयेदत्तकक्रीतकृत्रिमपुत्रिकापुत्राःपरपरिग्रहे-
णार्षेयाजातास्तेद्व्यामुष्यायणाभवंति॥यथाशौंगशैशिरीणांयानिचास्मान्येवंसमुत्प
न्नानिकुलानिभवंतीत्यादिनाद्वयोःपित्रोःप्रवरानुक्त्वोक्तं॥अथयद्येषांस्वासुभार्यास्वप-
त्यंनस्यात्रिक्थंहरेयुःपिंडंचैभ्यस्त्रिपुरुषंदद्युर्यद्युभयोर्नस्याद्भाभ्यामेवदद्युरेकस्मिं-
श्चोद्दिश्यपृथगुद्दिश्यैकपिंडेद्वावनुकीर्त्तयेत्॥परिगृहीतारंचोत्पादयितारंवातृतीयात्पुरु-
षादिति॥ हेमाद्रौकार्ष्णाजिनिः॥ यावंतःपितृवर्ग्याःस्युस्ताव
द्भिर्दत्तकादयः॥पितॄणांयोजनंकुर्युःस्वकीयैःपितृभिःसह॥द्वाभ्यांसहाथतत्पुत्राःपौत्रा
स्त्वेकेनतत्समं॥चतुर्थपुरुषेच्छेदस्तस्मादेषांत्रिपूरुषी॥साधारणेषुकालेषुविशेषोना-
स्तिवर्गिणाम्॥ अस्यार्थमाहहेमाद्रिः॥ दत्तकादयःजनक
पालकयोःकुलेप्रेतानांस्ववर्गीयैस्सपिंडनंकुर्युः॥दत्तकानांपुत्रास्तुपितुर्दत्तकस्यपि
तृभ्यांजनकपालकाभ्यांस्वपितामहाभ्यांसपिंडनंकुर्युः॥तेषांपौत्राःस्वपितरंदत्तकेन
पितामहेनतज्जनकेनचसपिंडयेयुः॥चतुर्थोपितत्कुलस्यैव॥तेषांप्रपौत्रस्तुदत्तकस्य
प्रपितामहस्यपालककुलस्थंचतुर्थंयोजयेत्तदा॥कंदङ्क्ता॥दर्शमहालयादौतुद्वयोः
पित्रोःपितामहयोःप्रपितामहयोर्वाश्राद्धंदेयं॥तत्रद्वयोःपित्राद्योःपृथक्पिंडदानेद्व-
योरुद्देशेनैकोवेत्यत्रकेचित्॥आवयोरयमितिपरिभाष्ययोदत्तस्तस्यैवंद्वयोःपि
त्रो॥आहम॥यस्त्वपरिभाष्यदत्तस्सगृहीतुरेव॥सपालकस्यैवदद्यादित्याहुःअत्रमूलं

तएवप्रसूय्याः॥ वस्तुतस्तुजनकस्यपुत्रपत्न्याद्यभावेदत्तकोद्व्योर्द्व्यामुष्यायणलकार्यैव॥ प्रा गुक्तकात्यायनवचनात्॥ मानवीयमप्येतद्विषयमेव॥ गोत्रंतुश्राद्धंपालकस्यैव॥ विवाहादीनूर्ध्वंपोरिसादिमत्ततप्रवरद्वपरीत्येयं॥ यस्तुमूल्यक्रीतायांपरभार्यायांदास्यांचोत्पन्नस्सवीजिनेस्यदद्यात्मूल्यंविनास्वयमुपनयतायांतुक्षेत्रिणएव॥ तदुक्तंपृथ्वीचंद्रोदयेकौर्मे॥ अनियोगात्सुतोयस्तुशुल्कतोजायतेत्विह॥ प्रदद्याद्वीजिनेपिंडंक्षेत्रिणेतुततोन्यथेति क्षेत्रजादेर्विशेषस्तुकलौतदभावान्नोच्यतेइतिदिक्॥ जारजानांविशेषमाह॥ अपरार्केनारदः॥ जायंतेत्वतियुक्तायामेकेनवहुभिस्तथा॥ अरिक्थभाजस्तेसर्वेवीजिनामेवतेसुताः॥ दद्युस्तेवीजिनेपिंडंमाताचेच्छुल्कतोहृता॥ अशुल्कोपहृतायांतुपिंडदावोढुरेवते॥ धर्मार्थश्राद्धकरणेफलमाह॥ चंद्रिकायांशातातपः॥ प्रीत्याश्राद्धंतुकर्तव्यंसर्वेषांवर्णलिंगिनां॥ एवंकुर्वन्नरःसम्यङ्महतींश्रियमाप्नुयात्॥ गयायामपितत्रैव॥ ब्रह्मवैवर्ते॥ आमजोवाप्यवामोपिगयाशीर्षेयदानदा॥ यन्नाम्नापातयेत्पिंडंतन्नयेद्ब्रह्मशाश्वतं॥ एतच्चपद्मफलभूमार्थिनाद्विस्त्रिर्वाक्रियतेतदाभेनशिलाश्राद्धवर्जंकुर्यान्नस्यप्रेतत्वविमोक्षार्थत्वान्नस्यजातत्वादितिकेचित्॥ वस्तुतस्तुसन्यासिश्राद्धवदत्रापिसर्वंकार्यम्॥ सांगेधिकारादितियुक्तंप्रतीमः॥ सन्यस्तपित्रादिस्तुपितुःपित्रादिभ्यःसर्वश्राद्धेषुदद्यादित्युक्तंप्राक्वक्ष्यतेचजीवत्पितृकश्राद्धे॥ अत्रस्त्रीशूद्राणांश्राद्धंमंत्रवर्जंतूष्णींभवति॥ स्त्रीणाममंत्रकंश्राद्धंतथाशूद्रस्यतस्यच॥ प्राग्द्विजाश्चव्रतादेशात्तेच॥ कुर्युस्तथैवतदितिहेमाद्रिधृतमरीचिवचनात्॥ अयमेवविधिःप्रोक्तःशूद्राणांमंत्रवर्जितःअमंत्रस्यतुशूद्रस्यविप्रोमंत्रेणगृह्यते॥ इतिब्राह्मोक्तेश्च॥ गृह्यतेस्वधयेति॥ अस्यश्राद्धप्रकरणपाठेपिपरिभाषात्वान्नप्रकरणेनसंकोचोयुक्तः॥ तेनशूद्रस्यस्नानदानादावपिविप्रेणमंत्रपाठःकार्यः॥ अमंत्रस्येतिविशेषणात्स्त्रियाअपीतिशूलपाणिः॥ यत्तुतेनैवोक्तम्॥ मंत्रजन्यनियमादृष्टसिद्धिस्तुनमस्कारेण॥ अनुमतोस्यनमस्कारोमंत्रइतिगौतमोक्तेरितितन्न॥ इष्टद्वारेवतत्साम्येनस्वातंत्र्येण॥ अमंत्रस्यतुशूद्रस्येत्यवधानजन्यादृष्टार्थसोपिक्रियतेतियत्किंचिदेतत्॥ तेनपितृणांनामगोत्रतइत्यादौयत्रद्विजानामपिनाममंत्रउक्तस्तत्रप्रतिप्रसवमात्रार्थंयुक्तन्तिलावपनादावपि॥ अत्रकेचित्॥ वैदिकमंत्रोविप्रस्यपौराणस्तुशूद्रस्यपठनीयः॥ नहिवेदेस्त्यधिकारःकश्चिच्छूद्रस्यविद्यतेपुराणेप्यधिकारोमेदर्शितोब्राह्मणेरिहेतितत्रैव॥ याज्ञोक्तेरित्याहुः॥ गौडाअप्येवम्॥ तन्न॥ नाध्येतव्यमिदंशास्त्रंइत्यस्यतुसन्निधावितिकौर्मपुराणनिषेधेनवेदस्पहरणपरत्वात्॥ अध्येतव्यंत्रयीनित्यंवेश्यैनक्षत्रियेणचश्रोतव्यमेवशूद्रेणनाध्येतव्यंकदाचन॥ श्रौतस्मार्तेचवैधर्मःप्रोक्तमस्मिन्नृपोत्तमः॥ तस्माच्छूद्रैर्विनाविप्रंनश्रोतव्यंकदाचनेति॥ तत्रैवपुराणाधिकारेभविष्योक्तेश्च॥ एतेननाध्येतव्यमितिनिषेधोमंत्रेतरपुराणपरइति॥ श्रीदत्तादिमतम

यास्तं तेन पौराणमंत्राणामेव विप्रेण पाठो न वैदिकानामिति सिद्धं ॥ द्विजस्त्रियस्तु संक
ल्पमात्रं स्वयं कृत्वा वैदिकमंत्रयुक्तं ॥ सर्वं ब्राह्मणद्वारा कारयेयुरिति प्रयोगपारिजातः ॥ अ
त एव स्त्रीणामित्यत्र न विवाहस्त्रीपरमिति ॥ हेमाद्रिराह ॥ अनुपनी
तस्तु वैदिकमंत्रयुक्तं ॥ सर्वं स्वयमेव कुर्यादित्युक्तं प्राक् ॥ यत्तु प्राग्द्विजाश्च व्रतादेशादिति
दशाकविषयमचूडविषयं वेति दिक् ॥ शूद्रस्य तु सदामश्राद्धमेव ॥ सदा चैव तु शूद्राणामाम
श्राद्धं विधीयत इति सुमंतूक्तेः ॥ पृथ्वीचंद्रोदये मात्स्येपि ॥ एवं
शूद्रोपि सामान्ये वृद्धिश्राद्धं च सर्वदा ॥ नमस्कारेण मंत्रेण कुर्यादामान्नवत्सदा ॥ तत्रैव वृ
द्धपराशरः ॥ आमान्नेन तु शूद्रस्य तूष्णीं तु द्विजपूजनम् ॥ कृत्वा श्राद्धं तु निर्वाप्य सजातीन्ना
शयेद्यथा ॥ स एव ॥ आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमुच्यते ॥ हेमाद्रौ भविष्ये ।
धर्मेप्सवस्तद्धर्मज्ञा यदि शूद्राः प्रकुर्वते ॥ अमोकरणमंत्रश्च नमस्कारो विधीयते ॥ आ
वाहनादिकं तेषां यथा शूद्रेण तत्कृणु ॥ देवानां देवताभ्यश्च पितॄणां नामगोत्रतः ॥ पिंड
दानं निर्वपेद्वीरनमतो गोत्रतस्तथा ॥ शूद्राणां गोत्राभावेपि काश्यपगोत्रं ज्ञेयं ॥ तस्मादाहुः
सर्वाः प्रजाः काश्यप्य इति श्रुतेः ॥ गोत्रनाशे तु काश्यप इति व्याघ्रपादोक्तेश्चेति हेमाद्रिः ॥ एव
मन्यत्र गोत्राज्ञाने ॥ एवं तर्पणादिषु ज्ञेयं ॥ तत्रैव भविष्ये ॥ शूद्रस्तु गृ
हपाकेन न पिंडान्निर्वपेत्तथा ॥ स तु मूलं फलं तस्य पापसंवाभवेत्स्मृतम् ॥ गौतमः
अनुमतोस्य नमस्कारमंत्र इति ॥ देवताभ्यः पितृभ्यश्चेत्ययं नमस्कारमंत्र इति केचित् ॥ वि
ज्ञानेश्वरोप्येवमाह ॥ हेमाद्रि ॥ स्तु शूद्रोप्यमंत्रवत्कुर्यादनेन विधिना बुध इति
मात्स्ये मंत्रनिषेधान्नाममंत्रेणेत्याह ॥ पृथ्वीचंद्रोदये स्कांदे ॥ राज
कार्ये नियुक्तस्य बंधनिग्रहवर्तिनः ॥ व्यसनेषु च सर्वेषु श्राद्धं विप्रेण कारयेत् ॥ यत्तु भा
रते राजधर्मेषु ॥ यवनाः किराता गांधाराश्चीनाः शबरबर्बराः ॥ शकास्तुषाराः कंकाश्च
पल्हवाश्चांध्रमद्रकाः ॥ उक्ता ब्रह्मक्षत्रप्रसूताश्च वैश्याः शूद्राश्च मानवाः ॥ कथं धर्मांश्च
रिष्यंति सर्वे विषयवासिन इति चोक्त्वा ॥ वेदधर्मक्रियाश्चैव तेषां धर्मो विधीयते ॥ पि
तृयज्ञास्तथा कूपाः प्रपाश्च शयनानि च ॥ दानानि च यथाकालं द्विजेभ्यो विसृजंतु सदा
तथा ॥ दक्षिणा सर्वयज्ञानां दातव्या भूतिमिच्छता ॥ पाकयज्ञमहार्हाश्च कर्तव्याः सर्वद
स्युभिरिति म्लेच्छादीनां श्राद्धविधानं तदपि सजातीयभोजनद्रव्यदानादिपरं न तु श्राद्ध
परमिति ॥ इति कमलाकरभट्टकृते निर्णयसिंधौ अधिकारिनिर्णयः
॥ अथ पितरः ॥ हेमाद्रौ मात्स्यदेवलौ ॥ नाम गोत्रं पितॄणां
तु प्रापकं हव्यकव्ययोः ॥ अग्निष्वात्तादयस्तेषामाधिपत्ये व्यवस्थिताः ॥ नाममंत्रास्त
दादेशा भवांतरगतानपि ॥ प्राणिनः प्रीणयंत्येव तदाहारत्वमागतान् ॥ देवो यदि पिता
जातः शुभकर्मानुयोगतः ॥ तस्यान्नममृतं भूत्वा देवत्वेप्यनुगच्छति ॥ गांधर्वे भोग्यरू
पेण पशुत्वे च तृणं भवेत् ॥ श्राद्धान्नं वायुरूपेण नागत्वेप्युपतिष्ठति ॥ यानं भवति पक्ष

त्विराक्षसत्वेन तथामिषं॥ दनुजत्वे तथा मद्यं प्रेतत्वे रुधिरोदकं॥ मनुष्यत्वेन्नपानादिनाना
भोगकरं भवेत्॥ अत्र पित्रादिशब्दैर्जनकादीनामेव देवतात्वमुच्यते न वस्वादीनां॥ अमावे
तन्नर इति यजमानस्य पित्रे इति शतपथश्रुतेः यस्य पिता प्रेतः स्यात् स पित्रे पिंडं निधायेति विष्णवा
दिस्मृतेश्च॥ यत्तु मनुदेवलौ॥ वसवः पितरो ज्ञेया रुद्रा ज्ञेयाः पितामहाः॥ प्रपितामहास्तथा
दित्याः श्रुतिरेषा सनातनी॥ यच्च याज्ञवल्क्यः॥ वसुरुद्रादिति
सुताः पितरः श्राद्धदेवता इति॥ तदभेदध्यानार्थं॥ यानि तु हेमाद्रौ नंदिपुराणे॥
विष्णुः पितास्य जगतो दिव्यो यज्ञः स एव च॥ ब्रह्मा पितामहो ज्ञेयो ह्यहं च प्रपितामह इति॥
यच्च भविष्ये॥ अनिरुद्धः स्वयं ज्ञेयः प्रद्युम्नश्च पिता स्मृतः॥ संकर्षणस्तु जनको
वासुदेवस्तु तत्पिता॥ स्वयं कर्त्ता॥ यत्तु तत्रैव प्रथमो वरुणो ज्ञेयः प्राजा
पत्यस्तथापरः॥ तृतीयोग्निः स्मृतः पिंडे ह्येष पिंडविधिः स्मृतः॥ यच्चादित्य
पुराणे॥ मासाश्च पितरो ज्ञेया ऋतवश्च पितामहाः॥ संवत्सरः प्रजानां च वसुमः
प्रपितामहः॥ यच्च नंदिपुराणे॥ अग्निष्वात्ता ब्राह्मणानां पितरः परि
कीर्त्तिताः॥ राज्ञां बर्हिषदो नाम॥ विशां काव्याः प्रकीर्त्तिताः॥ सुकालिनस्तु शूद्राणां व्यामास्ते
च्छांत्यजातिषु॥ इति॥ अत्रावाहनादिषु पित्रादयः समुच्चयेन विकल्पेन वा
यथाचारं तत्तद्देवतारूपेण वाच्या इति हेमाद्र्यादयः॥ हेमाद्रौ ब्राह्मे॥ या
र्वंसां कुरुते यस्तु केवलं पितृहेतुकं॥ मातामहस्तु कुरुते पितृहा स प्रजायते॥ धौम्यः॥
पितरो यत्र पूज्यंते तत्र मातामहा ध्रुवं॥ अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत्॥ अस्या
पवादमाह॥ कात्यायनः॥ कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्धषोड
शं॥ प्रत्याब्दिकं च शेषेषु पिंडाः स्युः षडिति स्थितिः॥ दर्शादौ सपत्नीकानामेव देवतात्वं॥ स्वे
न भर्त्रा समं श्राद्धं माता भुंक्ते सुधासमं॥ पितामही च स्वेनैव तथैव प्रपितामहीति तत्रैवो
क्तेः॥ चंद्रिकायां चतुर्विंशतिमते॥ क्षयाहं वर्जयित्वैकं स्त्रीणां
नास्ति पृथक् क्रिया॥ केचिदिच्छंति नारीणां पृथक् श्राद्धं महर्षयः॥ अन्वष्टकासु वृद्धौ च
गयायां च क्षयेहनि॥ अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सहेति॥ कात्या
यनोक्तेश्च॥ अस्य निर्मूलतां वदंतो गौडास्त्वज्ञा एव॥ अत्र भागद्वयध्याहारः
अन्यथा सपत्निकायै मात्रे इति प्रयोगापत्तेः॥ अत्र मातृशब्दो जननीमात्रमेव मुख्यः॥ तेन सप
त्नमातृभ्यो न स्यात्॥ एवं पितामह्यादिशब्दैः पितृजनन्यादय एवोच्यंत इति तत्सपत्नीभ्यो
न देयमिति हेमाद्रिः॥ कारुण्येन तु महालयादौ देयमिति स एव॥ अथ वि
श्वेदेवाः॥ हेमाद्रौ शंखबृहस्पती॥ इष्टिश्राद्धे क्रतुर्दक्षौ सत्यो नांदीमुखे वसू
॥ नैमित्तिके कामकालौ काम्ये च धुरिलोचनौ॥ पुरूरवा आर्द्रवश्च पार्वणे समुदाहृतौ
॥ तत्रैव॥ उत्पत्तिं नाम चैतेषां न विदुर्ये द्विजातयः॥ अयमुच्चारणीयस्तैः श्लोकः
॥ तत्रैव॥ आगच्छंतु महाभागा विश्वेदेवा महाबलाः॥ ये पत्र विहिताः श्राद्धे साव
धाना समन्विताः॥ आगच्छंतु महाभागा विश्वेदेवा महाबलाः॥ येपत्र विहिताः श्राद्धे साव

धानाभवंतु तेइति॥ इष्टिश्राद्धं प्रतिरूचिरित्युक्तमिति कल्पतरुः॥ आधानादिकर्मांगमित्यन्ये॥
नैमित्तिकमेकोद्दिष्टम्॥ एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यतेइति भविष्योक्तेः॥ यद्यपिए
कोद्दिष्टं दैवहीनमिति॥ तत्र विश्वेदेवनिषेधस्तथापि॥ नवश्राद्धे द्वादशमासिके च कामकालौ
ज्ञेयौ॥ नवश्राद्धं दशाहानि नवमिश्रं तु षड्ऋतून्॥ अतः परं पुराणं वै त्रिविधं श्राद्धमुच्यते॥
अस्मिन्नवे पुराणे वा विश्वेदेवान्नलेभिरे॥ आसुरं तद्भवेच्छ्राद्धं स्वयलं मंत्रवर्जितमिति बह्वृ
चपरिशिष्टात्॥ एतच्च बह्वृचानामेव॥ तेषामेवोक्तेः॥ अन्येषां तु नात्र विश्वेदेवा इति कात्या
यनोक्तेस्तन्निषेधएवेति पृथ्वीचंद्रोदयः॥ अन्येतु नैमित्तिकं सपिंडीकरणमाहुः॥ भ
विष्ये॥ यद्यप्येकोद्दिष्टं तच्छूद्रेनोक्तं॥ तथापि तदप्यदैवं कर्तव्यमयुग्मान्भोजयेद्द्विजा
निति तत्रैव विश्वेदेवनिषेधात्॥ यद्यपि सपिंडीकरणे शातपएकोद्दिष्टत्वं तथापि सपिंडीकर
णश्राद्धं दैवपूर्वं नियोजयेदिति वचनात् तत्परत्वम्॥ हेमाद्रावादित्यपुराणे॥ विश्वेदेवोक्त
र्तुर्दक्षः सर्वास्वि पुरुकीर्तितौ॥ नित्यं नांदीमुखश्राद्धे वसूसत्यौ च पैतृके॥ नवान्नलंभने देवौ
कालकामौ सदैवहि॥ अपि कन्यागते सूर्ये काम्ये च धुरिलोचनौ॥ पुरूरवार्द्रवौ चैव विश्वेदे
वौ तु पार्वणे॥ क्वचिद्विश्वेदेवापवादमाह॥ हेमाद्रौ शातातपः॥ नित्य
श्राद्धमदैवं स्यादेकोद्दिष्टं तथैव च॥ मातृश्राद्धं च युग्मैः स्याददैवं प्राङ्मुखैः पृथक्॥ योजयेद्दे
वस्थाने श्राद्धान्यसानियत्नतः॥ नांदीश्राद्धेभिन्नप्रयोगपक्षे मातृश्राद्धमदैवमिति हेमा
द्रिः॥ अथ विप्राः॥ तेचोत्तममध्यमाधमभेदेन त्रिविधाः॥ अत्रम
दीयाः श्लोकाः॥ त्रिणाचिकेतस्त्रिमधुश्च बह्वृचोप्याथर्वणो याजुषसामगौ च॥
षडंगविच्च त्रिसुपर्णवेत्ताप्यथर्वशीर्षाध्ययनेरतश्च॥ शतायुवेदार्थविदौ प्रवक्ता स्याद्ब्र
ह्मचारी च तथाग्निविच्च सीदत्त्रिः सत्यवाक्॥ षट्सु कर्मनिरतः पित्रोः पंचभिः स्यात्तवंशाः॥ य
तौ पुत्रौ ज्येष्ठसामा पुराणवेत्ता पुत्री चेतिहासेष्वभिज्ञः॥ योगी भिक्षुः सामगो ब्रह्मवेत्तापं चा
ग्निश्च श्रोत्रियस्तत्सुतो वा॥ शंभुध्यायी श्रीशपादाब्जसेवी यांश्चैते तूत्तमाः संप्रदिष्टाः॥ भि
क्षुर्योगी याश्च एतेन लभ्या भाग्यात्तथाश्चैत्तदा भोजनीयाः॥ श्राद्धे विप्रे षूपविष्टेषु यश्चान्ये
प्राप्ताश्चेत् विप्रपंक्तौ तु भोज्याः॥ अत्र मूलं हेमाद्रौ ज्ञेयम्॥ तत्रैव नारदः॥ यो
वै यतीननादृत्य भोजयेदितरान्द्विजान्॥ विजानन्वसतो ग्रामे काव्यं तथाति राक्षसान्॥
दीपकलिकायां दक्षः॥ विना मांसेन मधुना विना दक्षिणया शिषा॥ यतिर्ह्यन्नं
भवेच्छ्राद्धं यतिषु श्राद्धभोजिषु॥ एतच्च ज्ञानिविषयं॥ त्रिणाचिकेतस्त्रिसुपर्णो यजुर्वेदे
कदेशौ तद्वेतनतदध्यायिनो यस्य सप्तर्द्धसोमपाः सत्रिसुपर्णाइति वोपदेवः॥ त्रिमधुऋ
ग्वेदैकदेशतदध्यायी॥ केचित्त्रिणाचिकेतं चयनं त्रिःकृतवानित्यर्थमाहुस्तद्धेमाद्रिविरुद्धं॥
हेमाद्रौ गौतमः॥ युवभ्यो दानं प्रथमं पितृवयसइत्येके॥ मात्स्ये मनुः॥ यश्चाकुरु
तेवाचं यश्च मीमांसते ध्वरं॥ सामस्वरविधिज्ञश्च पंक्तिपावनपावनाः॥ कौर्मे असमानप्रव
रको ह्यसगोत्रस्तथैव च॥ असंबंधी च विज्ञेयो ब्राह्मणः श्राद्धसिद्धये॥ गारुडे॥

विरास्वसत्वेनतथामिषं॥ दनुजत्वेतथामद्यंप्रेतत्वेरुधिरोदकं॥ मनुष्यत्वेन्नपानादिनाना
भोगकरंभवेत्॥ अत्रपित्रादिशब्दैर्जनकादीनामेवदेवतात्वमुख्यत्वेनवस्वादीनां॥ असवि
तत्वेरतियजमानस्यपित्रेइतिशतपथश्रुतेः यस्यपितात्रेतस्यात्सपित्रेपिंडंनिधायेतिविष्वा
दिस्मृतेश्च॥ यत्तुमनुदेवलौ॥ वसवःपितरोज्ञेयारुद्राज्ञेयाःपितामहाः॥ प्रपितामहास्तथा
दित्याःश्रुतिरेषासनातनी॥ यच्चयाज्ञवल्क्यः॥ वसुरुद्रादिति
सुताःपितरःश्राद्धदेवताइति॥ तदभेदध्यानार्थं॥ यानितुहेमाद्रौनंदिपुराणे॥
विष्णुःपितास्यजगतोदिव्योयज्ञःसएवच॥ ब्रह्मापितामहोज्ञेयोह्यहंचप्रपितामहइति॥
यच्चभविष्ये॥ अनिरुद्धःस्वयंज्ञेयःप्रद्युम्नश्चपितास्मृतः॥ संकर्षणस्तज्जनको
वासुदेवस्ततःपिता॥ स्वयंकर्त्ता॥ यत्तुतत्रैवप्रथमोवरुणोज्ञेयःप्राजा
पत्यस्तथापरः॥ तृतीयोग्निःस्मृतःपिंडेएषपिंडविधिःस्मृतः॥ यच्चआदित्य
पुराणे॥ मासाश्चपितरोज्ञेयाऋतवश्चपितामहाः॥ संवत्सरःप्रजानांचवसुम
प्रपितामह॥ यच्चनंदिपुराणे॥ अग्निष्वात्ताब्राह्मणानांपितरःपरि
कीर्तिताः॥ राज्ञांबर्हिषदोनाम॥ विशांकाव्याःप्रकीर्तिताः॥ सुकालिनस्तुशूद्राणांव्यामास्ते
च्छांत्यजातिषु॥ इति॥ अत्रावाहनादिषुपित्रादयःसमुच्चयेनविकल्पेनवा
यथाचारंतत्रदेवतारूपेणवाच्याइतिहेमाद्र्यादयः॥ हेमाद्रौब्राह्मे॥ या
वैशाकुरुतेयस्तुकेवलंपितृहेतुकं॥ मातामहस्तुकुरुतेपितृहासप्रजायते धौम्यः
पितरोयत्रपूज्यंतेतत्रमातामहाध्रुवं॥ अविशेषेणकर्तव्यंविशेषान्नरकंव्रजेत्॥ अस्या
पवादमाह॥ कात्यायनः॥ कर्षूसमन्वितंमुक्त्वातथाद्यंश्राद्धषोड
शं॥ प्रत्याब्दिकंचशेषेषुपिंडाःस्युःषडितिस्थितिः॥ दर्शादौसपत्नीकानामेवदेवतात्वं॥ स्वे
नभर्त्रासमंश्राद्धंमाताभुंक्तेसुधासमं॥ पितामहीचस्वेनैवतथैवप्रपितामहीतितत्रैवो
क्तेः॥ चंद्रिकायांचतुर्विंशतिमते॥ सयाहंवर्जयित्वैकंस्त्रीणां
नास्तिपृथक्क्रिया॥ केचिदिच्छंतिनारीणांपृथक्श्राद्धंमहर्षयः॥ अन्वष्टकासुवृद्धौच
गयायांचक्षयेहनि॥ अत्रमातुःपृथक्श्राद्धमन्यत्रपतिनासहेति॥ कात्या
यनोक्तेश्च॥ अस्यनिर्मूलतांवदंतोगौडास्त्वज्ञाएव॥ अत्रभागइत्यध्याहारः
अन्यथासपत्नीकायेमात्रेइतिप्रयोगापत्तेः॥ अत्रमातृशब्दोजनन्यामेवमुख्यः॥ तेनसप
त्नमातृभ्योनदद्यात्॥ एवंपितामह्यादिशब्दैःपितृजनन्यादयएवोच्यंतइतितत्सपत्नीभ्यो
नदेयमितिहेमाद्रिः॥ कारुण्येतुमहालयादौदेयमितिसएव॥ अथवि
श्वेदेवाः॥ हेमाद्रौशंखलिखितौ॥ इष्टिश्राद्धेक्रतुर्दक्षौसत्योनांदीमुखेवसू
॥ नैमित्तिकेकामकालौकाम्येचधुरिलोचनौ॥ पुरूरवआर्द्रवश्चपार्वणेसमुदाहृतौ
॥ तत्रैव॥ उत्पत्तिनामचैतेषांनविदुर्येद्विजातयः॥ अयमुच्चारणीयस्तैः श्लोकः
श्रद्धासमन्वितैः॥ आगच्छंतुमहाभागाविश्वेदेवामहाबलाः॥ येयत्रविहिताःश्राद्धेसाव

यीवकुंडाश्यकूटकारी॥बालांश्चपोध्यापयतेस्वपुत्राद्वाप्रविधस्त्वथकुंडगोलौ॥अग्रे
दिधिषूः पतिस्तद्वत्सोमक्रयी तैलिकवैकदासी॥पुद्गाचार्थपक्षिणांपोषकश्चस्तो
तोभेत्तारश्चसंरोपकश्चमेषाणांवामहिषाणांचपुष्पासौयस्त्रीपुत्रहितैर्यश्चजारैः।जी
वत्पश्चेयश्चदत्तानुयोगाद्द्रव्यप्राप्त्यैवेदसुद्धाटयंतः।ग्रामप्याजियश्चकेशविक्रयिस्तेनशिल्पि
पितृवादकारान्॥अर्थकामरतश्चद्र्याजकश्मश्रुहीनजटिमुंडनिर्घृणान्॥यस्यचैवगृ
हिणीरजस्वलास्वार्थपाकरतशापदायकान्॥जीवकुस्पतिविलोहितेक्षणान्कुजवा
मनमृषाभिशापिनः॥पुत्रहीनमथकूटसाक्षिणांप्रातिहारिकमयाज्ययाजकं॥स्वान्मदान
परिवेतृयाजकस्तेनहिंसकमुखान्विवर्जयेत्॥ अत्रमूलंहेमाद्रौद्रष्टव्यं।
दीदयेचज्ञेयं॥ भारतेदानधर्मेषुश्राद्धवर्ज्याविप्राधिकारे॥कितवोभ्रूणहायक्ष्मी
पशुपालोनिराकृतिः॥ग्रामप्रेष्योवार्धुषिकोगायकःसर्वविक्रयी॥सामुद्रिकोराज
भृत्यस्तैलिकःकूटकारकः॥पित्राविवदमानश्चयस्यचोपपतिर्गृहे॥अभिशस्तस्तथास्ते
नःशिल्पंयश्चोपजीवति॥पर्वकारश्चसूचीचमित्रध्रुक्पारदारिकः॥अव्रतानामुपाध्या
यःकांडस्पृष्टस्तथैवच॥श्वभिश्चयःपरिक्रामेद्यःशुनादष्टएवच॥परिवित्तिस्तथास्तेनो
दुश्चर्मागुरुतल्पगः॥कुशीलवोदेवलकोनक्षत्रैर्यश्चजीवति॥ईदृशाब्राह्मणाज्ञेयाअ
पांक्तेयाःयुधिष्ठिरतथा॥ऋणकर्ताचयोराजन्यश्चवार्धुषिकोनरः कांडस्पृष्टःसशाखा
नन्त्यापरशाखयोपनीतः॥तदध्यायीच।क्षत्रियवैश्यवृत्तौनारदस्तु॥तस्यामेवतुयो
वृत्तौब्राह्मणोवसतेरसात्॥कांडस्पृष्टंश्रुतोमार्गात्सोऽपांक्तेयःप्रकीर्तितइत्याहहारी
तः॥शूद्रपुत्राःस्वयंदत्तायेचैतेक्रीतकाःसुताः॥तेसर्वेमनुनाप्रोक्ताःकांडस्पृष्टानसंशयः
॥ अन्येपिहेमाद्रौमात्स्ये॥ त्रिशंकून्बर्बरानंध्रान्चीनद्रविडकोकणा
न्॥कर्णाटकांस्तथाभीरान्कलिंगांश्चविवर्जयेत्॥ तत्रैवसौरपुराणे॥
अंगवंगकलिंगांश्चसौराष्ट्रान्गुर्जरांस्तथा॥आभीरान्कोंकणांश्चैवद्राविडान्दाक्षि
णापथान्॥आवंत्यान्मागधांश्चैवब्राह्मणांस्तुविवर्जयेत्॥ चंद्रिकायांयमः॥
काणाःकुब्जाश्चषंढाश्चक्षतघ्नागुरुतल्पगाःमानकूटास्तुलाकूटाशिल्पिनोग्रामयाज
काः॥राजभृत्यांधबधिरमूकखल्वाटपंगवः॥वणिजोमधुहर्त्तारोगरदावनदाहकाः
समयानांचभेत्तारःप्रदानेयेनिवारकाः॥प्रव्रज्योपनिवृत्ताश्चवृथाप्रव्रजिताश्चये॥य
श्चप्रव्रजिताज्जातःप्रव्रज्यावसितश्चयःअवकीर्णीचवीरघ्नोगुरुघ्नोपितृदूषकः॥श्रा
द्धकाशिकायांकात्यायनः॥ हिनस्त्यःक्लीबदुश्चर्माश्रुतौनिकपिलस्तथा
छिन्नोष्ठश्छिन्नलिंगश्चनैवकेतनमर्हति॥हिनस्त्यःपित्रोर्वंशेत्रिपुरुषंविच्छिन्नवेदा
ग्निः॥ हेमाद्रौमरीचिः॥ अविद्धकर्णःक्षतश्चलंबकर्णस्तथै
वच॥वर्ज्जनीयाप्रयत्नेनब्राह्मणाःश्राद्धकर्मणिब्राह्मे॥मूकश्चप्लुतिनाशश्चछि
न्नांगश्चाधिकांगुलिः॥गलरोगीगंडमालीस्फुटितांगश्चसज्वरः॥षंडतूबरमंदाश्च

श्राद्धेषु विनियोक्तव्या ब्राह्मणा ब्रह्मवित्तमाः॥ ये योनिगोत्रमंत्रांतेवासिसंबंधवर्जिताः॥ मनु:
नाममंत्रं भोजयेच्छ्राद्धे धनैः कार्योस्य संग्रहः॥ नारिं न मित्रं यं विद्यात्तं तु श्राद्धे निमंत्रयेत्॥ हयो
र्मित्रेः श्राद्धभोजनं निषिद्धं॥ पितृपुत्रौ भ्रातरौ नैर अग्निं गुर्विणीपतिं॥ सगोत्रप्रवरं चैव श्राद्धे
षु परिवर्जयेत्॥ इति श्राद्धदीपकलिकायां जातूकर्ण्योक्तेः॥ अथ
मध्यमाः हेमाद्रौ कौर्मगार्ग्यौ॥ नैकगोत्रे हविर्दद्यात् यथा कमातयाहविः।
अभावे ह्यन्यगोत्राणामेकगोत्रांस्तु भोजयेत्॥ अत्र केचित्स्वशाखीयान्मुख्यानाहुः पठंति च॥
निमंत्रयीत पूर्वेद्युः स्वशाखीयान्द्विजोत्तमान्॥ स्वशाखीयद्विजाभावे द्विजानन्यान्निमंत्रये
दिति॥ इदं तु निर्मूलत्वाद्धेमाद्रिणा दूषितत्वाच्चोपेक्ष्यं मनुरपि॥ यत्नेन भोजयेच्छ्राद्धे ब्राह्म
णं वेदपारगं॥ शाखांतगमथाध्वर्युं छंदोगं वा समाप्तिगम्॥ एषामन्यतमो यस्य भुंजीत श्रा
द्धमर्चितः॥ पितॄणां तस्य तृप्तिः स्याच्छाश्वती साप्तपौरुषी॥ अत्र मात्स्यकश्लोकः॥ मातामह
हो मातुलभागिनेयदौहित्रजामातृगुरुस्वशिष्याः॥ ऋत्विक्चयाज्यस्वसुरौ स्वबंधुश्यालः।
गुणाढ्या स्वनुकल्पभूताः॥ बांधवो मातृष्वसृपितृष्वसृमातुलपुत्रा इति वोपदेवः॥ अत्र मू
लं हेमाद्रौ ज्ञेयं॥ सगुणास्त्वेते पाप तिक्रमे दोष एव॥ सन्निकृष्टानतिक्रम्य परान्गुणवानात्मना
सह्य॥ अतिक्रम्य द्विजानेतान्नरके यातयेत्स्वगं॥ संबंधिनस्तथा सर्वान्दौहित्रं विट्पतिं त
था॥ भागिनेयं विशेषेण तथा बंधुं खगाधिपेति॥ मदनरत्ने भविष्योक्तेः॥
अत एव याज्ञवल्क्ये ब्राह्मणातिक्रमो नास्ति विप्रस्य निमंत्रणे इति गुणपतिक्रमे दश पण दंड
माह आसन्नमात्रपरमिदं॥ मूर्खे तु न दोषः॥ ब्राह्मणातिक्रमो नास्ति मूर्खे चैव विवर्जिते॥ ज्व
लंतमग्निमुत्सृज्य न हि भस्मनि हूयत इति कात्यायनोक्तेः॥ विप्रस्यापि दोषः॥ अविद्वान्प्रति
गृह्णानो भस्मीभवति दारुवदिति मनूक्तेः॥ अपरार्के अत्रिः॥ षट्
स्वसु पुरुषेभ्यो वा गश्राद्धेया स्तुगोत्रिणः षड्भ्यस्तु परतो भोज्याः श्राद्धेषु गोत्रजा अपि॥ ए
तच्च ब्राह्मणालाभे॥ अपिशद्वात्॥ असंभवे हेमाद्रौ गौतमः॥ शिष्यांश्चैके सगोत्रांश्च भोज
येदूर्ध्वं त्रिभ्यो गुणवतः॥ आपस्तंबः॥ ब्राह्मणान्भोजयेद्यो नि गोत्रमं
त्रांतेवास्यसंबंधान्गुणहान्यां तु परेषां समुदितः॥ सोदर्योपि भोजयितव्य एतेनांतेवासिनो
व्याख्याता इति॥ अत्र विशेषमाहात्रिः॥ पिता पितामहो भ्राता पुत्रो वाथ सपिंडकः॥ न पर
स्परमर्घ्यास्तु न श्राद्धे ऋत्विजस्तथा॥ ऋत्विक्पुत्रादयो ह्येते सकुल्या ब्राह्मणाः स्मृताः॥ वै
श्वदेवे नियोक्तव्या यद्येते गुणवत्तराः ॥ सगोत्रान
नियोक्तव्याः क्षियश्चैव विशेषतः॥ अथ वर्ज्याः॥ अत्र मात्स्यकाः
श्लोकाः वर्ज्यान्प्रवक्ष्ये तु यथा रोगिवैरिहीनाधिकांगान्कितवान्हतघ्नान्॥ नक्षत्रपा
स्त्रिणश्च जीवमानान् भिषज्यपदत्यापि च राजभृत्यान्॥ संगीतकायस्थकुसीदवृत्त्या वेदक्रये
णापि कवित्ववृत्त्या॥ देवार्चनेनापि च जीवमानान्स्वाध्यापदारविमुनी घकाणान्॥ दु
र्वालखल्वाटकुनख्यधर्मिनष्टाश्च योनर्भवकुष्मदंतान्॥ आगारदाही गरदः समुद्रया।

यीचकुंडाश्यथकूटकारी॥बालांश्चयोध्यापयतेस्वपुत्रान्दत्वाप्रविघ्नस्त्वथकुंडगोलो॥अन्ये
दिधिषूपतिस्वकान्तासोमक्रयीतैलिकवैकलासी॥पुष्टाचार्यःपक्षिणांपोषकश्चस्तो
तोभेत्तावृक्षसंरोपकश्चमेषाणांवामहिषाणांचपुष्टास्त्रीयस्त्रीपुत्रहितैर्यश्चजारैःजी
वत्यध्येतुश्चदत्तानुयोगाद्व्यसापेवेदमुत्पाटयंतःयामयाजियशुकेशविक्रायिस्तेनशिल्प
पिवादकारान्॥अर्थकामरतश्चद्रयाजकश्मश्रुहीनजटिमुंडनिर्घृणान्॥यस्यचैवगृ
हिणीरजस्वलास्वार्थपाकरतशापदायकान्॥जीवकुस्त्रतिविलोहितेक्षणान्कुनखा
मनशृषाभिशापिनः॥पुत्रहीनमथकूटसाक्षिणांप्रातिहारिकमयाज्ययाजकं॥स्वान्नदान
परिवेत्तृयाजकस्तेनहिंसकमुखान्विवर्जयेत्॥ अत्रमूलंहेमाद्रौदृष्टव्यंचं
द्रोदयेचज्ञेयं॥ भारतेदानधर्मेषुश्राद्धवर्ज्याविप्राधिकारे॥कितवोभ्रूणहाय
क्ष्मीपशुपालोनिराकृतिः॥ग्रामप्रेष्योवार्धुषिकोगायकःसर्वविक्रयी॥सामुद्रिकोराज
भृत्यस्तैलिकःकूटकारकः॥पित्राविवदमानश्चयस्यचोपपतिर्गृहे॥अभिशस्तस्तथास्ते
नःशिल्पंयश्चोपजीवति॥पर्वकारश्चसूचीचमित्रध्रुक्पारदारिकः॥अव्रतानामुपाध्या
यःकांडपृष्ठस्तथैवच॥श्वभिश्चयःपरिक्रामेद्यःशुनादष्टएवच॥परिवित्तिस्तथास्तेनो
दुश्चर्मागुरुतल्पगः॥कुशीलवोदेवलकोनक्षत्रैर्यश्चजीवति॥ईदृशाब्राह्मणाज्ञेयाअ
पांक्तेयाःयुधिष्ठिरतथा॥रक्षाकर्त्ताचयोराज्ञःपश्चवार्धुषिकोनरःकांडपृष्ठःस्वशाखां
त्यक्त्वापरशाखयोपनीतः॥तदध्यायीच॥क्षत्रियवैश्यवृत्तौनारदस्तु॥तस्यामेवतुयो
वृत्तौब्राह्मणोवसतेरसात्॥कांडपृष्ठंश्रुतोमार्गात्सोऽपांक्तेयःप्रकीर्तितइत्याहहारी
तः॥शूद्रपुत्राःस्वयंदत्तायेचैतेक्रीतकाःसुताः॥तेसर्वेमनुनाप्रोक्ताःकांडपृष्ठानसंशयः
॥ अन्येपिहेमाद्रौमात्स्ये॥ त्रिशंकून्बर्बरानंध्रान्चीनद्रविडकोंकणा
न्॥कर्णाटकांस्तथाभीरान्कलिंगांश्चविवर्जयेत्॥ तत्रैवसौरपुराणे॥
अंगवंगकलिंगांश्चसौराष्ट्रान्गुर्जरांस्तथा॥आभीरान्कोंकणांश्चैवद्रविडान्दाक्षि
णापथान्॥आवंत्यान्मागधांश्चैवब्राह्मणांस्तुविवर्जयेत्॥ चंद्रिकायांयमः
काणाःकुब्जाश्चषंढाश्चस्तनघ्नागुरुतल्पगाःमानकूटातुलाकूटाशिल्पिनोग्रामयाज
काः॥राजभृत्यांधबधिरमूकखल्वाटपंगवः॥वणिजोमधुहर्त्तारोगरदावनदाहकाः
समयानांचभेत्तारःप्रदानेयेनिवारकाः॥सहज्योपनिरस्ताश्चदृष्याप्रव्रजिताश्चये॥य
श्चप्रव्रजिताज्जातःप्रव्रज्यावसितश्चयःअवकीर्णीचवीरघ्नोगुरुघ्नोपितृदूषकः॥श्रा
द्धकाशिकायांकात्यायनः॥ द्विनग्नःक्लीबदुश्चर्मापुत्रोनिकपिलस्तथा
छिन्नोष्ठछिन्नलिंगश्चनैवकेतनमर्हति॥द्विनग्नःपित्रोर्वंशेत्रिपुरुषंविच्छिन्नवेदा
ग्निः॥ हेमाद्रौमरीचिः॥ अविद्धकर्णःकुष्ठश्चलंबकर्णस्तथै
वच॥वर्जनीयाःप्रयत्नेनब्राह्मणाःश्राद्धकर्मणिब्राह्मे॥मूकश्चप्रतिनाशश्चछि
न्नांगश्चाधिकांगुलिः॥गलरोगीगंडमालीस्फुटितांगश्चसज्वरः॥खंडनूपुरमंदाश्च

श्राद्धेष्वेतान्विवर्जयेत्॥ लंबकर्णमाह॥ तत्रैव गोभिलः॥ हनुमूलाद्दष
कर्णौ लंबौ तु परिकीर्तितौ॥ द्व्यंगुलातीतकर्णस्य भुंजते पितरो न तु॥ षंडश्चात्र चंद्रिकोक्तः
सप्तविधो ग्राह्यः॥ यथा॥ षंडको वातजः षंडः षंढः क्लीबो नपुंसकः॥ कीलकश्चेति सप्तैवं
क्लीबभेदाः प्रकीर्तिताः॥ पराशरमाधवीये तु चतुर्दशविधा उक्ताः
तेषां स्वरूपाणि तत्रैव ज्ञेयानि॥ चंद्रिकायां शातातपः॥ अग्निष्टोमादि
भिर्यज्ञैर्ये यजंत्यल्पदक्षिणैः॥ तेषामन्नं न भोक्तव्यमपांक्तयाश्च प्रकीर्तिताः॥ एतच्च श
क्तौ ज्ञेयं॥ अपरार्के भारते॥ अव्रती कितवः स्तेनः प्राणिविक्रयको
पि वा॥ पश्चाच्चेत्पीतवान्सोमं सोपि केतनमर्हति॥ श्राद्धदीपकलिकायां यमः॥ अप
त्नीकश्च वर्ज्यः स्यात्सपत्नीकोप्यनग्निकः॥ तत्रैवाश्वलायनः॥
प्रतिमाविक्रयं यो वै करोति पतितस्तु सः॥ जीवनार्थं परस्त्री निधृत्वा तीर्थं प्रयाति यः॥
मातापित्रोर्विना सोपि पतितः परिकीर्तितः॥ तत्रैव जातूकर्ण्यः॥
यत्र मातुलजोद्वाही यत्र वा वृषलीपतिः॥ श्राद्धं न गच्छेत्तद्विप्राः कृतं यच्च निरामिषं॥
पितृपुत्रौ भ्रातरौ द्वौ निरग्निर्गुर्विणीपतिः॥ सगोत्रप्रवरं चैव श्राद्धेषु परिवर्जयेत्॥
बृहन्नारदीये॥ शंखचक्रं मृदा यस्तु कुर्यात्तप्तायसेन वा॥ स शूद्रवद्बहिष्का
र्यः सर्वस्माद्द्विजकर्मणः॥ शंखचक्राद्यंकनं च गीतनृत्यादिकं तथा॥ एकजातेरयं ध
र्मो न जातु स्याद्द्विजन्मनः॥ तेन ये तप्तमुद्रादिविधयस्ते शूद्रविषया इति पृथ्वीचंद्रोद
यः॥ शिवकेशवयोरंकान्शूलचक्रादिकान्द्विजः॥ न धारयेन्मतिमान्
वैदिके वर्त्मनि स्थित इत्याश्वलायनोक्तेश्च॥ नृत्यं चोदरार्थं निषिद्धमिति श्रीधरस्वा
मी॥ अन्येपि निषिद्धा निबंधेषु ज्ञेयाः॥ इति दिक्॥ अत्र विप्राणां
ग्राह्यत्वोक्त्यैव तद्वर्ज्यानां निषेधे सिद्धे पुनर्वर्ज्यपरिगणनं निषिद्धवर्ज्यनिर्गुणप्राप्त्य
र्थमिति विज्ञानेश्वरः॥ कुष्ठिकाणादेरपवादो हेमाद्रौ वसिष्ठः॥ अपि चेन्मंत्रविद्युक्तः
शारीरैः पंक्तिदूषणैः॥ अदूष्यं तं यमः प्राह पंक्तिपावन एव सः॥ क्वचिद्विप्राणां जाति
मात्रेण ग्राह्यत्वमुक्तं॥ चंद्रिकायामाग्नेये॥ यदि पुत्रो गयां गच्छे
त्कदाचित्कालपर्ययात्॥ तानेव भोजयेद्विप्रान्ब्रह्मणा ये प्रकल्पिताः॥ ब्रह्मणाकृत
संस्थाना विप्रा ब्रह्मसमाः स्मृताः॥ अमानुषा गयाविप्रा ब्रह्मणा
ये प्रकल्पिताः तेषु तुष्टेषु संतुष्टाः पितृभिः सह देवताः॥ तत्रैव॥ न विचार्यं कुलं शीलं वि
द्या च तप एव च॥ पूजितैस्तैस्तु संतुष्टैर्देवाः सपितृगुह्यकाः गयायां निर्गुणा अपि तद
वभोज्याः॥ इति हेमाद्रिः॥ अक्षयवटश्राद्धे एवं तन्नियमो नान्यत्रेति
त्रिस्थलीसेतौ पितामहचरणाः॥ पृथ्वीचंद्रोदयेपि पाद्मे॥ तीर्थे
तु ब्राह्मणं नैव परीक्षेत कदाचन॥ अन्नार्थिनमनुप्राप्तं भोज्यं तं मनुरब्रवीत्॥ स्कांदे
पि॥ ब्राह्मणान्न परीक्षेत तीर्थक्षेत्रनिवासिनः॥ मनुः॥ न ब्राह्मणं परीक्षेत दैवे क

र्म्मणिधर्मवित्॥पित्र्येकर्म्मणितुप्राप्तेपरीक्षेतप्रयत्नतः॥असंभवपरमेतदितिमेधातिथिः
हेमाद्रौव्यासः॥गायत्रीसारमात्रोपिवरंविप्रःसुमंत्रितः॥नायंत्रितश्चतुर्वेदीसर्वाशीसर्वविक्रयी॥
काणाःकूटाश्चकुनखाश्चदरिद्राव्याधितास्तथा॥सर्वश्राद्धेनियोक्तव्यामिश्रितावेदपारगैः अ
थविप्रनिमंत्रणम्॥चंद्रिकायांवाराहे॥वस्त्रशौचादिकंकृत्वाश्वःकर्त्तास्मीतिजानता॥स्नानो
पलेपनंकृत्वाततोविप्रान्निमंत्रयेत्॥दंतकाष्ठंचविसृजेद्ब्रह्मचारीशुचिर्भवेत्॥ तत्रैव
प्रचेताः॥ दक्षिणंचरणंविप्रःसव्यंवैक्षत्रियस्तथा॥पादौवादायवैश्योद्वौशूद्रःप्र
णतिपूर्वकं॥ बृहस्पतिः॥ उपवीतीततोभूत्वादेवार्थेतुद्विजोत्तमान्॥अ
पसव्येनपित्र्येथस्वयंशिष्योथवासुतः॥ प्रचेताः॥ सवर्णंप्रेषयेदाप्तंद्विजानां
तुनिमंत्रणे॥ पृथ्वीचंद्रोदयेस्कांदे॥ राजकार्येनियुक्तस्यबंधनिग्रहव
र्त्तिनः॥व्यसनेषुचसर्वेषुश्राद्धंविप्रेणकारयेत्॥ चंद्रिकायांयमः॥ अभो
ज्यंब्राह्मणस्यान्नंवृषलेननिमंत्रितं॥तथैववृषलस्यान्नंब्राह्मणेननिमंत्रितं॥ त
त्रैवपैठीनसिः॥सप्तपंचद्वौवाश्रोत्रियान्निमंत्रयेत्॥ आश्वलायनसूत्रे॥
एकैकमेकैकस्यद्वौद्वौवात्रींस्त्रीन्वावृद्धौफलभूयस्त्वं॥द्वावितिष्टहिश्राद्धेगौतमः॥नवावा
रान्भोजयेदयुजोवायथोत्साहं याज्ञवल्क्यः॥ द्वौदैवेप्राक्त्रयः
पित्र्यउदगेकैकमेववा॥मातामहानामप्येवंतंत्रंवावैश्वदेविकम्॥ दीपक
लिकायांपराशरः॥ सपत्नावर्थपात्राणामेकैकस्यत्रयस्त्रयः॥पित्रादौब्रह्म
णाःप्रोक्ताश्चत्वारोवैश्वदेविके॥ वृद्धयाज्ञवल्क्यः॥ दशैकंपंच
वाविप्रान्पार्वणेविनियोजयेत्॥अत्रवैश्वदेवेद्वौचतुरोवोपवेश्यपित्रादीनामेकैकस्य९
स्थानेएकंत्रीन्पंचसप्तनववोपवेशयेदितिमिताक्षरार्थः॥ मनुः द्वौदैवेपितृ
कृत्येत्रीनेकैकमुभयत्रवाभोजयेत्सुसमृद्धोपिनप्रसज्जेतविस्तरे॥सत्क्रियांदेशकालौचशौ
चंब्राह्मणसंपदं॥पंचैतान्विस्तरोहंतितस्मान्नेहेतविस्तरं॥ पृथ्वीचंद्रोदयेशा
तातपः॥ द्वौदैवेथर्वणौविप्रौप्राङ्मुखावुपवेशयेत्॥पित्र्येतूदङ्मुखांस्त्रींश्चबह्वृ
चाध्वर्युसामगान्॥अप्यशक्तौ हेमाद्रौदेवलः॥ एकेनापिहिवि
प्रेणषट्पिंडंश्राद्धमाचरेत्॥षडर्घ्यान्दापयेत्तत्रषड्भ्योदद्यात्तथाहविः॥ गोभिलः
यद्येकंभोजयेच्छ्राद्धेदैवंतत्रनभोजयेत्॥ऋचोयजूंषिसामानित्रितयंतत्रविद्यते॥अत्र
वैश्वदेवेतिविशेषमाह॥ तत्रैववसिष्ठः यद्येकंभोजयेच्छ्राद्धेदै
वंतत्रकथंभवेत्॥अन्नंपात्रेसमुद्धृत्यसर्वस्यप्रकृतस्यच॥देवतायतनेकृत्वाततःश्राद्धं
समाचरेत्॥प्रास्येदग्नौतदन्नंतुदद्याद्वाब्रह्मचारिणे॥एतच्चसपिंडीकरणवर्जंज्ञेयं॥तत्त्वे
वैकंसर्वेषांकाममनाद्येत्याश्वलायनोक्तेः अस्यार्थउक्तोनारायणवृत्तौ॥आद्यंसपिंडी
करणंतद्वर्ज्येषुसर्वश्राद्धेषुकामंत्रयाणामेकंभोजयेत्॥सपिंडीकरणेतुनियतंत्रिभिर्भवि
तव्यमिति॥अनाद्येपार्वणवर्ज्जितेवा॥अभोजनेश्चामहेमश्राद्धादौवा॥अन्नाभावेवेतिव्या

नियतमन्येमान॥ हेमाद्रौ विष्णुधर्मे॥ गंधैः पुष्पै
श्च धूपैश्च वस्त्रैश्चाप्यथ भूषणैः॥ अर्चयेद्ब्राह्मणान् शक्त्या श्रद्धानः
समाहितः॥ पृथ्वीचंद्रोदये मार्कंडेयः॥ चंदनागरुक
र्पूरकुंकुमानि प्रदापयेत्॥ विष्णुः॥ चंदनकुंकुमकर्पूरा
गरुपद्मकान्यनुलेपनार्थेति॥ व्यासः अपवित्रकरो गंधो
गंधहारेति संजयेत्॥ कालिकायां स्मृतिः॥ गंधद्वारे निवेगंध
मापनेनैव पुष्पकं॥ धूरसीत्यमुना धूपं उद्दीप्यस्वेति दीपकं॥ पुर्ववस्त्रा
णि मंत्रेण वस्त्रं दद्यात्प्रयत्नतः॥ आसने स्वासनं ब्रूयात् अर्घ्ये स्व
र्घ्यं द्विजोत्तमः॥ सुगंधश्च सुपुष्पाणि सुमाल्यानि सुधूपकं॥ सु
ज्योतिश्चैव दीपेतु स्वाच्छादनमिति क्रमः॥ विप्राणां गंधेन वर्तुलं त्रि
पुंड्वा न कार्य॥ हेमाद्रौ देवलः॥ ललाटे पुंड्रं
वर्तुलमित्यपरार्के॥ मदनरत्ने च॥ पुंड्रं त्रिपुंड्रं वर्तुलम
र्द्धचंद्रं च॥ ऊर्ध्वं च तिलकं कुर्यान्न कुर्याद्वै त्रिपुंड्रकं॥ ऊ
र्ध्वं च तिलकं कुर्याद्वै पित्र्ये च कर्मणि॥ निराशाः पितरो यांति
दृष्ट्वा चैव त्रिपुंड्रकमिति॥ वृद्धपराशरोक्तेः॥ तिर्य
ग्लेपो भवत्येवं वर्जयेत्तिलकं भाले श्राद्धकाले च सर्वदा॥ तिर्यगू
र्ध्वं त्रिपुंड्रं वा धारयेत्तु प्रयत्नतः॥ इति व्यासोक्तेरिति पृथ्वीचंद्रः
पत्तु वृहन्नारदीये ऊर्ध्वपुंड्रं च तुलसां श्राद्धे नेच्छंति केचनेति॥ तन्म
त्रांपरं॥ हेमाद्रौ ब्राह्मे॥ इतिकं मृगनाभिं च रोचनां
रक्तचंदनं॥ कालेयकं तूग्रगंधं तुरुष्कं चापि वर्जयेत् न कल्पयाद्विक
ल्प॥ इति हेमाद्रिः॥ वृद्धशातातपः॥ प
वित्रं तु करे कृत्वा यः समालभते द्विजान्॥ राक्षसानां भवेच्छ्राद्धं नि
राशैः पितृभिर्गतैः॥ पुष्पं तु ब्राह्मे जातिचंपकलोध्रश्च म
ल्लिकाबाणबर्बरी॥ चूताशोकाटरूपं च तुलसी शतपत्रकं॥
कुब्जकं तगरं चैव भृंगमारण्यकेतकी॥ यूथिकामतिमुक्तं च श्रा
द्धयोग्यानि भो द्विजाः॥ कमलं कुमुदं पद्मं पुंडरीकं च यत्नतः॥
इंदीवरं कोकनदं कल्हारं च निवेदयेत्॥ हेमाद्रौ वायुभविष्य
योः॥ सुकुमारैः किसलयैर्यवदूर्वांकुरैरपि॥ संहृ
जनीयाः पितरः श्रेयः कामेन सर्वदा॥ स्कांदे॥ जात्यश्च स
र्वदातव्या मल्लिकाश्वेतयूथिका॥ जलोद्भवानि सर्वाणि कुसु
मानि च चंपकं मन्नेवष्टहमनुः॥ न निपुक्तः शिखावर्जमात्मं शिरसिधारयेत्॥ वर्जा

निरुथ्वीचंद्रोदयेभविष्ये॥केतकींतुलसीपत्रंबिल्वपत्रंचवर्जयेत्॥द्रोणांचकरवी
रंचधत्तूरंकिंशुकंतथा॥ माधवीयेस्मृत्यर्थसारेचतुलसीनिषि
द्धा॥ तुलसीनिषेधोनिर्मूलइतिहेमाद्रिः॥ समूल
त्वेपिपिंडपरः॥ तुलसीगंधमाघ्रायपितरस्तुष्टमानसाः॥ प्र
यांतिगरुडारूढास्तत्पदंचक्रपाणिनइतिप्रयोगपारिजातेयाज्ञोक्तेरितिबोपदेवः॥
वृहत्पराशरः॥ नजातिकुसुमैर्विद्वान्बिल्वपत्रैस्तुनार्चयेत्॥
जयादिकुसुमंभिंडीरूपिकासकुरंटिका॥ पुष्पाणिवर्ज्जनीया
निश्राद्धकर्मणिनित्यशः॥ हेमाद्रौशंखः॥ उग्रगंधी
न्यगंधीनिचैत्यवृक्षोद्भवानिच॥ पुष्पाणिवर्जनीयानिरक्तवर्णा
नियानिच॥ जलोद्भवानिदेयानिरक्तान्यपिविशेषतः॥ चं
गिरः॥ नजातिकुसुमानिदद्यान्नकदलीपत्रमिति॥ जा
त्यांविकल्पइतिहेमाद्रिः॥ निषेधःपिंडविषयः॥ कुंदं
शंभोचनोदद्यान्नोन्मत्तंगरुडध्वजे॥ पिंडेजातींचनोदद्याद्देवीमर्के
णनार्चयेत्॥ इतियाज्ञवल्क्योक्तेरितिबोपदेवः॥ स्मृ
तिसारे॥ अगस्त्यंभृंगराजंचतुलसीशतपत्रकं॥ चंपकं
तिलपुष्पंचषडेतेपितृवल्लभाः॥ केतकीकरवीरंचवकुलंकुरंटकंत
था॥ पाटलांचैवजातींचश्राद्धेयत्नेनवर्जयेत्॥
केचित्पिंडेपितुलसीमाहुः॥ पितृपिंडार्चनंश्राद्धेयैःकृतंतुलसीदलैः
प्रीणिताःपितरस्तेस्तुयावच्चंद्रार्कमेदिनीतिमार्कंडेयोक्तेः॥ धूपस्तत्रै
वविष्णुधर्मे॥ धूपस्तुगुग्गुलोदेयस्तथाचंदनसारजः॥
अगरुश्चसकर्पूरस्तुरुष्कस्त्वक्तथैवच॥ विष्णुः॥ घृतमधुयु
क्तंगुग्गुलुश्रीखंडदेवदारुसरलादिदद्यादिति॥ तत्रैवदेवलः॥ येहि
प्राणिगजाधूपाहस्तवानाहतास्त्वये॥ नतेश्राद्धेनियोक्तव्यायेचकेचोग्र
गंधयः॥ घृतंचकेवलंदद्याद्दुष्टंवातृणगुग्गुलं॥ दीप
माहविष्णुः॥ घृतेनदीपोदातव्यस्तिलतैलेनवापुनः॥
वसामेदोद्भवंदीपंप्रयत्नेनविवर्जयेत्॥ वस्त्रंब्राह्मे॥
कौशेयंक्षौमकार्पासंदुकूलमहतंतथा॥ श्राद्धेष्वेतानियोदद्यात्का
मानाप्नोतिचोत्तमान्॥ हेमाद्रौब्रह्मवैवर्ते॥ यज्ञोप
वीतंदातव्यंवस्त्राभावेविजानता॥ पितृभ्योवस्त्रदानस्यफलंतेनाप्नु
तेखिलं॥ तत्रैवपाद्मे॥ निष्क्रयोवायथाशक्तिवस्त्राभावेप्र
दीयते॥अन्यान्यपिचदेयानितत्रैवकालिकापुराणे॥धात्वादिनिर्मितान्यादीपि

कोश्राद्धकर्मणि॥ पितॄनुद्दिश्ययोदद्यात्सभवेद्भ्राजनंश्रियः॥ यो
धूपदानपात्रंतुयात्रमारार्तिकस्यच॥ दद्यात्पितृभ्यःप्रयतस्तस्यस्वर्गेक्षयागतिः॥
विष्णुधर्मे॥ यःकंचुकंतथोष्णीषंपितृभ्यःप्रतिपादयेत्॥
ज्वरोभ्दवानिदुःखानिसकदाचिन्नपश्यति॥स्त्रीणांश्राद्धेतुसिंदूरंदद्युश्चांजनकानिच॥
निमंत्रिताभ्यःस्त्रीभ्योयेतेस्युःसौभाग्यसंयुताः हेमाद्रावादित्यपुराणे॥
नक्षौमवर्णांदातव्यंनापिकार्पाससंभवं॥ पितृभ्योनापिमलिनंक्वापियुक्तंकदाचन॥
नछिद्रितंनापदशंनधौतंकारुणापिच॥ कार्पासनिषेधोन्यसंभवे॥
तत्रैव॥ पितॄनुद्दिश्यवासोभिर्दद्याद्यज्ञोपवीतकं॥ यज्ञोपवीतदानेनविनाश्राद्धंतुनिष्फलं॥
एतद्यतिस्त्रीशूद्रश्राद्धेष्वपिदेयमितिहेमाद्रिः तत्रैवनृसिंहपुराणे॥ कमंडलुं
ताम्रमयंश्राद्धेषुप्रददातियः॥ काष्ठेननिर्मितंवापिनारिकेलमथापिवा॥
दद्यात्कमंडलुंश्राद्धेसश्रीमानभिजायते॥ योमृत्तिकाविरचितान्श्राद्धेषुवदद्यात्तुभान्॥
अर्घ्यात्करकान्वापिसोक्षय्यंविंदतेसुखं॥ तत्रैव॥
उपानच्छत्रवस्त्राणिभुक्तिपात्रंकमंडलुं॥ शयनाशनयानादिदर्पणव्यजनानिच॥
अन्नंसुसंस्कृतंगंधांताम्बूलंदीपचामरं॥ पितृभ्योयःप्रयच्छेत्तुविष्णुलोकंसगच्छति॥
सौरपुराणे॥ चामरंतालवृंतंचश्वेतछत्रंचदर्पणं॥ दत्वापितॄणामेतानिभूमिपालोभवेदिह॥
तत्रैवनंदिपुराणे॥ अलंकाराःप्रदातव्यायथाशक्तिहिरण्मयाः॥
केयूरहारकटकमुद्रिकाकुंडलादयः॥ स्त्रीश्राद्धेषुप्रदेयाःस्युरलंकारास्तुयोषितां॥
मंजीरमेखलादामकर्णिकाकंकणादयः॥ तथा॥
आदर्शव्यजनंछत्रशयनाशनपादुकाः॥ मनोज्ञाःपटवासाश्चसुगंधाश्चूर्णमुष्टयः॥
अंगाभ्यानिकाःशानियोगपट्टाश्चयष्टयः॥ कटिसूत्राणिरोप्याणिमेखलाश्चैवकंवलाः
कर्पूरादेश्चभांडानितांबूलापतनंयथा॥
भोजनाधारयंत्राणियतद्ग्राहास्तथैवच॥ तथांजनशलाकाश्चकेशानांचप्रसाधनम्॥
एतान्दद्यात्तुयःसम्यक्सोश्वमेधफलंलभेत्॥ स्कांदे
सौवर्णंराजतंवापिकांस्येनाप्यथनिर्मितं॥ दत्वाभोजनपात्रंतुसम्राटभवतिभूतले॥
वामनपुराणे॥ वंदीकृतास्तुयेकेचित्स्वयंवापद्विषापरैः॥
येनकेनाप्युपायेनयस्तान्मोचयतेनरः पितरस्तस्यगच्छंतिशाश्वतंपदमव्ययं॥
पराशरः॥ वाचयेत्परिश्रांत्वंवासोदत्वाविधानतः॥
नारदीये॥ देवैश्वसमनुज्ञातोपजेत्पितृगणांस्तथा॥
तत्रपित्र्येश्वासनाद्यशेषमर्चनकांडंवैश्वदेविकंज्ञेयं॥विशेषस्तूच्यते॥तत्रासनेद्विगुणभु

श्राःकुशाः॥ अत्रावाहनमासनात्पूर्वंवार्घ्यस्थापनोत्तरंवाग्नौकरणोत्तरंवेतिस्मृ
तिषुपक्षाउक्ताः॥ एषांशाखाभेदेनव्यवस्था॥ द्वितीयपक्षस्तु
बहुसंमतः॥ तत्रार्घ्यमाहाश्वलायनः॥ तैजसाश्ममयमृण्मयेषु
त्रिषुपात्रेष्वेकद्रव्येषुवादर्भांतर्हितेष्वपः॥ शन्नोदेवीरभीष्टयइत्य
नुमंत्र्यतिलानावपतितिलोसिसोमदेवत्योगोसवोदेवनिर्मितः॥ प्रत्नवद्भिः
प्रत्तःस्वधयापितॄनिमाँल्लोकान्प्रीणयाहिनःस्वधानमइति॥ अश्म
मयंस्फाटिकादि॥ मृन्मयंहस्तघटितमेव॥ कुलालचक्रनिष्पन्न
मासुरंदैविकंनतत्॥ तदेवहस्तघटितंदैविकंकेवलंतथेतिछंदोगपरिशिष्ट
त्॥ अश्मान्यपिपात्राणिशस्तमुक्तानि॥ मनुः॥ अन्नाभावे
द्विजाभावेयद्येकोब्राह्मणोभवेत्॥ पात्राण्यासादयेत्त्रीणिनतुब्राह्मणसं
ख्यया॥ दत्तकादेःकर्तुर्द्विपितृत्वादावपिवचनात्त्रीण्येवपात्राणीतिहरिह
रः॥ माधवीयेवैजवापः॥ अर्घ्येपितॄणांत्रीण्येवकुर्या
त्पात्राणिधर्मवित्॥ एकस्मिन्वाबहुषुवाब्राह्मणेषुयथाविधि॥
हेमाद्रावप्येवं॥ अत्रानुमंत्रणंसकृत्॥ तिलोसीत्यस्यप्रतिपा
त्रमावृत्तिः॥ पितृशब्दस्यानूहश्चेतित्रिकत्॥ दर्भास्त्रिगुणंपवि
त्रम्॥ तिस्रःतिस्रःशलाकास्तुपितृपात्रेषुपावने॥ एकोद्दि
ष्टेशलाकैकांनिधायोदकमाहरेत्॥ इतिहेमाद्रौचतुर्विंशतिमतात्॥
तत्रैवविष्णुः॥ दक्षिणाग्रेषुदर्भेषुदक्षिणापवर्गंचमसेषुपवित्रांतर्हितेष्वपआसिं
चेच्छन्नोदेवीरितिमंत्रेणजलासेचनंत्वेकंचभिन्नविषयंअस्मिन्पक्षेप्रतिपात्रंमंत्रावृ
त्तिः॥ कारिकायां॥ गंधपुष्पाणिचैतेषुपात्रेषुप्रक्षिपेदथ॥
जाह्ले॥ जलंक्षीरंदधिघृतंतिलतंडुलसर्षपान्॥ कुशाग्रमधुपु
ष्पाणिदत्त्वावामतःस्वयम्॥ जातूकर्ण्यः॥ ततोर्घ्यपात्रसंपत्तिं
वाचयित्वाद्विजोत्तमान्॥ तदग्रेचार्घ्यपात्राणिस्वधार्घ्याइतिविन्यसेत्॥
ततस्तिलहस्तोविप्रसव्यजानौदक्षिणंकरंन्यस्यावाहनंपृच्छेत्॥ अत्रगो
त्रसंबंधनामानिद्वितीयांतत्वंचप्रागुक्तं॥ वैजवापगृह्ये॥ ति
स्थनूपितॄनावाहयिष्यामीत्यामंत्र्य॥ कौर्मेअपसव्यंततःकृत्वापितॄणांद
क्षिणामुखः॥ आवाहनंततःकुर्यादुशंतस्त्वेतिचाबुधः॥ आ
वाहनंतदनुज्ञातोजपेदायंतुनस्ततः॥ अत्रसव्यस्यापिप्रागुक्तोविकल्पः॥ अ
त्राद्यमंत्रांतेऽस्मत्पितरममुकशर्माणममुकगोत्रंवसुरूपमावाहयामीत्याद्युक्त्वामूर्धा
दिपादांतंतिलान्विकीर्ययतुनइतिसर्वांतेसकृज्जपेदितिनिबंधाः॥ अत्रो
पवेशनसंदेशनयोःपाद्यार्घ्याचमनीयान्यपिहेमाद्रिणोक्तानि॥ नात्यर्थंवर्णावेदितंनियता

तिनान्येषाम्॥ तेषां च प्रपितामहादिपित्रं तं प्रातिलोम्येन सर्वः प्रयोगः॥ वाराहे॥ गंधपुष्पा
र्चनं कृत्वा दद्याद्धस्ते तिलोदकं॥ गार्ग्यः॥ शिरस्तः पादतो वापि
सम्यगभ्यर्चयेत्ततः॥ ततः स्वधार्घ्या इति पितृपितामहादिविप्राग्रे प्रत्येकं नि
वेदयेदिति कारिकायां हेमाद्रौ च॥ आश्वलायनः॥ अपसव्येनेत
रपाणिमंगुष्ठांतरेणोपवीतिना दक्षिणेन वा सव्योपगृहीतेन पितरिदं तेऽर्घ्यं पिताम
हेदं तेऽर्घ्यं पितामहेदं तेऽर्घ्यमित्यपः स्वर्णताः प्रतिग्राहयिष्यन् सकृत्सकृत्स्वधाऽर्घ्या इति
ब्रुति स्वनुसृष्टास्त्वनुमंत्रयीत या दिव्या आपः पृथिव्या संब
भूवुर्या अंतरिक्ष्या उत पार्थिवीर्याः॥ हिरण्यवर्णा यज्ञियास्ता न आपः
शं स्योना भवंत्विति॥ अर्घ्यादि प्रागंधादेर्यज्ञोपवीतमेव॥ अ
र्घ्यदानात्प्रागमात्रयोर्दद्यात्॥ यद्यप्यत्र सव्येन दक्षिणेन वार्घ्यं दद्यादित्यु
क्तं॥ तथापि दक्षिणेनेत्यभिमतोर्थः॥ कारिकायां हेमाद्रौ चैवम्
पित्रादेस्त्रिभिः पात्रैर्दद्यात्॥ पितुः स्थाने विप्रत्रयं चेत्तदेकार्घ्यं वि
भज्य दद्यात्॥ त्रयाणां स्वधार्घ्या इति सकृत्निवेदनं॥ एवं पैता
महादावपि॥ अन्यजलदानमर्घ्यमंत्राश्च प्रतिविप्रमावर्तंते॥ तेषु
गंधादौ च प्रतिविप्रं पदार्थानुसमयः कांडानुसमयो वा॥ पित्रादित्रया
णामेकविप्रपक्षे त्रिभिः पात्रैरेकस्यैवार्घ्यं दद्यादिति हेमाद्रिः॥ कारिकापि॥
स्वधार्घ्या इत्यपोऽर्घ्यास्ता उपवीती निवेदयेत्॥ निवेदनात्प्राक् प्राचीनावी
तमेवेत्यर्थः॥ अर्घ्यं सशेषमादाय दक्षिणेन तु पाणिना॥
सव्यहस्तगृहीतेन निनयेत्पितृतीर्थतः॥ दत्वा दत्वा निनीतास्ता या दि
व्या चानुमंत्रयेत्॥ यत्तु॥ या दिव्या इति मंत्रेण हस्ते ह्यर्घ्यं विनिक्षि
पेत्॥ इति॥ यच्च वाराहे॥ तिलांबुना चापसव्यं दद्या
दर्घ्यादिकं द्विज इति॥ यच्च व्यासः गोत्रसंबंधना
मानि पितॄणामनुकीर्तयन्॥ एकैकस्य तु विप्रस्य अर्घ्यपात्रं विनि
क्षिपेत्॥ इति॥ तद्बह्वृचातिरिक्तविषयं॥ तत आचामेत्॥
एवं मातामहेष्वपि॥ आश्वलायनः॥ संस्रवान्समवनीय तता
भिरद्भिः पुत्रकामो मुखमनक्ति संस्रवः॥ शेषः॥ संस्रवो हि परिशिष्टो भवतीति
शतपथश्रुतेः॥ केचित्तु हस्तगलितां वदंति॥ समवनीयान्यस्मि
पात्रे पितृपात्रे आसिंचेदिति हेमाद्रिः॥ प्रथमे पात्रे संस्रवान्समवनीयेति का
तीयसूत्राच्च॥ ब्राह्मे तु॥ प्रतिबिंबानुलोकनमुक्ता
स्कांदे॥ आयुःकामस्य नेत्रासेचनमुक्तं॥ पित्र्ये विप्रैः प्राङ्मु
खस्य कर्तुरभिषेकः कार्य इति केचित्॥ आश्वलायनः॥ नोद्धरेत्

णां सुराणां॥ अत्रार्घ्यदानमासनार्घ्यस्वरणोत्रं वाऽङ्गीकरणीत्रस्वैतिस
तिषु पक्षा उक्ताः॥ एषां शाखाभेदेन व्यवस्था॥ द्वितीयपक्षस्तु
बहुसंमतः॥ तत्रार्घ्यमाहाश्वलायनः॥ तैजसाश्ममयमृण्मयेषु
त्रिषु पात्रेष्वेकद्रव्येषु वा दर्भान्तर्हितेष्वपः॥ शन्नोदेवीरभीष्टय इत्य
नुमंत्र्य तिलानावपति तिलोसि सोमदेवत्यो गोसवो देवनिर्मितः॥ प्रत्नवद्भिः
प्रत्तः स्वधया पितॄनिमाँल्लोकान्प्रीणयाहि नः स्वधा नम इति॥ अश्म
मयं स्फाटिकादि॥ मृन्मयं हस्तघटितमेव॥ कुलालचक्रनिष्पन्न
मासुरं दैविकं ततः॥ तदेव हस्तघटितं दैविकं केवलं तथेति छंदोगपरिशिष्टा
त्॥ अन्यान्यपि पात्राणि स्मृत्युक्तानि॥ मनुः॥ अन्नाभावे
द्विजाभावे यद्येको ब्राह्मणो भवेत्॥ पात्रासादये त्रीणि न तु ब्राह्मणसं
ख्यया॥ दत्तकादेः कर्तुर्द्विपितृत्वादावपि वचनात्त्रीण्येव पात्राणीति हरिह
रः॥ माधवीये बैजवापः॥ अर्घ्ये पितॄणां त्रीण्येव कुर्या
त्पात्राणि धर्मवित्॥ एकस्मिन्वा बहुषु वा ब्राह्मणेषु यथाविधि॥
हेमाद्रावप्येवं॥ अत्रानुमंत्रणं सकृत्॥ तिलोसीत्यस्य प्रतिपा
त्रमावृत्तिः॥ पितृशब्दस्यानूहश्चेति त्रिस्थलीसेतौ॥ दर्भश्च त्रिगुणं पवि
त्रम्॥ तिस्रः तिस्रः शलाकास्तु पितृपात्रेषु पार्वणे॥ एकोद्दि
ष्टे शलाकैकां निधायोदकमाहरेत्॥ इति हेमाद्रौ चतुर्विंशतिमतात्॥
तत्रैव विष्णुः॥ दक्षिणाग्रेषु दर्भेषु दक्षिणापवर्गं चमसेषु पवित्रान्तर्हितेष्वप आसि
ञ्चेच्छन्नोदेवीरिति मंत्रेण जलासेचनं त्वेकं च भिन्नविषयं अस्मिन्पक्षे प्रतिपात्रं मंत्रावृ
त्तिः॥ कारिकायां॥ गंधपुष्पाणि चैतेषु पात्रेषु प्रक्षिपेदथ॥
ब्राह्मे॥ जलं क्षीरं दधि घृतं तिलतंडुलसर्षपान्॥ कुशाग्रमधुपु
ष्पाणि दत्वा वामे ततः स्वयम्॥ जातूकर्ण्यः॥ ततोर्घ्यपात्रसंपत्तिं
वाचयित्वा द्विजोत्तमान्॥ तदग्रे चार्घ्यपात्राणि स्वधार्घ्या इति विन्यसेत्॥
ततस्तिलहस्तो विप्रस्य जानौ दक्षिणं करं न्यस्यावाहनं पृच्छेत्॥ अत्र गो
त्रसंबंधनामानि द्वितीयांतत्वं च प्रागुक्तं॥ बैजवापगृह्ये॥ पि
तॄन्पितॄनावाहयिष्यामीत्यामंत्र्य॥ कौर्मे अपसव्यं ततः कृत्वा पितॄणां द
क्षिणामुखः॥ आवाहनं ततः कुर्यादुशन्तस्त्वेत्यृचा बुधः॥ आ
वाहनं तदनुज्ञातो जपेदायंतु नस्ततः॥ अत्र सव्यस्यापि प्रागुक्तो विकल्पः॥ अ
त्राद्य मंत्रात् अस्मत्पितरममुकशर्माणममुकगोत्रं वसुरूपमावाहयामीत्याद्युक्त्वा मूर्धा
दि पादांतं तिलान्विकीर्यायंतु न इति सर्वांस्तेनैव जपेदिति निबंधाः॥ अत्रो
...तिशतसंदेशतयोऽर्घ्याचमनीयान्यपि हेमाद्रिणोक्तानि॥ तान्यग्रे वर्णावेदितानि पता

तिरस्मन्त्रस्य मंडलेन विवर्जितं॥ हेमाद्रौ हारीतः॥ भूमावेव नि
रध्यान्नोपरियात्राणीति॥ तानितु हेमाद्रावत्रिराह॥ भोजने हैम
रौप्याणि दैवे पित्र्ये यथाक्रमम्॥ हारीतः॥ राजतपात्राणामलाभे कांस्य
पात्राणि भोजनेऽस्ति॥ अन्यान्यपि हेमाद्रावत्रिराह॥ सौवर्णानि
रौप्याणि कांस्यानि तदसंभवे॥ अन्यान्यपि हि कार्याणि दारुजान्य
पिजानता॥ नायसान्यपि कार्याणि येन लानि न तु कचित्॥ न
चसीसमयानीह शस्यंते न पुजान्यपि॥ अत्रिः॥ पंचाशत्पलिकं कां
स्यद्यधिकं भोजनाय वै॥ गृहस्थे तु सदा कार्यमभावे हेमरौप्ययोः॥
पालाशेभ्यो विना न स्युः पर्णपात्राणि भोजने॥ पृथ्वीचंद्रस्तु॥ कां
स्यपात्रे हविर्दत्त्वा निराशाः पितरो गता इति ब्रह्मोक्तेः॥ कांस्यपात्रनिषेधमा
ह॥ वोपदेवस्तु स्मृतिसंग्रहमुदाजहार॥ श्राद्धे पलाशपात्राणि
मधूकोदुंबराणि च॥ पारिकाकुटजप्लक्षकाकचानि क्रमाज्जगुः॥
कदलीचूतपनसजंबुपुन्नागचंपकाः॥ अलाभे मुख्यपात्राणां ग्राह्याः
स्युः पितृकर्मणीति॥ हेमाद्रौ तु कदलीपत्रनिषेधमाहांगिराः॥
नजातीकुसुमानि दद्यान्न कदलीपत्रमिति॥ क्रतुः॥ असुराणां कुले
जातारंभा स्वर्वयपरिग्रहः॥ तस्या दर्शनमात्रेण निराशाः पितरो गताः॥
एवं पात्राण्यासाद्य भस्ममर्यादां कृत्वा विप्रहस्तशोधनं कुर्यात्॥ तत्रपिशं
गरक्षार्णो इति मंत्रद्वयं केचित्पठंति॥ मात्स्ये अकृत्वा भस्ममर्यादां यः कुर्यात्
त्पाणिशोधनं॥ आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठते॥ तत्रैव ब्र
ह्मांडे॥ प्रक्षाल्य हस्तौ पात्राच्च दद्यात् श्राद्धविधानवत्॥ प्रक्षालनज
लं दर्भैस्तिलैर्मिश्रं क्षिपेच्च वै॥ मंडलीपरीति हेमाद्रिः॥ अथा
ग्नौकरणम्॥ हेमाद्रौ मार्कंडेयः॥ आहिताग्निस्तु जुहुयाद्दक्षि
णाग्नौ समाहितः॥ अनाहिताग्निश्चौपासने त्वग्न्यभावे द्विजे प्सु वा॥ वा
यवीये॥ आहृत्य दक्षिणाग्निं तु होमार्थं वै प्रयत्नतः॥ अग्न्यर्थे लौकि
कं वापि जुहुयात्कर्मसिद्धये॥ आहिताग्निः सर्वाधानी॥ अर्द्धाधा
नी तु गृह्येऽग्नावेवेति चंद्रिका॥ यदर्कमिताक्षरामाधवादयः॥ तस्यापि दक्षिणा
ग्नौ॥ लौकिको गृह्य इति हेमाद्रिः॥ कल्पतरुश्च॥ आद्यपक्ष एव तु युक्तः
बहुसंमतत्वात्॥ यद्यपि स्मार्तेऽग्नौकरणं श्रौते दक्षिणाग्नौ न युक्तं॥ तथापि वच
नात्स्वनीति हेमाद्रिचंद्रिकादयः॥ इदं दर्शश्राद्ध एव॥ आह्निकादिषु तु स
र्वाधानी यासौ अर्द्धाधानी गृह्ये कुर्यादिति॥ हेमाद्रिमाधवश्च॥ पक्षांतकर्म निर्वर्त्य
वैश्वदेवं च साग्निकः॥ पिंडयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुध इति॥ लौगाक्ष्यादिभिः क्र

यमंपात्रंपितॄणामर्घ्यपातितं॥ आवृतास्तत्रतिष्ठंतिपितरःशौनकोब्रवीत्।
यावद्विप्रविसर्जनमितितुर्यपादेयमीयपाठः॥ अत्रवृत्तिः॥
पितृपात्रंसमवनयन्देशान्नचालयेदाश्राद्धसमाप्तेः॥० यस्मात्तत्रवतीयपा
त्रेणाश्नंतीति॥ यद्वाप्रथमपात्रमेवन्यग्बिलंकुर्यादिति॥ कामा
भावेपीदमेवशेषप्रतिपादनं॥ हेमाद्रौकौर्मे॥ संस्रवांश्चततःसर्वान्पात्रे
कुर्यात्समाहितः॥ पितृभ्यःस्थानमसीतिन्युब्जपात्रंनिधापयेत्॥ शू
लपाणौयमस्तु॥ येनार्कंप्रथमंपात्रंतस्मिन्येनामहंन्यसेत्॥ प्र
पितामहंततोन्यस्यनोद्धरेन्नचचालयेदित्याह॥ अथसंस्रवानानीयवृती
येनाच्छाद्यन्युब्जीकुर्यादितिसर्वैकवाक्यतयार्थइतिकेचित्॥ अत्रिः॥ गंधा
दिभिस्तदभ्यर्च्यतृतीयेनापिधापयेत्॥ पितृभ्यःस्थानमसीतिन्युब्जोदेशेनि
वेदयेत्॥ अर्चनंन्युब्जीकृतेपितुस्तं॥ न्युब्जमुत्तरतोन्यसेदिति
प्रचेतसोक्तेः॥ सर्वविप्रोत्तरतोन्यसेदितिहेमाद्रिकल्पतरू॥ वि
प्रवामइतिहलायुधः॥ कर्तुर्वामइतिशूलपाणिः॥ उत्तानंविवृतं
वापिपितृपात्रेनतद्भवेदितिउशनसोक्तेर्न्युब्जनंतेवसाधु॥ मातामहादि
संस्रावानपिपितृपात्रएवगृहीत्वाप्रयाजवत्तंत्रेणन्युब्जीकुर्यादितिशूलपाणिः॥
एकोद्दिष्टेतूहेनन्युब्जीनेतिपितृभक्तौश्रीदत्तः॥ यमोपिस्पृष्ट्वोत्तानम
न्यत्रनीतिमुद्घाटितंतथा॥ यावद्वस्त्राग्रजंत्याशुपितरस्तेशयंतिच॥
वैश्वदेवेउत्तानमितिमदनपारिजातः॥ वैजवापः॥ नस्योपरिकु
शान्दत्वाप्रदद्याद्दैवपूर्वकं॥ गंधपुष्पाणिधूपंचदीपंवस्त्रोपवीतके॥
अत्रगंधादेर्दैवेपित्र्येचपदार्थानुसमयस्ययाज्ञवल्क्योक्तकांडानुसमयेनविकल्पोज्ञे
यः॥ बह्वृचानांतुसूत्रेदैवानुक्तेःकांडानुसमयएव॥ अत्रप्रा
चीनावीतिनामगोत्रसंबुध्याद्युक्तंप्राक्॥ अत्रदैववत्॥ गंधं
तेप्त्वाचमनंच॥ हेमाद्रौकालिकापुराणे॥ निर्वर्त्यब्राह्म
णादेशात्क्रियामेवंयथाविधि॥ भाजनानिततोदद्यात्स्वशोचंपुनःक्र
मात्॥ आदेशान्पात्राणिदद्यादित्यन्वयः॥ तेनतत्रापिप्रश्नानुक्रमो
ज्ञेयः॥ तत्रैवब्राह्मे॥ मंडलानिचकार्याणिनैवारैश्चूर्णकैः
शुभैः॥ गोरमृत्तिकयावापिभस्मनागोमयेनवा॥ भृगुः॥ भ
स्मनावारिणावापिकारयेन्मंडलंततः॥ चतुःकोणंद्विजाग्र्यस्यत्रिकोणंक्षत्रि
यस्यतु॥ मंडलाकृतिवैश्यस्यशूद्रस्याभ्युक्षणंस्मृतं॥ बह्वृचप
रिशिष्टेतुदैवेचतुरस्रंपित्र्येवर्तुलंमंडलंकृत्वाक्रमेणसयवान्सतिलांश्चदर्भान्दद्या
दित्युक्तं॥ मार्कंडेयः॥ यातुधानाःपिशाचाश्चक्रूराएयेचैवराक्षसाः॥ हरं

उद्धियतामग्नौ च क्रियतामित्यामंत्रयते काममुद्ध्रीयतां काममग्नौ च क्रियतामित्यतिसृष्ट
उद्धरेज्जुहुयाच्च॥ तत्राग्निविधुरादेर्विशेषो वृहन्नारदीये॥ नष्टाग्निर्विधु
रभार्य्यश्च पार्वणे समुपस्थिते॥ संधायाग्निं ततो होमं कृत्वा तं विसृजेत्पुनः॥
अयाश्चेति तत्कालेग्निं संधाय हुत्वा त्यजेदित्यर्थः॥ एतदापस्तंबानामेव॥ पा
णिहोमस्तु छंदोगादीनां॥ विश्वप्रकाशेपि॥ साग्निरौपासने न॰
ग्नौ कुर्वीत लौकिके॥ पाणौ होमं प्रशंसंति तत्वापस्तंबशाखिनां॥
स्नातका विधुरा वा स्युर्यदि वा ब्रह्मचारिणः॥ अग्नौकरणहोमं तु कुर्युस्ते लौ
किकेनले॥ अयाश्चाग्ने मनोज्योतिरुद्ध्यम्याहृतीर्हुनेत्॥ ततोनु
ज्ञातोग्नींधनाद्याज्यभागांते यन्मे मातेत्याद्यैर्जुहुयात्॥ तत्र सप्तान्नाहुतयः
षडाज्यस्येति त्रयोदश॥ व्यत्ययो वा॥ यथा यन्मे माता प्रलुलो
भ तन्मे रेतः पिता वृंक्तां या शिष्टं तीति द्वाभ्यां अमुष्मै स्वाहेति पितुर्नाम्ना द्वौ होमौ
॥यन्मे पितामही प्रलुलोभ तन्मे रेतः पितामही वृंक्तां अन्तर्दधे इति तन्नाम्ना पितामहाय द्वौ
यन्मे प्रपितामही तन्मे रेतः प्रपितामही वृंक्तां अंतर्दधे ऋतुभिरिति तन्नाम्ना प्रपितामहाय
द्वौ॥ मातामहे तु तूहः॥ यन्मे मातामही तन्मे मातामही वृंक्ताम्॥
अमुं मातामहाद्दमित्याद्यो॥ यन्मे मातुः पितामही प्रलु॰ रेतो मातुः पितामही
वृंक्तां॥ अमुं मातुः पितामहाद्दं॥ यन्मे मातुः प्रपितामही प्रलु॰ रेतो मातुः प्रपिता
मही वृंक्तां॥ अमुं मातुः प्रपितामहाद्दं॥ सर्वत्रामुष्या इत्यत्र ङें तेन
तन्नाम योज्यं॥ तदुक्तं संग्रहे॥ योज्यः पित्रादिशब्दानां स्थाने माता
महादिकः॥ अन्नहोमे तथा स्पर्शे जलपिंडादिदानके॥ यन्मे मातामही
हीत्यादितः प्रोदाहरणं भवेत्॥ ततो पि चेहैत्येकान्नाहुतिः॥ ततः स्वा
हा पित्रे इत्यधिराज्यं हुत्वा स्विष्टकृतं हुत्वा सर्वभक्ष्यं किंचिदादायोद्गुप्तं भस्मापोह्य तत्
ह्मौ स्वाहाकारेण जुहोति॥ परिषेचनांतस्थालीपाकवत्॥ अ
यमग्नौकरणहोमो मासिकश्राद्ध एव॥ तच्च॥ स्मार्ताग्न्यभावेन कार्यमिति केचित्॥
कार्यमेवेति बहवः॥ अतएव सर्वाधानिनो होमवर्जं मासिश्राद्धमुक्तं सुदर्शनभा
ष्ये॥ महालये तद्दित्येके॥ प्रकरणांतरत्वात्कर्मांतरत्वेन स्मार्तेन पा
र्वणवत्कार्यमिति त्वस्मद्गुरवः॥ आह्निकादिषु तु स्मार्ते पार्वणविधिरेव॥
एवं मातृवार्षिकादिषु॥ मासिश्राद्धविकृतावष्टकायां मातृश्राद्धे वैकृतहोमेन
प्राकृतहोमबाधः॥ अन्वष्टकासु मातृश्राद्धं नेति भाष्ये॥ तत्रापि श्राद्धांतरवत् क्रिया
मारोतु यन्मे मातेत्यादौ गुणत्वेपि मातृप्राधान्यं विवक्षितं॥ मासिश्राद्धे न कल्पो व्याख्या
त इति सूत्रात्॥ आग्नेय्येव मंत्रो नाकार्येति वचनादग्निशब्दस्यैव वैकृतदेवताभिधायि
त्वम्॥ तेनामुष्या इत्यत्रामुकशर्मभ्यां पितृभ्यामित्याद्यूहः कार्यः॥ तच्च मासिश्राद्धं जीव

मोक्तेर्विहृतदक्षिणाग्नित्वात्॥ अतएवात्रवचनेसाग्निकः॥ आहिताग्नि
क्तो हेमाद्रिणा॥ एतदापस्तंबादीनामेव॥ आश्वलायनस्याहिताग्नेःपाण्य
वेवेतिवृत्तिः॥ अर्द्धाधानिनःगृह्ये एवव्यतिषंगेणेतिप्रयोगपारिजातेपरिशिष्टे च॥
बोपदेवस्त्वाह॥ होमशब्दःपिंडपितृयज्ञपरः॥ पितृयज्ञेतुजुहुयाद्दक्षिणा
ग्नौसमाहितः॥ श्राद्धेत्वौपासनाग्नौतुनिरग्निर्लौकिकेनले॥ अनग्निर्दूर
भार्यश्चपार्वणेसमुपस्थिते॥ संधायाग्निंततःकुर्यात्होममग्निंसमुत्सृजेदितित्रिकांड
मंडनोक्तेः॥ दर्शश्राद्धेगृह्याग्नावेवेतिलौकिकाग्न्यादिविधानंचतेत्तिरीयादिविषयम्
बह्वृचस्यत्वनग्नेरपिपाणिहोमएव॥ अग्निपाणीविनासूत्रेविधानांतराणु
क्तेः॥ दर्शश्राद्धेगृ॥ अग्न्यभावेतुविप्रस्यपाणावेवोपपादयेदितिमनूक्तेश्च
॥वृत्तावप्येवम्॥ कचित्साग्नेरपिपाणिहोमउक्तोगृह्यपरिशिष्टे।
अन्वष्टक्यंचपूर्वेद्युःसाग्नीनांवन्हौहोमोविधीयते॥ पित्र्यब्राह्मणहस्तेस्यादु
त्तरेषुचतुर्ष्वपीति॥ एकोद्दिष्टसपिंडीकरणेष्वुद्देतन्निषेधात्
बह्वृचभाष्यकारस्तुसर्वैकोद्दिष्टेषुपाणिहोममाहुः॥ इदंबह्वृचानामेव।
अन्येरंतत्त्वं॥ स्थालीपाकेनसहपिंडार्थमुद्धृत्येतिसूत्रेनात्रापूर्वः॥
स्थालीपाकश्चोद्यते॥ सर्वश्राद्धेषुप्रसंगात्॥ तेनानुवादोयमि
तिवृत्तिकारोक्तेः॥ पार्वणेआर्थिकस्यानंगस्यव्यतिषंगस्यवार्षिकादिष्व
नतिदेशादर्द्धाधानिनोपिपाणिहोमएवेतिवृत्तिस्वरसः॥ एवंमासिकाद
वपि॥ षोडशेमासिकेश्राद्धेसपिंडीकरणेतथा पाणावेवतुहोत
व्यमन्यत्राग्नौतुहूयते॥ इतिबोपदेवोदाहृतवचनाच्च॥ भाष्यका
रमतेतु॥ सूत्रेस्थालीपाकेनेतिकरणत्वान्नित्यवच्छ्र वणाच्च
पार्वणेसांगम् अतःकाम्यादिषुतदभावेकार्यस्यपिंडदानस्याप्यभावः॥
एतदेवानुसृत्यविवृतावपिवार्षिकादौव्यतिषंगउक्तः॥ प्रयोगपारिजातेपरिशि
ष्टे च॥ तेनैतन्मतेर्द्धाधानिनेऽप्यावेव॥ वस्तुतस्तुस्थालीपाके
नसहशाखयाप्रस्तरंप्रहरतीतिवत्सहभावमात्रश्रुतेः यत्नीवतेत्वष्टुरुपलक्ष
णमिवनांगत्वम्॥ नत्वेचानांगानुरोधेनप्रधानभूतपिंडदानत्यागोयुक्तः॥
तेनव्यतिषंगाभावेप्यग्नौहोमोभवतीतिबोपदेवः॥ अनाहिताग्नेर्गृह्याग्निमत
स्तुसर्वमतेऽप्यावेव॥ वार्षिकादौवृत्तिमतेव्यतिषंगोनअन्यमतेत्वस्ति॥
अत्रयथाचारमनुष्ठेयं॥ आश्वलायनः॥ उद्धृत्यघृताक्तमन्नमनुज्ञापयत्य
ग्नौहोमोभवतिकरिष्येकरवैकरवाणीतिवाप्रत्यभ्यनुज्ञाक्रियतांकुरुष्वकुर्वित्यथाग्नौ
जुहोतियथोक्तंपुरस्तादिति॥ व्यतिषंगपक्षेइदमितिवृत्तिः॥
करवैकरवाणीत्यत्राप्यावित्यनुषंगः॥पुरस्तात्पिंडपितृयज्ञे॥तच्चैवम्॥मेक्षणेनाधा

नम इतिस्वाहाकारेणवाग्निंर्श्वयज्ञोपवीतीमेक्षणामनुप्रहत्येति॥ अत्रदानसंप्रदाउ
पलक्षणाद्युएवेत्यर्थः॥ अग्निंगपक्षेऽतिप्रणीतेयंहोमोन्यथामुख्यो॥ अ
तिप्रणीतेऽग्यावधाप्रुपसमाधायेतिवह्वृचपरिशिष्टात्॥ केचित्तस्यरक्षोनिर्वह
णार्थत्वान्मुख्यं वदंति॥ तदेतद्विरोधाच्चिंत्यं॥ प्रयोगपारिजातेप्येवं॥ शौ
नकः॥ स्वाहाकारेणहोमेनुभवेधज्ञोपवीतवान्॥ प्रयोगपारिजातेपि॥ तत्र
प्राग्ग्रयेहुत्वापश्चात्सोमायहूयते॥ अग्नौयज्ञोपवीत्येवप्रक्षिपेन्मेक्षणंततः॥
छंदोगपरिशिष्टे॥ अग्नौकरणहोमश्चकर्तव्यउपवीतिना॥ अपसव्येनवा
कार्योदक्षिणाभिमुखेनच॥ कातीयानांत्वपसव्येनैव॥ पिंडपितृयज्ञव
द्धुत्वेतिसर्वातिदेशात्॥ सव्यंतुछंदोगपरं॥ गोभिलेनैतदुत्तरमेवापसव्यो॰
क्तेः॥ छंदोगाजुहुयुःसव्येनापसव्येनयाजुषाइतिष्टड्याज्ञवल्क्योक्तेश्च॥
अथपाणिहोमः आश्वलायनः॥ अभ्यनुज्ञायांपाणिष्वेवेति
पिंडपितृयज्ञकल्पाभावेनाग्न्यभावेकाम्यादिष्वित्यर्थः॥ तेनबह्वृचानामेको
द्दिष्टेपाणिहोमोभवत्येवनिषेधोन्यपरः॥ पाणिष्वितिवचनात्सर्वविप्रपाणि
षुहोमइतिवृत्तिः॥ एवंमातामहेपि॥ शौनकोपि॥ सर्वेषामुपवि
ष्टानांविप्राणामग्र्यपाणिषु॥ विभज्यजुहुयात्सर्वंसोमायेत्यादिमंत्रतः॥
परंतुहेमाद्रौकात्यायनः॥ पित्र्येयःपंक्तिमूर्द्धन्यस्तस्यपाणावनग्निकः॥
हुत्वामंत्रवदन्येषांतूष्णींपात्रेषुनिक्षिपेत् इति॥ तद्बह्वृचातिरिक्तानां॥
परंतुतत्रैवमात्स्ये॥ अग्न्यभावेतुविप्रस्यपाणौवा जलेपिवा॥ अज
कर्णेश्वकर्णेवागोष्ठेवाथशिवांतिकेइति॥ तत्तीर्थश्राद्धविषयं॥ तथ
दर्शसमीपेस्याच्छ्राद्धंज्ञेयोविधिरसदेतितत्रैवकात्यायनोक्तेः॥ निर्जलेत्वज
कर्णादौयत्तुचंद्रोदयेयमः॥ दैवविप्रकरेऽनग्निःकृत्वाग्नौकरणंद्विजइति॥
तदभार्यपरम्॥ अपत्नीकोयदाविप्रश्राद्धंकुर्वीतपार्वणम्॥ पित्र्य
विप्रेरनुज्ञातोविश्वेदेवेषुहूयतेइति॥ तत्रैवकात्यायनोक्तेः॥ हूयते
इतिकर्त्रुद्देशोप्यत्ययः॥ हेमाद्रौवायवीये॥ विधुरोदैविकेकुर्यात्
शेषपित्र्येनिवेदयेत्॥ दैवविप्रानेकत्वेतत्रैव॥ वैश्वदेवेयदेकस्मिन्
भवेयुर्बहवोद्विजाः॥ तदेकपाणौहोतव्यंसायाद्विधिर्विहितस्तदा॥ सोप्या
द्यः॥ प्रथमंवानियम्येतेतिस्मापात्॥ तेनमृतभार्यस्यदैवेहोमः॥ अनु
पनीतब्रह्मचार्यादेस्तुपित्र्ये॥ अग्न्यभावःस्मृतस्तावद्यावद्भार्यांनविंदतीति॥
हेमाद्रौजातूकर्ण्योक्तेः॥ सभार्यस्यत्रेरपिपित्र्यविप्रकरेइतिपृथ्वीचंद्रः
उपवीतेनदैवहोमःप्राचीनावीतेनपित्र्ये॥ यदासर्वत्रदैवपित्र्यकरयोर्विकल्पइतिहेमा
द्रौमदनपारिजातेच॥ यदातुपितृमातामहयोर्दैवपित्र्यविप्रभेदेनपाणिहोमइत्यपरा॰

र्कचंद्रिकादयः॥ यदातुदैवंतत्रतदातंत्रेणसक्तदैवपाणिहोमइतिकेचित्॥ हे
माद्रिस्तुमातामहस्यभेदेपिकुर्यात्तंत्रेणसाग्निकइतिकात्यायनस्मृतेर्भेदमाह॥ एवं
पित्र्येपिमाधवीयेप्येवं॥ एवंसाग्नेरपिविदेशादौपाणिहोमोज्ञेयः॥ य
त्तुकार्ष्णाग्निविनाश्राद्धमेवनास्तीत्युक्तंतत्सपिंडीकरणवार्षिकाद्यकरणपरत्वेनेयं॥ किं
चिदेवपरत्वबृहन्नारदीये॥ अनग्निर्दूरभार्यश्चपार्वणेसमुपस्थिते॥
श्रोत्रियैःकारयेच्छ्राद्धंसाग्निकैर्विधिवद्द्विजाः॥ क्षयाहदिवसेप्राप्तेस्वस्या
ग्निर्दूरगोयदि॥ तथैवभ्रातरस्त्वेषांलौकिकाग्नावितिस्थितिः॥
औपासनाग्नौदूरस्थेसमीपेभ्रातरिस्थिते॥ यद्यग्नौजुहुयाद्वापिपाणौवास
ह्रिपातकी॥ औपासनाग्नौदूरस्थेकेचिदिच्छंतिसत्तमाः पाणावेवतु
होतव्यमितितेनतत्समंजसं॥ तदुद्दानादरादुपेक्ष्यं॥ हेमाद्रौय
मः॥ अग्नौकरणवत्तत्रहोमोविप्रकरेभवेत्॥ यद्युस्याद्गर्भिणीपत्नी
यपतौघृग्निसमोद्विजः॥ मेक्षणेनकरेणवाहोमः मेक्षणप्रहरणं
नेतिवृत्तिः॥ स्मृतिरत्नावल्यां॥ नानुज्ञापाणिहोमेस्यात्ततःपर्युक्षणोक्षणे
नाग्नेतमथादितिचतस्मात्तानिधमेक्षणे॥ कर्काचार्योप्येवमाह॥
माधवीयेचंद्रिकायांचानुज्ञादिसर्वंभवतीत्युक्तं॥ पाणिहोमेप्रश्नाद्याह
परार्केशौनकः॥ अनग्निकश्चेदाज्यंगृहीत्वाभवत्स्वेवाग्नौकरणमितिपूर्व
वत्तथास्त्विति॥ आश्वलायनः॥ यदिपाणिष्वाचांतेष्वन्यदन्नमनुदि
शत्यन्नमन्नेसृष्टंदत्तमध्रुवमिति॥ पाणौहुतंपात्रेनिधायविधायविप्रैराचम्य
भोजनार्थमन्नेपरिविष्टेहुतशेषंपात्रेषुदद्यादित्यर्थः॥ स्पष्टंप्रभूतम्॥ नैमित्ति
कंचेदमाचमनंनहुतभक्षणनिमित्तंअन्नेपाणितलेदत्तेपूर्वमश्नंत्यबुद्धयः॥ पि
तरस्तेनतृप्यंतिशेषान्नंनलभंतिच॥ यच्चपाणितलेदत्तंपश्चान्नदुपकल्पि
तम् एकीभावेनभोक्तव्यंपृथग्भावोनविद्यते॥ इतिबह्वृचपरिशि
ष्टात् हेमाद्रावप्याचमनेहेत्वर्थवादउक्तः॥ पाण्यास्योहिद्विजःस्मृतइति
भाष्येत्वाचांतेषुभक्षितेषु॥ चषुभक्षणे॥ भक्षणेत्वरंचनाचमनं॥
अग्निसाम्यात्॥ पूर्वनिषेधस्तुसपिंडीकरणेत्रेयःदद्यादितिचोदितत्वात्॥तत्व
त्र॥जुहोतिचोदितत्वादित्युक्तंतन्नेतदहस्समतं॥ यत्तुबौधायनेन॥ तस्मिंस्तु
प्राशितेदद्याद्यदन्नंप्रकृतंभवेदितिभक्षणमुक्तंतत्छास्त्रीयानामेवेतिहेमाद्रिः॥
तंत्रेवयमः॥पित्र्यपाणिहुताच्छेषंपितृपात्रेषुनिःक्षिपेत्॥ अग्नौकरणशेषंतुनदद्या
द्वैश्वदेविके॥एतदग्निहोमेपिसमं॥तथाकर्कस्तु॥ सूत्रेहुतशेषंदत्त्वेत्यविशेषात्सर्वे
विप्रेषुदद्यादित्याह॥ तत्रैवबृहस्पतिः॥ पित्र्यविप्रकरेहुत्वाशेषंपा
त्रेषुनिक्षिपेत्॥पिंडेभ्यःशेषयेत्किंचिन्नदद्याद्वैश्वदेविके॥अथापस्तंबानसूत्रम्॥

उद्धियतामग्नेश्च क्रियतामित्यामंत्रयते काममुद्धीयतां काममग्नौ च क्रियतामित्यतिसृष्ट
उद्धरेज्जुहुयाच्च॥ तत्रापि विधुरादेर्विशेषो वृहन्नारदीये॥ तत्राग्निहे
रभार्यस्य यावर्णोस्मुपस्थिते॥ संधायाग्निं ततो होमं कृत्वा तं विसृजेत्पुनः॥
अयाश्रेति तत्काले ग्निं संधाय हुत्वा त्यजेदित्यर्थः॥ एतदापस्तंबानामेव॥ पा
णिहोमस्तु छंदोगादीनां॥ विश्वप्रकाशेपि॥ साग्निरौपासने नः
ग्नौ कुर्वीत लौकिके॥ पाणौ होमं प्रशंसंति तत्त्वापस्तंबशाखिनां॥
स्नातका विधुरा वा स्युर्ये दिवा ब्रह्मचारिणः॥ अग्नौकरणहोमं तु कुर्युस्ते लौ
किके नले॥ अयाश्चाग्ने मनोज्योतिरहुध्यव्याहृतीर्हुनेत्॥ ततोनु
जातोग्नीं धनाधाज्यभागांते यन्मे मातेत्याद्यैर्जुहुयात्॥ तत्र सप्तान्नाहुतयः
षडाज्यस्येति त्रयोदश॥ व्यत्ययो वा॥ यथा यन्मे माता प्रलुलो
भ तन्मे रेतः पिताहं क्तांयास्त्रिष्वेतीतिद्वाभ्यां अमुष्मै स्वाहेति पितुर्नाम्नाद्वो होमौ
॥ यन्मे पितामही प्रलुलोभ तन्मे रेतः पितामहो वृंक्तां अंतर्दधे इतिनाम्ना पितामहाय द्वौ
यन्मे प्रपितामही तन्मे रेतः प्रपितामहो वृंक्तां अंतर्दधे ऋतुभिरिति तन्नाम्ना प्रपितामहाय
द्वौ॥ मातामहे तु ऊहः॥ यन्मे मातामही तन्मे मातामहो वृंक्ताम्॥
अन्यं मातामहाद्दद्मित्याद्यौ॥ यन्मे मातुः पितामही प्रलु० रेतो मातुः पितामहो
वृंक्तां॥ अन्यं मातुः पितामहाद्दद्॥ यन्मे मातुः प्रपितामही प्रलु० रेतो मातुः प्रपिता
महो वृंक्तां॥ अन्यं मातुः प्रपितामहाद्दद्॥ सर्वत्रामुष्मा इत्यत्र ङेंतं तत्
तन्नामयोज्यं॥ तदुक्तं संग्रहे॥ योन्यः पित्रादिशब्दानां स्थाने मातामहादिकः॥ अत्र होमे तथा स्पर्शे जलपिंडादिदानके॥ यन्मे मातामहीत्यादितश्चोदाहरणं भवेत्॥ ततो ये चेह त्येकाज्याहुतिः॥ ततः स्वा
हा पित्रे इत्याद्येराज्यं हुत्वा स्विष्टकृतं हुत्वा सर्वभक्ष्यं किंचिदादाय दशभ्यो भस्मा पोष्यत्रतू
ष्णीं स्वाहाकारेण जुहोति॥ परिषेचनांतस्थालीपाकवत्॥ अ
यमग्नौकरणहोमो मासिकश्राद्ध एव॥ तच्चास्मार्तीग्न्यभावेन कार्यमिति केचित्॥
कार्यमेवेति बहवः॥ अत एव सर्वाधाने नो होमवर्जं मासिश्राद्धमुक्तं सुदर्शनभा
ष्ये॥ महालयेतद्वदित्येके॥ प्रकरणांतरत्वात्कर्मांतरत्वेन स्मार्तेपा
र्वणवत्कार्यमिति त्वस्मद्गुरवः॥ आह्निकादिषु तु स्मार्तपार्वणविधिरेव॥
एवं मातृवार्षिकादिषु॥ मासिश्राद्धविकृतावष्टकायां मातृश्राद्धे वैकृतहोमेन
प्राकृतहोमबाधः॥ अन्वष्टकासु मातृश्राद्धं नेति भाष्ये॥ तत्रापि श्राद्धांतरवत् क्रिया
माणे तु यन्मे मातेत्यादौ गुणत्वेपि मातृप्राधान्यं विवक्षितं॥ मासिश्राद्धे नकल्पो व्याख्या
त इति सूत्रात्॥ आग्नेय्येव मतो नाकार्ये तिवचनादग्निशब्दस्यैव वैकृतदेवताभिधायि
त्वम्॥ तेनामुष्या इत्यत्रामुकशर्मभ्यां पितृभ्यामित्याद्यूहः कार्यः॥ तत्र मासिश्राद्धं जीव

त्पित्रादिनाप्युक्तममृतपित्रादिनाचकार्यमित्युक्तंसुदर्शनभाष्येतत्प्रकारस्तुवक्ष्यते॥
मातापित्रोर्हिंत्वादौतुनोहा॥तस्मादुचन्नोहेदितिनिषेधात्भक्तानाद्व्हाहाभार्याच्चपत्नी
संनह्येतिवत्॥उपदेशिमतेतूहः॥यथायन्मेमातरोप्रलुलुभतुश्चरत्याव्रततुरनेश्याय
स्मतित्वक्तमासिश्राद्धनिर्णयेज्ञेयमितिदिक्॥ अन्यत्प्राग्वत्॥
अथपरिवेषणम्॥ तत्रोपनीन्यैवाज्येनदेवपूर्वमामासुपक्कमितिपा
त्रागुपस्तीर्यकुर्यादितिहेमाद्रिः॥ भारतेदानधर्मेपि॥ आमाहु
तिविनानैवयत्किंचित्परिविष्यते॥दुराचारैश्चयम्दुक्तंतंभागंरक्षसांविदुः॥ त
त्रैवशौनकः॥ विधिनादेवपूर्वंतुपरिवेषणमाचरेत्॥तत्रैवधर्मःफलस्या
नंतनाप्रोक्तास्वयंचपरिवेषणे॥ तत्रैववायुभविष्ययोः॥ भार्याया
श्राद्धकालेतुप्रशस्तंपरिवेषणं॥ ब्रह्मांडे॥ नापवित्रेणनैकेनहस्तेननविना
कुशं॥नायसेनायसेनैवश्राद्धेतुपरिवेषयेत्॥ वसिष्ठः॥ आयसेनतुपात्रेण
यदन्नंसंप्रदीयतेभोक्ताविष्ठासमंभुंक्तेदाताचनरकंव्रजेत्॥ पैठीनसिः॥
सीसकायसरीतियात्राणपञ्जीयानि॥ तत्रैवहारीतः॥ सौवर्णराजताभ्यां
चखड्गेनौदुंबरेणवा॥दत्तमक्षय्यतांयातिफल्गुपात्रेणवापुनः॥ कार्ष्णाजिनिः
दर्व्यादेयंघृतंवान्नेसमस्तव्यंजनानिच॥उदकंचैवपक्वान्नेनोदर्व्यातुकदाचन॥ य
मः॥ पत्रपाविषमदात्तुश्चनिष्कृतिर्नचविद्यते॥ पृथ्वीचंद्रोदयेपराशरः॥
सर्वदाचतिलायाह्याः॥पितृकृत्येविशेषतः॥भोज्यपात्रेतिलान्दृष्ट्वानिराशाःपितरो
गताः॥ चंद्रिकायांवृद्धशातातपः॥ हस्तदत्तास्तुयेस्नेहालवणव्यंजना
दयः पितृणांनोपतिष्ठंतिभोक्तामुंजीतकिल्बिषं॥घृतपात्रेविशेषोयंथांतरेओदने
परमान्नंचपात्रमासाद्यमुग्धधीः॥घृतेनक्षरयेत्सात्रंतद्भतंरुधिरंभवेत्॥घृतादिपात्रं
भूमौस्थापयेन्नभोजनपात्रे इतिमदनरत्ने॥संग्रहे॥ हस्तदत्तंतु
नाश्नीयात्लवणंव्यंजनादिकं॥अपक्वंतैलपक्वंचहस्तेनैवप्रदीयते॥पात्रालभ
नभुक्तंचतुर्विंशतिमते॥उत्तानंदक्षिणंसव्यंनीचंपात्रास्तुपस्पृशेत्॥याज्ञवल्क्यः॥
दत्वान्नंपृथ्वीपात्रमितिपात्राभिमंत्रणम्॥इदंविष्णुरित्यन्नेद्विजांगुष्ठंनिवेशये
त्॥ बौधायनः॥ विप्रांगुष्ठेनानखेनानुदिशतिपृथिवीतेपात्रंद्यौरपि
धानंब्राह्मणस्यमुखेऽमृतेऽमृतंजुहोमि॥ब्राह्मणानांत्वाविद्यावतांप्राणापानयोर्जु
होम्यक्षितमसिमामेपितॄणांक्षेष्ठाअमुत्रामुष्मिंल्लोकेइति॥आज्यंजुहोम्यग्नेस्वाहा
शब्दःकात्यायनसूत्रेउक्तः॥मैत्रेःस्वधाशब्दः॥अंगुष्ठेविशेषमाह॥ हेमाद्रौधौ
म्यः॥ परिहृत्यनखांगुष्ठंद्विजस्यान्नेनिवेशयेत्॥तथा॥उत्तानेनतुहस्तेनद्विजां
गुष्ठंनिवेशनम्यःकरोतिद्विजोमोहान्नदैरक्षांसिभुंजते॥तत्रैवयमःविष्णोर्हव्यंचकव्यं
चब्रूयाद्रक्षस्वचेत्क्रमात्॥दैवेपित्रेचेत्यर्थः॥तत्रैवात्रिः॥संबंधनामगोत्राणिस्म

न्नं ततः स्वधा॥ पितृकर्माद्युदीर्येति स्वसत्तां विनिवर्तयेत्॥ हस्तेनामुक्तमन्नाद्यमिदम्
न्नमुदीरयेत्॥ अत्रान्नदाने चतुर्थीस्यादित्यादिविशेषाः पूर्वमुक्ताः अत्र पूर्वोक्तमंत्रा
न्तेऽत्र पुरूरवार्द्रवसंज्ञका विश्वेदेवा देवता इदमन्नं सपरिकरं हव्यं अयं ब्राह्मणस्त्वाहव
नीयार्थे दत्तं दास्यमानं चातृप्तेः गयेयं भूः गदाधरो भोक्ता इदमन्नं ब्रह्म सौवर्णपात्रस्थ
मन्नमक्षय्यवटच्छायास्थममुकेभ्यो विश्वेभ्यो देवेभ्य इदमन्नममृतरूपं परिविष्टप
रिवेक्ष्यमाणं चातृप्तेः स्वाहा न मम इति बह्वृचपरिशिष्टहेमाद्र्याद्यनुमतः प्रयोगः॥
एवं पित्रे अमुकगोत्र वसुरूपादि तत्तन्नामतेय॥ ततो ये देवास इति ये चेह पितर॥
इति पित्र्ये केचिज्जपंति ततोऽच्छिद्रं वाचयेत्॥ तत्रैव प्रचेताः॥ आपोशानकरे वि
प्रे संकल्प्याच्छिद्रभाषणात् निराशाः पितरो यांति दैवैः सह न संशयः॥ पारस्करः॥
संकल्प्य पितृदेवेभ्यः सावित्रीं मधुमज्जपः॥ श्राद्धं निवेद्यापोशानं जुषध्वं प्रैषोऽथ भोज
नं॥ निवेद्येति ब्राह्मणार्पणं कृत्वेत्यर्थः॥ अत एव वृद्धनारदीयेऽन्नत्यागमुक्त्वोक्तं
॥ दत्तं हविश्च तत्कर्म विप्रवैवै समर्पयेदिति॥ यत्तुक्तात्परले
कार्ष्णाजिनिः॥ अपसव्येन कर्तव्यं पितृकृत्यमशेषतः॥ अ
न्नदानादृते सर्वमेवं मातामहेष्वपीति॥ तदप्येतत्परं॥ तच्च ब्रह्मा
र्पणं ब्रह्म हविः हरिर्दाता चतुर्भिश्चेति केचित्पठंति॥ धर्मप्रदीपे॥ ततोऽन्नं पि
तृदेवेभ्यः संकल्प्य च यथाविधि॥ दत्तं यद्दास्यमानं च आतृप्तेर्न मम इति च॥
तथा॥ श्राद्धीयान्नस्य संकल्पो भूमावेव प्रदीयते॥ हस्ते मुदीयमानं तु
पितृणां नोपतिष्ठते॥ वैश्वदेवस्य वामे तु पितृपात्रस्य दक्षिणे॥ संक
ल्पोदकदानं स्यान्नित्यश्राद्धे यथारुचि॥ प्रचेताः॥ आपोशानं प्रदायाथ सा
वित्रीं त्रिर्जपेदथ॥ मधुवाता इति त्र्यृचं मध्वित्येतत्त्रिकं तथा॥ मि
ताक्षरायां पारस्करः॥ संकल्प्य पितृदेवेभ्यः सावित्रीं मधुमज्ज
पः॥ श्राद्धं निवेद्यापोशानं जुषध्वं प्रैषोऽथ भोजनम्॥ गायत्रीं त्रिः
सकृद्वापि जपेद्व्याहृतिपूर्विकां मधुवाता इति त्र्यृचं मध्वित्येतत्त्रिकं तथा॥
याज्ञवल्क्यः॥ सव्याहृतिकां गायत्रीं मधुवाता इति त्र्यृचं॥ ज
प्त्वा यथासुखं वाच्यं भुंजीरंस्तेऽपि वाग्यताः॥ यथासुखं जुषध्वमिति वा
च्यं॥ अत्रिः॥ असंकल्पितमन्नाद्यं पाणिभ्यां यद्युपस्पृशे
त्॥ अभोज्यं तद्भवेदन्नं पितृणां नोपतिष्ठते॥ अन्नं द
त्तेन गृह्णीयाद्यावत्तोयं न संपिबेत्॥ आपोशाने विशेषः
स्मृतिसमुच्चये॥ आपोशानं वामभागे सुरापानसमं भवेत्॥
दक्षभागे तु यः कुर्यात्सोमपानफलं लभेत्॥ तथा॥ पुनराचम्या
पोशानं सुरापानसमं भवेत्॥ हेमाद्रावत्रिः॥ दत्त्वा वाप्यथ

वादत्तेभूमौयोनिःक्षिपेद्बलिं॥ तदन्नंनिःफलंयातिनिराशैःपितृभिर्गतैः॥ के
चिदाज्येनकुर्वंतितन्न॥ पायसेनतथाज्येनमाषान्नेनतथैवच॥ नकु
र्याद्बलिदानंतुश्रोदनेनप्रकल्पयेदिति॥ स्मृतिसारेनिषेधात्॥शंखः॥
श्राद्धेनिपुक्तान्भुंजानान्नष्टकुष्ठलवणादिषु॥ उच्छिष्टाःपितरोयांतिष्टच्छ
तोनात्रसंशयः॥ कात्यायनः॥ श्रयतोजपेत्सव्याहृतिकांगायत्री
सकृत्त्रिर्वारक्षोघ्नीः पुरुषसूक्तमप्रतिरथमिति॥ हेमाद्रौसौरपुराणेएंद्रंचपौ
रुषंसूक्तंश्रावयेद्ब्राह्मणांस्ततः॥ मात्स्यपाद्मयोः॥ ब्रह्मविष्णर्क
रुद्राणांस्तोत्राणिविविधानिच॥ इंद्रेशसोमसूक्तानिपावमान्यःस्वशक्तितः॥
मंडलब्राह्मणंतद्वत्प्रीतिकारिचतत्पुनः॥ अभावेसर्वविद्यानांगायत्रीजपमा
चरेत्॥ ष्टथ्वीचंद्रोदयेब्राह्मे॥ वीणावंशध्वनिंचाथविप्रेभ्यःसन्निवे
दयेत्॥ जपेच्चपौरुषंसूक्तंनाचिकेतत्रयंतथा॥ त्रिमधुत्रिसुपर्णंच
पावमानीर्यजूंषिच॥ हेमाद्रावत्रिः॥ हुंकारेणापियोब्रूयाद्धस्ताद्वापि
वदेद्गुणान्॥ भूतलाच्चोद्धरेत्पात्रंमुंचेद्धस्तेनवापिवेत्॥ प्रौढपादो
वहिःकक्षोवहिर्जानुकरोपिवा॥ अंगुष्ठेनविनाश्नातिमुखशब्देनवापुनः॥
पीतावशिष्टतोयादिपुनरुद्धृत्यवापिवेत्॥ खादितार्द्धंपुनःखादेत्मोदकानिफ
लानिच मुखेनवाधमेदन्नंनिष्ठीवेद्भाजनेपिवा॥ इत्यमश्नन्द्विजःश्रा
द्धंहत्वागच्छत्यधोगतिं॥ जावालिः॥ इष्टमुग्रंहविष्यंहविष्यंचदद्या
दन्नंशनैःशनैः॥ वृद्धशातातपः॥ अपेक्षितयाचितव्यंश्राद्धार्थमुपक
ल्पितं॥ नयाचतेद्विजोमूढःसभवेत्पितृघातकः॥ यत्तुयमः॥
श्राद्धेद्विजोनैवदद्यान्नयाचेन्नैवदापयेत्॥ इति॥ तदसंपादितवस्तुविष
यमितिहेमाद्रिः॥ हारीतः॥ ऊर्ध्वपाणिर्विहसन्सक्रोधी
विस्मयान्वितः॥ नग्नष्टष्ट्वायभुंक्तेनतत्प्रीणातिवैपितॄन्॥ प्र
चेताः॥ नस्पृशेद्वामहस्तेनभुंजानोन्नंकदाचन॥ नपादौनशि
रोवस्तिंनपदाभाजनंस्पृशेत्॥ शंखः॥ श्राद्धंपंक्तौतुभुंजानोब्रा
॥० ॥० ॥० ब्राह्मणोब्राह्मणंस्पृशेत्॥ तदन्नम
त्यजन्भुक्त्वागायत्र्यष्टशतंजपेत्॥ उशनाः॥ भोजनंतु
नतिःशेषंकुर्यात्सात्तः कथंचन॥ अन्यत्रदध्नः॥
क्षीराद्वाक्षौद्रात्सक्तुभ्यएवच॥ ब्राह्मे॥ नपात्रमुत्पात
येज्ज्ञानुनसुच्छामिरमीरयेत्॥ नपोद्रीक्षेतभुंजानान्नचकुर्वीतम
त्सरं॥ यमः॥ स्वाध्यायंश्रावयेत्सम्यक्धर्मशास्त्राणिवै
॥०॥०॥०॥०॥०॥०॥०॥०॥०॥०॥०॥०वहि।

प्रचेताः॥भुंजानेषुतुविप्रेषुऋग्यजुःसामलक्षणं।जपेदभिमुखोभूत्वापित्र्यंचैवविशेषतः।यज्ञं
पीचैवरुद्रंचरक्षोघ्नीऋचएवच।रक्षोघ्नीःकृणुष्वपाजःरक्षोहणंवित्याद्याः।तत्रैवनिगमः॥भुं
जानस्तुजपेत्सावमानीरुदीरतामध्वन्नवनीश्व।अन्नवत्यःपितृतुल्योषमिति।पृथ्वीचंद्रोदयेभरद्वा
जः।भुंजानेषुतुविप्रेषुप्रमादात्स्रवतेगुदं।पादकृच्छ्रंततःकृत्वाअन्यंविप्रंनिमंत्रयेत्।रुरणपा
द्यादिदन्यवेत्यर्थः॥विप्रवमनेतत्रैवदक्षः॥निमंत्रितस्तुयःश्राद्धेभोजनेमुखनिस्सृते।तदैवहो
मंकुर्वीतस्वाग्नौविप्रःसमाहितः।प्राणादिपंचभिर्मंत्रैर्यावद्वात्रिंशसंख्यया।ब्राह्मणस्तुततः
कृत्वाघृतप्राशनमाचरेत्॥ऋग्विधानेतु॥इंद्रायसामसूक्तेनश्राद्धविघ्नोयदाभवेत्॥अग्न्यादि
भिर्भोजनेनश्राद्धंसंपूर्णमेवहीत्युक्तम्।अग्न्यादिभिरितिलौकिकाग्निस्थापनचरुनिर्वापाद्या
ज्यभागांतेनामगोत्रपूर्वमग्नौपितृनावाह्य।संपूर्णान्नत्यागंकृत्वाप्राणादिभिर्द्वात्रिंशदाहुतीर्हुत्वे
त्यर्थः भोजनेनपुनःश्राद्धेन॥तेनहोमःपुनःश्राद्धंवेतिपक्षद्वयमुक्तं।स्वकृजपस्तुउभयानुग
तः॥स्मृतिसंग्रहे॥प्राधान्यंपिंडदानस्यभोजनस्यतदंगता।अतोभुक्तिक्रियाहानौश्राद्धावृत्ति
र्नेमन्यते।पिंडदानोत्तरं।वांतौहोमएवनावृत्तिः।पिंडदानात्प्राग्वांतौतद्दिनउपवासंकृत्वापरेद्युः
पुनःश्राद्धंकार्यमित्यर्थः।तत्रैव॥श्राद्धपंक्तौतुभुंजानोब्राह्मणोवमतेयदि।लौकिकाग्निंप्रतिष्ठा
प्यअर्चयेच्चहुताशनं।तथा॥एकएवयदाविप्रोभोजनेछर्दितोयदि।तदैवाग्निंसमाधाययहोमंकु
र्याद्यथाविधि।द्वितीयपक्षेऋग्विधाने।भोजनोपक्रमादूर्ध्वंपक्रमान्स्रवेतोयदि।श्राद्धविघ्नेपुनः
कार्यंजपहोमोनतन्निदो॥स्मृतिसंग्रहे।अकृतेपिंडदानेतुभुंजानोब्राह्मणोवमेत्।पुनःपाका
त्तुकर्तव्यंपिंडदानंयथाविधिः॥पिंडदानंश्राद्धं॥अकृतेपिंडदानेतुपितायदिवमेत्तदा।पुनःपाकं
प्रकुर्वीतश्राद्धंकुर्याद्यथाविधीति।तत्रैवोक्तेः॥तथा॥पित्रर्थीनांत्रयाणांहिपिताचवमतेयदि
तद्दिनेचोपवासःस्यात्पुनःश्राद्धंपरेहनि॥तथावमनेवाविरेकेवातद्दिनंपरिवर्जयेत्॥एषुव
चनेषुमूलंचिंत्यम्॥इदंमासिकाब्दिकविषयम्।दर्शादौतुवांतावामेनतदेककार्यम्।श्राद्धविघ्ने
द्विजातीनामामश्राद्धंप्रकीर्तितं।अमावास्यादिनियतंमाससंवत्सराद्दतेइतिमरीचिस्मृतेः
श्राद्धेपिंडदानमेवप्राधान्यमितिकर्काचार्यः।तन्मतेदक्षोक्तोहोमएवनावृत्तिः॥विप्रभोजनमिति
मेधातिथिः॥भोजनपिंडदानाग्नौकरणानीतिकपर्दिधूर्तस्वामिहेमाद्र्यादयः॥तन्मतेपूर्वो
क्तोनिर्णयः।तत्त्व॥अत्रत्यागमात्रंप्रधानम्।भोजनंतुप्रतिपत्तिरूपमंगं।अतोवांतौतद्धानेपि
नावृत्तिरितिगौडमैथिलादयः॥श्राद्धस्ययागदानोभयरूपत्वात्।संपूर्णदानाभावाद्भोजन
स्यांगत्वेपि।सोमवमनेरवयुक्तंनैमित्तिकविधानमितियुक्तंप्रतीमः।अत्रेदंतत्त्वं।वैश्वदेविकस्य
वमनेहोमएवनावृत्तिः॥अंगत्वात्॥तस्यरक्षार्थत्वात्॥इष्टिश्राद्धेक्रतुदक्षावित्यादिस्मृतेश्च।
तत्रजयानजुहुयादितिवत्।पितामहादेरपितथा।पितेत्युक्तेरितिकेचित्।तस्यापिप्रधानत्वात्
पितृवदितितुयुक्तम्।सपिंडीकरणादौवार्षिकवत्।सपिंडीकरणादीनियानिश्राद्धानिषोडशा
ततपिंडप्रधानत्वमेतत्त्वविनिवर्तकमितिस्मृतेः।महैकोद्दिष्टादौतूभयप्राधान्यादावृत्तिरेवाए
कएवद्विजोभोज्यःपिंडएकोविधीयतइतिस्मृतेः।वृद्धिसंकल्पनित्यश्राद्धादौतुभोजनप्राधा

न्याह्वानादावावृत्तिरेव। वृद्धिश्राद्धे विकल्पेन पिंडदानं बुधैः स्मृतम्। नित्यश्राद्धमदैवं स्यात् पिंडदा
नविवर्जितमिति स्मृतेः। भुक्तिः क्रियायाः प्राधान्यं श्राद्धे संकल्पसंज्ञके। तत्रैव पित्र विप्रस्यात्यय
घाते पुनः क्रियेति संग्रहोक्तेश्च॥ मघादावप्येवं। तीर्थमहालयादौ दर्शवद्विप्याशक्तौ पाले
चतंतं न प्रतीमः। आश्वलायनः॥ तृप्तान् ज्ञात्वा मधुमतीः श्रावयेदक्षन्नमीमदंतेति च सर्व
न्नमुद्धृत्य यथादन्नमुपभुक्तं ततत्। स्थालीपाकेन सह पिंडार्थमुद्धृत्य शेषं निवेदयेदभिमते
नुमते चेति। अत्र गायत्रीमध्विति त्रिकजपो विज्ञेयः। तृप्तान् बुध्वान्नमादाय सतिलं पूर्ववज्जपेदि
ति प्रचेतसोक्तेः। व्यासः॥ तृप्ताः स्थेति पृच्छेदथ पुनस्तृप्ताः स्मः इत्यथ। अभिमते विप्रैः स्वीकर्तुमिष्टे
शौनकोपि॥ अन्नशेषैश्च किं कार्यमिति पृच्छेत् तांस्ततः। तैरिष्टैः सह भोक्तव्यमिति प्रत्युक्तः पूर्व
कम्। प्रदद्युः सकलं तस्मै स्वीकुर्युर्वा यथारुचिः। श्राद्धविशेषे प्रश्नभेदमाह हेमाद्रौ विष्णुः। पि
त्र्ये स्वदितमिति गोष्ठ्यां सुश्रुतं सम्पन्नमित्यभ्युदये दैवे रोचत इति। आयुष्यमिति संरिषु। स्वैर
मिच्छाश्राद्धे याज्ञवल्क्यः। अन्नमादाय तृप्ताः स्थ शेषं चैवानुमान्य च। तदन्नं प्रकिरेद्भूमौ दद्या
च्चापः सकृत् सकृत्। इदं चात्र विकिरदानमन्यशाखिनां। आश्वलायनानां तु पिंडदानांत एव
स्तत्र कृतोक्तं। कात्यायनस्तु विकिरोत्तरं गायत्र्यादिजपं तृप्तिप्रश्नं चाह। हेमाद्रौ देवलः॥ ततः सर्वा
शनं पात्रे गृहीत्वा विविधं बुधः। तेषामुच्छेषणस्थाने विकिरं भुवि निक्षिपेत्। माधवीये प्रचेताः॥
सार्ववर्णिकमादायपयेन्नग्नौ तिभुवि क्षिपेत्। स च कुशे कार्यः। दर्भेषु विकिरश्च यस्तुकेः। मंत्रश्चा
तीयः॥ अग्निदग्धाश्च ये जीवा येप्यदग्धाः कुले मम। भूमौ दत्तेन तृप्यंतु तृप्ता यांतु परां गतिं। अन्ये
तु असोमपाश्च ये देवा यज्ञभागविवर्जिताः। तेषामन्नं प्रदास्यामि विकिरं वैश्वदेविकमिति हेमाद्रौ
गोभिलोक्तेन देवे। असंस्कृतप्रमीता ये त्यागिन्यो याः कुलस्त्रियः॥ दास्यामि तेभ्यो विकिरमन्नं
ताभ्यश्च ये तत्क वित्यग्निपुराणोक्तेन पित्र्ये अन्नं विकीर्यपे अग्निदग्धा इत्युच्छिष्टपिंडं कुशोपरि
पृथग्दद्यादित्याहुः॥ पृथ्वीचंद्रोदयेप्येवं ब्राह्मे॥ ततः प्रक्षाल्य हस्तौ च द्विराचम्य हरिं स्मरेत्॥
माधवीये गौतमः॥ विकिरमुच्छिष्टैः प्रतिपादयेत्। हेमाद्रौ व्यासः। उच्छिष्टैरेव विकिरं संदेव प्र
तिपादयेत्। भृगुः॥ पिंडवत् प्रतिपत्तिः स्याद्विकिरस्येति नोत स्त्रिः॥ श्राद्धकाशिकायां यजमान
स्य दासादीनुद्दिश्य द्विजसत्तमः। तस्माद्दत्तं त्यजेद्भूमौ वामभागे षु पैत्रके॥ मनुः॥ उच्छेषणं भू
मिगतमजिह्मस्याशठस्य च। दासवर्गस्य तत् पित्र्ये भागधेयं प्रचक्षते॥ विष्णुः॥ उदङ्मुखेष्वाचमन
मादौ दद्यात्ततः प्राङ्मुखेषु। पित्र्ये दैवे चेत्यर्थः॥ शातातपः॥ विश्वेदेवनिविष्टानां च समहस्तधाव
नं॥ हेमाद्रौ वाराहे॥ हस्तं प्रक्षाल्य पश्चापः पिबेदुक्त्वा द्विजः सदा। तदन्नमसुरैर्भुक्तं निराशाः पित
रो गताः॥ मरीचिः॥ हस्तं प्रक्षाल्य गंडूषं यः पिबेद्विचक्षणः। आसुरं तद्भवेच्छ्राद्धं पितृणां नोप
तिष्ठते॥ तत्रैव संग्रहे॥ पवित्रं ग्रंथिमुत्सृज्य मंडले तु विनिक्षिपेत्। हस्तादीन् क्षालयेद्विद्वान् श
रावादौ तु कुत्रचित्॥ व्यासः॥ तांबूलोद्गिरणं चैव गंडूषोद्गिरणं तथा। कांस्यपात्रे तथा ताम्रे न कु
र्वीत कदाचन। उष्णोदकैर्धान्यचूर्णैः करौ श्मश्रूणि शोधयेत्॥ ॥अथ पिंडदानं॥ तच्चा
र्चनोत्तरमग्नौकरणोत्तरं भोजनोत्तरं विकिरोत्तरं स्वधावाचनोत्तरं विप्रविसर्जनोत्तरं वेति हेमा

स्मृतिषु पक्षा उक्ताः तेषां शाखाभेदेन व्यवस्था॥ प्रेतश्राद्धेषु सर्वत्र अन्येषु भोजनोत्तरमिति चंद्रिकामाध
वौ॥ सर्वत्र भोजनोत्तरमिति बहवः॥ आश्वलायनः॥ भुक्तवत्स्वनाचांतेषु पिंडान्निदध्यादाचांतेष्वेके।
भुक्तवत्स्विति पूर्वनिषेधार्थः॥ साग्निरग्नौकरणे तत्समीपे अन्योग्निर्द्विजसमीपे॥ हेमाद्रौ जातूकर्ण्यः॥ आ
मपात्रं समुद्धृत्य पिंडांस्तत्र प्रदापयेत्॥ प्रसारितभुजांतरमासः॥ अरत्निमात्रमुत्सृज्येति॥ यत्तु तत्रैव॥
सिकताभिर्मृदा वापि वेदीं दक्षिणतो निम्नगेति तदन्यशाखिपरं॥ देवलः॥ ततस्तैरभ्यनुज्ञातो दक्षिणां
दिशमेत्य च॥ चंद्रिकायां॥ पिंडनिर्वपणं कार्यं कुशभावे विचक्षणैः॥ काशैर्वा राजदूर्वाभिः पवित्रैः परिमि
तैः॥ आश्वलायनः॥ स्फ्येन लेखामुल्लिखेदपहता असुरा रक्षांसि वेदिषद इति ताम्भ्युक्ष्य सकृदाच्छिन्नै र
वस्तीर्य प्राचीनावीती लेखां त्रिरुदकेनोपनयेत् शुंधंतां पितरः शुंधंतां पितामहाः शुंधंतां प्रपितामहा इ
ति तस्यां पिंडान्निपृणीयात् असावेतत्त इति पित्रे पितामहाय प्रपितामहाय तत्रैते लेपेन चत्वाम मंत्रान्विति॥ हे
माद्रौ पारस्करः॥ करेणाप्युल्लिखेत्स्येवं न कुशैर्वापि महीं द्विजः॥ वज्रनामा नामैकेन करेण लेखां चाप्यभि
मुखेति वृत्तिः॥ दक्षिणाप्राचीं वेदिमुद्धृत्येत्याप्रस्तंबोक्तेश्च॥ देवलः॥ आवाहयित्वा दर्भाग्रे लेपांस्था
नाकल्पयेत्। तेष्वासीनेषु पात्रेण प्रपच्छेत्सतिलोदकं। प्राचीनेन निमपितृतीर्थेन॥ वायवीये॥
मधुसर्पिस्तिलयुतांस्त्रीन्पिंडान्निर्वपेद्बुधः॥ त्रिस्थलीसेतौ॥ तिलमन्नं च पानीयं धूपं दीपं पयस्त
था। मधुसर्पिः खंडयुक्तं पिंडमष्टांगमुच्यते॥ याज्ञवल्क्यः॥ सर्वमन्नमुपादाय सतिलं दक्षिणामु
खः॥ उच्छिष्टसन्निधौ पिंडान्दद्याद्वै पितृयज्ञवत्। केचित्पिंडेषु माषान्वर्जयंति। माषाः श्राद्धेषु
वैशाखा वर्ज्याः श्वैवाग्निपिंडयोः॥ ब्राह्मणेषु यथा मद्यं तथा माषोऽग्निपिंडयोरिति स्मृत्यर्थसारात्
माषानस्वेन्न देद्यात्पिंडेऽग्नौ च विवर्जयेदिति स्मृतेश्च॥ अत्र मूलं चिंत्यं। हेमाद्रावपि सर्वशब्द
स्य प्रकृतार्थत्वात्सर्वान्नग्रहणमुक्तं॥ अत्र शेषमन्नमनुज्ञाप्य सर्वमेकत्रोद्धृत्योच्छिष्टसमीपे
दर्भेषु त्रींस्त्रीन्पिंडान्दद्यादिति गोभिलसूत्रे सर्वस्मात्प्रकृतादन्नात् पिंडान् मधुतिलान्वित
मिति च शेषनियमात्तदभावे पिंडनिवृत्तिरिति मैथिलवाचस्पतिः॥ तन्न॥ तुषोपवापवत्प
रप्रयुक्तद्रव्यवत्त्वेप्यर्थकर्मत्वाद्गुणानुरोधेन प्रधानात्यागाच्छेषलोपे पिद्रव्यांतरेण कार्यं।
अतो नेयं प्रतिपत्तिः किंतु प्रधानमित्युक्तं प्राक्॥ अन्यथा सपिंडीकरणादौ संयोजनादेः प्रधा
नस्य लोपापत्तेरिति दिक्॥

॥ अथ पिंडप्रमाणं॥ हेमाद्रावंगिराः॥ कपित्थबि
ल्वमात्रान्वा पिंडान्दद्याद्विधानतः॥ कुक्कुटांडप्रमाणान्वामलकैर्वदरैः समानिति॥ तत्रै
व धूम्रः॥ कपित्थस्य प्रमाणेन पिंडं दद्यात्समाहितः॥ तत्समं विकिरं दद्यात्पिंडांते तु षडंगुले॥
अन्येष्विपर्यतो भट्टास्तु॥ एकोद्दिष्टे सपिंडे च कपित्थं तु विधीयते। नारिकेलप्रमाणं तु प्रत्यब्दे
मासिके तथा। तीर्थे दर्शे च संप्राप्ते कुक्कुटांडप्रमाणतः॥ महालये गयाश्राद्धे कुर्यादामलको
पममित्याहुः। कलिकायामाचार्याः॥ पत्न्यस्तु बहवः पिंडास्तत्र बिल्वफलोपमाः। यत्र चैको भवे
त्पिंडस्तत्र स्यात्कर्कुरसन्निभः॥ प्रेतपिंडस्तु दैर्घ्येण द्वादशांगुल उच्यते इति॥ वायवीये॥ पत्नी पिंडं
तु शं मध्यमं त्रिवर्गस्य सहायिनी। हेमाद्रौ लौगाक्षिः॥ महालये गयायां च प्रेतश्राद्धे दशाहिके।
पिंडशब्दप्रयोगः स्यादन्नमन्यत्र कीर्तयेत् शाट्यायनिः॥ अमावेतत्रात्र इत्युक्त्वा ततस्तेन च स्वधानमः

असावित्यत्र संबंधरूपगोत्रादिविशिष्टं पित्रादिनाम संबुध्यंतमुक्त्वा पुनश्चतुर्थ्यंतं तदंते एष पिंड इ
दमन्नं वा स्वधा नमो न ममेति वदेदिति हेमाद्रिः॥ पित्रादिनामाज्ञाने त्वापस्तंबः॥ यदि नामानि न
विद्यात् स्वधा पितृभ्यः पृथिवीषद्भ्य इति प्रथमपिंडं दद्यात् स्वधा पितृभ्योंतरिक्षसद्भ्य इति द्वितीयं।
स्वधा पितृभ्यो दिविषद्भ्य इति तृतीयं। एवं मातामहेषु मातृषु च। बह्वृचानां तूक्तं प्राक्। कलिकायां
स्मृतिः॥ यावद्देवोच्चरेन्मंत्रं तावत्प्राणान्निरोधयेत्। येषां तु गृह्ये दर्शे मातृश्राद्धं पृथगुक्तं तेषां पितृ
भ्यः पश्चिमे मातृभ्यस्तत्पश्चिमे मातामहेभ्यः पिंडदेयमिति शांखायनः। अस्मिन्पक्षे तत्पश्चि
मे मातामहीभ्योपि दद्यादिति हेमाद्रिः। पूर्वासु पितृभ्यो दद्यादपरासु स्त्रीभ्य इति सूत्राच्च। एवं प
त्नीतीर्थे महालयादौ। केचिद्वृद्धौ तु नारीणां पृथक्श्राद्धं महर्षय इति। चतुर्विंशतिमतात्॥
पित्रादिनवदैवत्यं तथा द्वादशदैवतमित्यग्निपुराणे च मातृणां पृथगुक्तम्॥ यत्र वा॥ आ
चार्यगुरुशिष्येभ्यः सखिज्ञातिभ्य एव च। तत्पत्नीभ्यश्च सर्वाभ्यस्तथैव च जलांजलीन्। पिंडां
स्तेभ्यः सदा दद्यात्पृथग्भाद्रपदे नरः। तीर्थेषु चैव सर्वेषु माघमासे मघासु चेति चतुर्विंशतिमते
दौहित्रपत्नदाराश्च ये कनिष्ठाः सहोदराः। निःसंतानमृता ये च तेभ्योप्यत्र प्रदीयते इति। भविष्ये
चैकोद्दिष्टान्युक्तानि तत्रापि तत्पश्चिमे पिंडदानं ज्ञेयम्। येषां न पृथक्तेन सपत्नीकाः पित्राद्यो
वाच्याः। अन्वष्टकागयामातृश्राद्धं चैव मृतेहनि। एकोद्दिष्टं तथा मुक्त्वा स्त्रीषु नान्यत्पृथग्भवे
त् इति शंखोक्तेश्च। मनुः॥ तेषु दर्भेषु तं हस्तं निमृज्याल्लेपभागिनां। हस्तलेपाभावेऽपि हस्तमृ
ज्यादेवेति मेधातिथिः॥ विष्णुः॥ अत्र पितरो मादयध्वमिति दर्भमूले करावघर्षणं। कलिका
यां सुमंतुः॥ एकोद्दिष्टेषु वर्षासु दर्भे लेपो न विद्यते। सपिंडीकरणादौ तु लेपः सर्वत्र शस्यते॥ म
नुः॥ आचम्योदक्परावृत्य त्रिराचम्य शनैरसून्। षडृतूंश्च नमस्कुर्यात्पितॄनेव च मंत्रवत्॥ उद
कं निनयेच्छेषं शनैः पिंडांतिके पुनः। त्रिः प्राणायामं कृत्वेति मेधातिथिः। अमंत्रं प्राणं निरुध्ये
ति कर्काद्याः। मंत्रवद्धृसंतायनः॥ नमो वः पितर इत्याद्यैः शेषं पूर्वावनयनशेषं॥ आश्वलाय
नः॥ निवृत्ताननुमंत्रयेतात्र पितरो मादयध्वं यथाभागमावृषायध्वमिति स्मादुदगावृत्या
यथाशक्ति प्राणं ताहित्वाभिपर्यावृत्यामीमदंत पितरो यथाभागमावृषायिषतेति चरुः प्राण
भक्षं भक्षयेन्नित्यं निनयनमिति। नित्यग्रहणं शेषाभावेपि कुर्यादित्यर्थः॥ शौनकः॥ अथै
षामत्र पितर इत्याद्येनानुमंत्रणं। अमीमदंतेत्याद्येन मंत्रेणाप्यनुमंत्रणं तान्। पिंडशिष्टं चरो
रन्नं किंचिदाघ्राय तत्सृजेत्। प्रक्षाल्याचम्य शुंधंतामित्याद्यैरेवं पूर्ववत्। मंत्रैः पिंडेषु पानीयं
निषिंचेत्पितृतीर्थतः॥ व्यासः॥ अद्भिः प्रक्षाल्य तत्पात्रं प्रतिपिंडं तु पूर्ववत्॥ कृत्वावनेज
नं कुर्यात्पिंडपात्रमधोमुखं। एतत्कात्यायनादीनां॥ आचार्यः। ततः सम्यग्द्विराचम्य नीवीं
विस्रस्य वाग्यतः॥ आश्वलायनः॥ असावभ्यंक्ष्वासावभ्यंक्ष्वेति पिंडेष्वभ्यंजनांजने वा
सो दद्याद्दशामूर्णास्तुकां वा पंचाशद्वर्षे जायाया ऊर्ध्वं स्वलोमैतद्वः पितरो वासो मा नातोन्यत्पि
तरो युङ्ध्वमिति॥ श्राद्धचिंतामणौ॥ ब्राह्मे॥ एतद्वः पितरो वास इति जल्पन्पृथक्पृथ
क्। अमुकामुकगोत्रैतत्तुभ्यं वासः पठेद्बुधः॥ इदं कातीयानां॥ एतद्व इति सूत्राणि प्रति

पिंडमिति तत्सत्वात्॥ हेमाद्रौ ब्राह्मे॥ श्रेष्ठमाहुस्त्रैककुदमंजनं नित्यमेव हि। तैलकं सतिलैभ्यश्च
दद्यादभ्यंजनं हितत्॥ त्रैककुदं सुरमा इति प्रसिद्धम्। अंजनप्राथम्यमापस्तंबादिविषयम्। तत्रैव
व्याघ्रः॥ गंधपुष्पाणि धूपं च दीपं च विनिवेदयेत्॥ देवलः॥ दक्षिणं सर्वभोगांश्च प्रतिपिंडं प्रदा
पयेत्। भक्ष्याण्यपूपान्सूपांश्च व्यंजनान्यशनानि च॥ तत्रैव शंखः॥ यत्किंचित्पच्यते गेहे भक्ष्यं भो
ज्यमगर्हितं अनिवेद्य न भोक्तव्यं पिंडमूले कथंचन। एतत्सव्येनेति केचित्॥ युक्तं त्वपसव्येन॥
मनुः॥ अवजिघ्रेच्च तान्पिंडान्यथान्युप्तान्समाहितः। ततो नमो वः पितर इषे इत्यादिनी यस्या
न॥ मात्स्ये। अथाचांतेषु चाचम्य वारि दद्यात्सकृत्सकृत्। तिलपुष्पाक्षतान्पश्चादक्षय्योदक
मेव च। अत्र दैवे सव्यं पित्र्ये त्वपसव्यमिति कर्कः। परिभाषोक्तवचनात्सव्यमिति युक्तं। अत्र शिवा आ
पः संतु सौमनस्यमस्त्वित्यादिप्रयोगो ज्ञेयः॥ मात्स्ये॥ दत्वाशीः प्रतिगृह्णीयाद्द्विजेभ्यः प्राङ्मुखो बु
धः। अघोराः पितरः संतु संत्वित्युक्ते पुनर्द्विजैः। गोत्रं तथा वर्द्धतां नस्तथेत्युक्तः स तैः पुनः। दातारो
नोभिवर्द्धंतामन्नं चैवेत्युदीरयेत्। स्वस्तिवाचनकं कुर्यात्पिंडानुद्धृत्य भक्तितः। स्वस्तिवाचनात्प्राक्
पात्रचालनं कार्यं॥ हेमाद्रौ बृहस्पतिः॥ भाजनेषु च तिष्ठत्सु स्वस्ति कुर्वंति ये द्विजाः। तदन्नमसुरैर्भु
क्तं निराशैः पितृभिर्गतैः॥ जातूकर्ण्यः॥ पात्राणि चालयेच्छ्राद्धे स्वयं शिष्योथवा सुतः। न स्त्रीभिर्न
च बालेन नासजात्या कथंचन॥ याज्ञवल्क्यः॥ स्वस्तिवाच्यं ततः कुर्यादक्षय्योदकमेव च॥ तत्रैव
रडूणातातपः पितॄणां नामगोत्रेण करे देयं तिलोदकं। प्रत्येकं पितृतीर्थेन। अक्षय्यमिदमस्त्वि
ति। अत्र षष्ठी प्रयुक्ता। तत्रैव नागरखंडे। उत्तानमर्घ्यपात्रं तु कृत्वा दद्याच्च दक्षिणां। हिरण्यं देवता
नां च पितॄणां रजतं तथा॥ ॥बृहस्पतिः॥ तस्मात्पणं काकिणीं वा फलं पुष्पमथापि वा। प्रदद्या
द्दक्षिणां यज्ञे तया सफलो भवेत्॥ अत्र पित्रुद्देशेन दक्षिणादानेऽपसव्यं विप्रोद्देशेन तु सव्यमि
ति माधवः। कालिकायामाचार्यैः दद्याद्यज्ञोपवीत्येव तांबूलं दक्षिणां तथा॥ अत्रिः॥ वदेच्च
नामतो विप्रान्पित्रादिभ्यः स्वधोच्यतां। गोभिलः॥ अघोराः पितरः संत्वित्युक्ते स्वधां वाचयिष्य
इति पृच्छति पितृभ्यः स्वधोच्यतामित्युक्ते अस्तु स्वधेत्युच्यमानो धारां दद्यादूर्जं वहंतीरमृतं घृतमि
ति। आपस्तंबेन तु पुत्रान्पौत्रानभितर्पयंतीरित्यपि परिषेचने मंत्र उक्तः॥ आश्वलायनः॥ अथै
तान्नवाहयेत्परेतन पितरः सोम्यासो गंभीरेभिः पथिभिः पूर्विणेभिः। दत्वा यास्मभ्यं द्रविणेह भद्रं
रयिं च नः सर्ववीरं नियच्छतेति। मात्स्ये॥ वाजेवाज इति जपन्कुशाग्रेण विसर्जयेत्। प्रचेताः॥
स्वस्तिवाच्य ततः कृत्वा पितॄन्पूर्वं विसर्जयेत्॥ आश्वलायनः। अन्नं प्रकीर्योपवीती पास्वधेति वि
सृजेदस्तु स्वधेति वा॥ ब्रह्मवैवर्ते॥ आमावाजेति मंत्रं तु पठित्वा च प्रदक्षिणं। द्वारोपांते ततः कृत्वा
संयतः प्रविशेद्गृहे प्रांजलिश्च ततः प्राह तान्विप्रान्सत्यवादिनः दातारो नोभिवर्द्धंतां अन्नं च न
इतीव हि। एवमस्त्विति ते प्रेयश्चैतं ब्रुवंति समाहिताः। एतन्मंडलदेशे कार्यमिति हेमाद्रिः॥ मनुः॥ दा
तारो नोभिवर्द्धंतां वेदाः संततिरेव च। श्रद्धा च नो मा व्यगमद्बहुदेयं च नोस्त्विति॥ बौधायनः॥ अन्नं
च नो बहु भवेदतिथींश्च लभेमहि॥ याचितारश्च नः संतु मा च याचिष्म कंचन दातारो नोभिवर्द्धंताल
भव्यं याचिद्वमित्याद्यहेन पठित्वा द्विजैः प्रतिवचनं कार्यमिति सुदर्शनभाष्ये॥ स्वादुषंसदस्त्वन्नं प्रकी

येत्राह्मणासः पितरइतिमंत्रद्वयंपठंति॥ शौनकः॥ ब्राह्मणानथनिर्यातान्परीत्यत्रिः प्रदक्षिणं॥ स
स्त्रीकः स्वजनैः सार्द्धंप्रणमेद्बद्धांजलिः॥ कनिष्ठः प्रथमाज्येष्ठश्चरमास्युः प्रदक्षिणे॥ हेमाद्रौबृह
स्पतिः॥ अग्रमेसपत्नीजन्मभवत्यादाभिवंदनात्। अग्रमेवेश्मजाः सर्वेयानानोऽनुयह्याद्विवा। पत्र
शाकादिदानेनक्लेशितासूपमीदृशाः। तत्क्लेशजातंचित्तानुविसृज्यक्षंतुमर्हथ॥ प्रचेताः॥ विसृजे
द्भक्तिसंयुक्तः सीमांतंचाप्यनुव्रजेत्॥ ॥अथपिंडप्रतिपत्तिः॥ हेमाद्रौब्राह्मे॥ पिंडमग्नौ
सदादद्याद्भोगार्थंप्रथमंनरः। पत्न्यैप्रजार्थीदद्याद्वैमध्यमंमंत्रपूर्वकं। उत्तमांगतिमन्विच्छन्गोषु
नित्यंप्रयच्छति। अन्नप्रज्ञायशःकीर्तिमप्सुपिंडंप्रवेशयेत्। प्रार्थयेद्दीर्घमायुर्वावायसेभ्यःप्रय
च्छति। आकाशंगमयेद्वाप्सुस्थितोवादक्षिणामुखः॥ आश्वलायनः॥ वीरंमेदत्तपितरइतिपिंड
नांमध्यमंपत्नीप्राशयेत्। आधत्तपितरोगर्भंकुमारंपुष्करस्रजं। यथायमरपाअसदितिमंत्रोदत्तस्याधे
नादानेद्वितीयेनप्राशने॥ आपस्तंबस्तुदानेमंत्रमाह॥ अपांत्वौषधीनांरसंप्राशयामि। भूतकृतंगर्भं
धत्स्वेतिमध्यमंपत्न्यैप्रयच्छतीतिप्राशनेपियथेहपुरुषोआसदितितदीयःपाठः॥ अन्येषांतत्रव्या
ख्यायांक्षेपः॥ तत्रैवशंखः॥ पत्नीवामध्यमंपिंडमश्नीयाद्दानैर्वान्विता॥ कलिकायांछागलेयः॥ प्रा
चीनावीतमामंत्र्यपत्नीपिंडोविभज्यते। प्रतिपत्त्यस्यमंत्रस्यकर्तव्याप्रतिरन्ततु॥ माधवीयेविष्णुधर्मे
तीर्थश्राद्धेसदापिंडान्क्षिपेत्तीर्थेसमाहितः॥ याज्ञवल्क्यः॥ पिंडांस्तुगोजविप्रेभ्योदद्यादग्नौज
लेपिवा। प्रक्षिपेत्सत्सुविप्रेषुद्विजोच्छिष्टंनमार्जयेत्॥ गवेअजायब्राह्मणायवातदर्थिनेपिंडा
न्दद्यात्। अग्नौअगाधेजलेवाप्रक्षिपेत्। विप्रेषुसत्सुभोजनदेशावस्थितेषुद्विजोच्छिष्टंनमा
र्जयेत्॥ नोद्वासयेत्॥ बृहस्पतिः॥ अन्यदेशगतापत्नीरोगिणीगर्भिणीतथा। तदान्नंजीर्णं
वृषभंछागोवाभोक्तुमर्हति॥ ॥अथपिंडोपघाते हेमाद्रौप्रायश्चित्तकांडेदेवलः॥
श्वशृगालखरैःपिंडःस्पृष्टोमित्तःप्रमादतः॥ कर्तुःपुण्यनाशःस्यात्तेनस्तेनोपसर्पति॥ जात
कर्ण्यः॥ पूर्वेश्वाकांतेतद्दोषपरिहारार्थंप्राजापत्यंप्रकल्पयेत्। पुनःस्नात्वातदाकर्त्तापिंडंकुर्या
द्यथाविधि॥ काकस्पर्शेनदोषः॥ पिंडोपघातंप्रक्रम्य। धनस्यचविनाशःस्यात्काकस्प
र्शादिकंविनेति तत्रैवश्लोकेगौतमोक्तेः। स्मृतिदर्पणेऽत्रिः॥ मार्जारमूषकस्पर्शेपिंडेचविद
लीकृते। पुनःपिंडःप्रदातव्यःकालेनपाकेनतत्क्षणात्॥ बौधायनः॥ श्वचांडालादिभिःस्पृष्टेपि
डोपघ्नुपहन्यते। प्राजापत्यंचरित्वाथपुनःपिंडंसमाचरेत्॥ वोपदेवोप्येवमाह॥ दिनांतरेतुआमा
न्नमात्रं। शेषप्रतिपत्तित्वेनपिंडदानेमानाभावादितिमैथिलाः॥ तन्न॥ सपिंडीकरणादौशे
षनाशेसंयोजनादिलोपापत्तेः॥ तेनवचनाद्भ्रमनेरत्वात्रापितन्मात्रपिंडदानापत्तिः॥ अतएव
नवनक्तंश्राद्धंकुर्वीतारब्धेचाभोजनसमापनादित्यापस्तंबसूत्रे। रात्रौभोजनमात्रंपूर्वेद्युःका
र्यं श्राद्धसमाप्तिस्तुपरदिनएवसमाप्तिपर्यंतंकर्तुरुपवासश्चेतिहरदत्तेनव्याख्यातं। तस्मा
माकांतरेणपिंडदानमात्रंकार्यं॥ ॥अथपिंडनिषिद्धकालः॥ स्वयमायेणमहाल
याहिनिर्णयेपूर्वमुक्तः हेमाद्रौवृद्धपराशरः॥ युगादिषुमघायांचविषुवत्ययनेतथा। भरण्यां
पुचकुर्वीतपिंडनिर्वपणंनहि। स्मृतिरत्नावल्यां॥ पुत्रेजातेव्यतीपातेग्रहणेचंद्रसूर्ययोः॥

एष्टव्याबहवःपुत्राःशीलवंतोगुणान्विताः तेषांतुसमवेतानांयद्येकोपिगयांव्रजेत्॥ तारितास्मो
यंतेनसयातिपरमांगतिमिति॥ हेमाद्रौकौर्मेंऽपि॥ काम्येपिदानहोमादावन्यनुसत्येवाधिकारः
इत्याह्यजपादौतांविनापि॥ अपरार्केपैठीनसिः॥ विभक्तैस्तुपृथक्कार्यंप्रतिसंवत्सरादिकं
एकेनैवाविभक्तेषुकृतेसर्वैस्तुतत्कृतं।संवत्सराद्यानिमासिकान्येकत्रैवतद्दाहलघुहारीतः
सपिंडीकरणांतानियानिश्राद्धानिषोडश।पृथङ्नैवसुताःकुर्युःपृथक्द्रव्याअपिक्वचित्।सपिं
डनंमासिकोपलक्षणं।अर्वाक्संवत्सराज्ज्येष्ठःश्राद्धंकुर्यात्समेत्यतु।ऊर्ध्वंसपिंडीकरणात्सर्वैः
युःपृथक्पृथगितिव्यासोक्तेः।उशनाःनवश्राद्धंसपिंडत्वंश्राद्धान्यपिचषोडश।एकेनैवतुकार्या
णिसविभक्तधनेष्वपि मघात्रयोदशीश्राद्धंत्वविभक्तानामपिपृथगित्युक्तंप्राक्।यत्तुवृद्धवसि
ष्ठः।मासिकंचवृषोत्सर्गंसपिंडीकरणंतथा।ज्येष्ठेनैवतुकर्तव्यमाब्दिकंप्रथमंतथेति।तन्निर्मू
लं।वृद्धवसिष्ठे।नवश्राद्धंसहदद्युः॥

॥अथतीर्थश्राद्धं॥

तत्रयद्यप्यस्मत्पितामहकृतत्रिस्थलीसेतुरेवजागर्तितथापिकिंचिदुच्यते।तत्रयात्रायां।सह
स्निवोसपत्नीकोगच्छेत्तीर्थानिसंयतः।प्रायश्चित्तीव्रजेत्तीर्थंपत्नीविरहितोपिवा।यजेषुनधि
कारीचपश्चवामंत्रसाधकइतिकौर्मवचनात्साग्नेःसपत्नीकस्यैवाधिकारः।भारते।ब्राह्मणः
क्षत्रियोवैश्यःशूद्रोवाराजसत्तम नवियोनिंव्रजंत्येतेस्नाताःतीर्थेमहात्मनः।स्कांदेविध
वाधर्मेषु।स्नानंदानंतीर्थयात्रांविष्णोर्नामग्रहंमुहुः।एतत्पुत्राद्यनुमत्यैवासधवायाःपत्या
सहैवेतिप्रागुक्तं।काशीखंडे।मातुःपितुःक्षेत्रमतात्तथास्थिसुतस्तुकुर्यात्खलुतीर्थयात्रां॥
तद्विधिःस्कांदे।तीर्थयात्रांचिकीर्षुःप्राग्विधायोपोषणंगृहे॥ गणेशंचपितृन्विप्रान्साधून्
शक्त्याप्रपूज्यच।कृतपारणकोहृष्टोगच्छेन्नियमधृक्पुनः। आगत्याभ्यर्च्यचपितृन्यथोक्तफल
भाग्भवेत् उपवासात्प्राक्मुंडनंचकार्यं।प्रयागेतीर्थयात्रायांपितृमातृवियोगतः कचानांव
पनंकुर्यान्नवृथानविकचोभवेदितिविष्णूक्तेः।प्रायश्चित्तार्थयात्रायांगयायांचैतदित्यके।केचि
त्तुहेमाद्रौमहाभारते।केशश्मश्रुनखादीनांवपनंनचशस्यते अतोनकार्यंवपनंगयाश्राद्धार्थि
नासदा।येभारतेस्मिन्पितृकर्मतत्पराःसंधार्यकेशानतिभक्तिभाविताः।ऋणक्षयार्थंपितृ
तीर्थमागतास्तेषामृणंसंक्षयमेष्यतिध्रुवमितिनिषेधात्।गयायात्रांगंवपनंनकार्यमित्याहुः
वस्तुतस्तु॥ गयाधिकरणकस्यैवायंनिषेधः।नतुयात्रांगस्य।श्राद्धार्थिनेत्युक्तेः।विशाला
विरजंगयाभिन्नत्वेनैकवाक्यत्वाच्च।श्राद्धंचपरान्नवद्धादशदैवतंवाघृतेनकार्यं॥ गच्छेद्देशां
तरंयस्तुश्राद्धंकुर्यात्ससर्पिषेतिविष्णुपुराणात्।यात्रांगवृद्धिश्राद्धोक्तेश्च।श्राद्धंचपारणादि
नेएव।उपोष्यरजनीमेकांप्रातःश्राद्धंविधायच।गणेशंब्राह्मणान्नत्वाभुक्त्वाप्रस्थितवान्सु
धीरितिस्कांदलिंगात्।गौडनिबंधेगौतमः तीर्थयात्रासमारंभेतीर्थात्प्रत्यागमेपिच।वृद्धि
श्राद्धंप्रकुर्वीतबहुसर्पिःसमन्वितं।वृद्धिपदंतद्धर्मार्थम्।श्राद्धोत्तरंयात्रासंकल्पइतिभट्टाः॥वा
चस्पतौ॥ उद्यतस्तुगयांगंतुंश्राद्धंकृत्वाविधानतः।विधायकार्पटीवेषंग्रामंकृत्वाप्रदक्षिणं।
ततोग्रामांतरंगत्वाश्राद्धशेषस्यभोजनं।घृतस्यभोजनं।तच्चक्रोशमध्ये।श्राद्धोत्तरंक्रोशगमन

कल्पतरुः पृथ्वीचंद्रोदयश्च। दद्यात्त्रिभ्यः परेभ्यस्तु जीवेच्चेत्रितयं यदीति मनूक्तेः। सर्वत्र विकल्पाः स च देशाचाराद्व्यवतिष्ठत इत्याहुः। सुदर्शनभाष्ये तु मासिश्राद्धं जीवत्पित्रादिनाप्युल्कमप्युत्पित्रादि नैव कार्यमेवेत्युक्तं। मदनरत्ने तु॥ अष्टकादिषु संक्रांतौ मन्वादिषु युगादिषु। चंद्रसूर्यग्रहे पाते त्वेकपाद्व्यपोगतः। जीवत्पिता नैव कुर्याच्छ्राद्धं काम्यं तथाखिलं। अन्ये विशेषाः श्रीपितृचरणजीवत्पितृकनिर्णये भट्टकृतत्रिस्थलीसेतौ ज्ञेयाः॥ इति भट्टकमलाकरकृते निर्णयसिंधौ जीवत्पित्रादिश्राद्धं॥

॥अथ विभक्ताविभक्तनिर्णयः॥

पृथ्वीचंद्रोदये मरीचिः॥ बहवः स्युर्यदा पुत्राः पितुरेकत्रवासिनः। सर्वेषां तु यत्कृतं द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्। ज्येष्ठस्य कर्तृत्वेपि सर्वे फलभागिन इत्यर्थः। तेन यमब्रह्मचर्यादिनियमास्ते फलिसंस्कारत्वात्सर्वैः कार्याः॥ एवं संसृष्टिनामपि। तुल्यत्वात्। मिताक्षरायां नारदः। भ्रातॄणामविभक्तानामेको धर्मः प्रवर्तते। विभागे सति धर्मोपि भवेत्तेषां पृथक्पृथक्। बृहस्पतिरपि॥ एकपाकेन वसतां पितृदेवद्विजार्चनं। एकं भवेद्विभक्तानां तदेव स्याद्गृहेगृहे। अत्र यद्यपि अविशेषेण ब्रह्मयज्ञसंध्यादिष्वपि विभक्तानां पृथक्त्वनिषेधः प्राप्नोति। तथापि द्रव्यसाध्यश्राद्धवैश्वदेवादिविषयः॥ द्रव्यस्यानेकस्वामिकत्वेनैकस्य स्वाम्येनाधिकारात्। यानि तु द्रव्यसाध्यानि मंत्रजपोपवाससंध्याब्रह्मयज्ञपारायणादीनि नित्यनैमित्तिककाम्यानि तेषु पृथगेवाधिकारः द्रव्यसाध्याभावे अनुमत्यनपेक्षणात्। द्रव्येण चाविभक्तेनेत्यस्याविषयत्वात्। पृथगप्येकपाकानां ब्रह्मयज्ञाद्विजन्मनां अग्निहोत्रं सुरार्चा च संध्या नित्यं भवेत्तथेति। प्रयोगपारिजाते आश्वलायनोक्तेः। अग्निहोत्रशब्देनाग्निसाध्यश्रौतस्मार्तनित्यकर्मपरः। तेष्वप्यन्यानुमत्यैवाधिकारेण न्यायसाम्यात्। पितृश्राद्धादिषु तुल्यफलेषु नित्येषु अनुमतिं विनाप्येकस्याधिकारः। एकोपि स्थावरे कुर्याद्दानाधमनविक्रयं आपत्काले कुटुंबार्थे धर्मार्थे च विशेषतः॥ इति वचनात्। धर्मार्थेऽवश्यकर्तव्ये पितृश्राद्धादाविति विज्ञानेश्वरः। केचित्तु विभक्तानामपि पृथक्पाकत्वे देशांतरे च दार्शिकादिकयोः पृथक्त्वमाहुः। भ्रातॄणामविभक्तानां पृथक्पाको भवेद्यदि। वैश्वदेवादिकं श्राद्धं कुर्युस्ते वै पृथक्पृथगिति हारीतोक्तेः। अविभक्तेन पुत्रेण पितृमेधे मृताहनि। देशांतरे पृथक्कुर्युर्दर्शश्राद्धं तथैव चेति यमोक्तेश्चेति तत्र मूलं चिंत्यं। तदयमर्थः॥ पंचमहायज्ञमध्ये देवभूतपितृमनुष्ययज्ञानन्यानुमत्या ज्येष्ठ एव कुर्यात्। होमाग्निदानरहितं न भोक्तव्यं कदाचन। अविभक्तेषु संसृष्टेष्वेकेनापि कृतं कृतमिति व्यासोक्तेश्च॥ यस्य तु ज्येष्ठेनाकृते वैश्वदेवे न सिध्येत्तत्स्वीमग्नौ किंचित्क्षिप्त्वा भोक्तव्यं। यस्य त्वेषामग्निर्नोत्पन्नसिद्धेत्स नियुक्तमग्नौ कृत्वा ब्राह्मणाय दत्त्वा भुंजीतेत्यविभक्ताधिकारे पृथ्वीचंद्रोदये गोभिलोक्तेः। आश्वलायनस्तु॥ पाकपार्थकोपृथक्त्वं नदेकत्वे पृथक्त्वमाह। वसतामेकपाकेन विभक्तानामपि प्रभुः एकस्तु चतुरो यज्ञान्कुर्याद्बाग्यज्ञपूर्वकान्॥ अविभक्ता विभक्ता वा पृथक्पाका द्विजातयः। कुर्युः पृथक्पृथग्यज्ञान्भोजनात्प्राग्दिने दिने इति। ब्रह्मयज्ञसंध्यास्नानतर्पणादि तूक्तहेतोः पृथगेव देवपूजा तूक्तवचनद्वयादेकत्र पृथग्वा॥ दर्शमहालयश्राद्धादि त्वेकस्यैव तीर्थश्राद्धाद्यपि प्रागयत्तस्त्वेषामविभक्तानां प्राप्तावेकस्यैव भेदेन प्राप्तौ भिन्नम् गयाश्राद्धेप्येवं य

एष्टव्याबहवःपुत्राःशीलवंतोगुणान्विताः तेषांतुसमवेतानांयद्येकोपिगयांव्रजेत्॥ तारितास्मे
यंतेनसयातिपरमांगतिमिति॥ हेमाद्रौकौर्मोक्तेः॥ काम्येपिदानहोमादावत्युत्सत्यैवाधिकारः
इत्यासाध्यजपादौतांविनापि॥ अपरार्केपैठीनसिः॥ विभक्तास्तुपृथक्कुर्युःप्रतिसंवत्सरादि
एकेनैवाविभक्तेषुकृतेसर्वैस्तुतत्कृतं। संवत्सरात्पूर्वंतुमासिकान्येकत्रैवतदाहलघुहारीतः
सपिंडीकरणांतानियानिश्राद्धानिषोडश। पृथङ्नैवसुताःकुर्युःपृथक्द्रव्याअपिक्वचित्।सपि
डनमासिकोपलक्षणं। अर्वाक्संवत्सराज्ज्येष्ठःश्राद्धंकुर्यात्समेत्यतु। ऊर्ध्वंसपिंडीकरणात्सर्वेकु
र्युःपृथक्पृथगितिव्यासोक्तेः। उशनाः नवश्राद्धंसपिंडत्वंश्राद्धान्यपिचषोडश। एकेनैवतुकार्य
ाणिसंविभक्तधनेष्वपि मघात्रयोदशीश्राद्धंत्वविभक्तानामपिपृथगित्युक्तंप्राक्। यत्तुवृद्धवसि
ष्ठः। मासिकंचवृषोत्सर्गंसपिंडीकरणंतथा। ज्येष्ठेनैवतुकर्तव्यमाब्दिकंप्रथमंतथेति। तन्निर्मू
लं। वह्वृचपरिशिष्टे। नवश्राद्धंसहदद्युः॥

॥अथतीर्थश्राद्धं॥

तत्रयद्यप्यस्मत्पितामहकृतत्रिस्थलीसेतुरेवजागर्तितथापिकिंचिदुच्यते। तत्रयात्रायां। साह
ग्निर्वासपत्नीकोगच्छेत्तीर्थानिसंयतः। प्रायश्चित्तीव्रजेत्तीर्थंपत्नीविरहितोपिवा। पत्नीचनधि
कारीचपश्चवामत्रसाधकइतिकौर्मवचनात्साग्नेःसपत्नीकस्यैवाधिकारः। भारते। ब्राह्मणः
क्षत्रियोवैश्यःशूद्रोवाराजसत्तम नवियोनिंव्रजंत्येतेस्नाताःतीर्थेमहात्मनः। स्कांदेविध
वाधर्मेषु। स्नानंदानंतीर्थयात्रांविष्णोर्नामग्रहंमुहुः। एतत्पुत्राद्यनुमत्यैवासधवायाःपत्या
सहैवेतिप्रागुक्तं। काशीखंडे। मातुःपितुःक्षेत्रमनास्तथास्थिसुतस्तुकुर्यात्खलुतीर्थयात्रां॥
तद्विधिःस्कांदे। तीर्थयात्रांचिकीर्षुःप्राग्विधायोपोषणंगृहे॥ गणेशंचपितॄन्विप्रान्साधून्
शक्त्याप्रपूज्यच। कृतपारणकोहृष्टोगच्छेन्नियमधृक्पुनः। आगत्याभ्यर्च्यचपितॄन्यथोक्तफल
भाग्भवेत् उपवासात्पाङ्मुंडनंचकार्यं। प्रयागेतीर्थयात्रायांपितृमातृवियोगतः। कचानांव
पनंकुर्यान्नवृथानविकचोभवेदितिविष्णूक्तेः। प्रायश्चित्तार्थयात्रायांगयायांचैतदित्यन्ये। केचि
त्तुहेमाद्रौमहाभारते। केशश्मश्रुनखादीनांवपनंनचशस्यते अतोनकार्यंवपनंगयाश्राद्धार्थि
नासदा। येभारतेस्मिन्पितृकर्मतत्पराःसंधार्यकेशानतिभक्तिभाविताः। ऋणात्क्षयार्थंपितृ
तीर्थमागतास्तेषामृणंसंक्षयमेष्यतिध्रुवमितिनिषेधात्। गयायात्रांगवपनंनकार्यमित्याहुः
वस्तुतस्तु॥ गयाधिकरणकस्यैवायंनिषेधः। नतुयात्रांगस्य॥ श्राद्धार्थिनेत्युक्तेः। विशालां
विरजांगयामित्यनेनैकवाक्यत्वाच्च। श्राद्धंचपायसेनचरुणादशदेवतंवाघृतेनकार्यं॥ गत्वादेशां
तरंतुश्राद्धंकुर्यात्ससर्पिषेतिविष्णुपुराणात्। यात्रांगवृद्धिश्राद्धोक्तेश्च। श्राद्धंचपारणादि
नेएव। उपोष्यरजनीमेकांप्रातःश्राद्धंविधायच। गणेशंब्राह्मणान्नत्वाभुक्त्वाप्रस्थितवान्सु
धीरितिस्कांदलिंगात्। गौडनिबंधेगौतमः तीर्थयात्रासमारंभेतीर्थात्प्रत्यागमेपिच। वृद्धि
श्राद्धंप्रकुर्वीतबहुसर्पिःसमन्वितं। वृद्धिपदंतद्धर्मार्थम्। श्राद्धोत्तरंयात्रासंकल्पइतिभट्टः॥ वा
पदीपे॥ उद्यतस्तुगयांगंतुंश्राद्धंकृत्वाविधानतः। विधायकार्पटीवेषंग्रामस्यात्प्रदक्षिणं।
ततोग्रामांतरंगत्वाश्राद्धशेषस्यभोजनं। घृतस्यभोजनं। तच्चक्रोशमध्ये। श्राद्धोत्तरंक्रोशगमन

निषेधात् ततः प्रतिदिनं गच्छन्प्रतिग्रहविवर्जितः। गयायामेवैतन्नान्यत्रेति केचित्। हेमाद्रिस्तु
गयायां श्राद्धदिने एवमस्यान्नं तीर्थांतरे तु श्राद्धोत्तरदिने इत्याह। प्रभासखंडे। पश्चात्मकोरच्छ
त्या तीर्थयात्रां नरेश्वरः। स्वकीयद्रव्ययानाभ्यां तस्य पुण्यं चतुर्गुणं। यात्रामध्ये आशौचे रजस्वला
शुद्धिपर्यंतं स्थित्वा तदंते गच्छेत्। मार्गे वैषम्ये तु दोषः। यात्रामध्ये तीर्थांतरप्राप्तौ श्राद्धादिकार्यमेव
वाराणस्यां थं गते तु मुंडनोपवासादि न कार्यमिति प्रयोगसेतौ भट्टाः। वस्तुतस्तु तत्रापि मुंडनोपवास
श्राद्धादिकार्यं। अन्यतीर्थफलं तस्य प्रसंगेन गच्छतीति शास्त्रोक्तेः॥ स्कांदे। द्विभोजनं तु तीर्थेषु ह
रेत्तीर्थफलं स्वयं। वाराणस्यां तथा भागान्हंति सर्वं प्रतिग्रहः॥ यानमर्धं चतुर्थांशं छत्रोपानहमेव
च न्यूनमेकं पादांतरं॥ अत्र नदीषु विशेषः॥ मार्गे नरा नदीः प्राप्य स्नानादि पस्पारतः अर्वागेव सरस्व
त्या एष मार्गगतो विधिः। यस्तु पितॄंस्तर्पयित्वा तु नदीं तरति यो नरः तस्यासृक्पानकामास्ते भवंति
भृशं दुःखिता इति तत्सरस्वतीपरं॥ शंखः॥ तीर्थं प्राप्यानुषंगेण स्नानं तीर्थे समाचरेत् स्नानजं
फलमाप्नोति तीर्थयात्राकृतं न तु। सएव॥ न त्वंवतीमतिक्रामेदनवसित्वा तीर्थमाप्नोतु प्रभासखंडे।
यानानि तु परित्यज्य भाव्यं पादचारिभिः। लुंठित्वा लोडनीतस्तत्कृत्वा कार्पटिकाकृतिं। कृत्वेतिटहान्नि
गमसमये कार्योरदं। प्रथमं चालये तीर्थं प्रणवेन जलं शुचिः। अवगाह्य ततः स्नायाद्यथावन्मंत्रयो
गतः मंत्रश्च प्रभासखंडे॥ ॐ नमो देवदेवाय शितिकंठाय दंडिने रुद्राय चापहस्ताय चक्रिणे वेध
से नमः सरस्वती च सावित्री वेदमाता गरीयसी। सन्निधात्री भवत्वत्र तीर्थे पापप्रणाशिनी॥ म
न्त्रवत्स्नानं च वपनोत्तरं कार्यं। पूर्वं मावाहनं तीर्थे मुंडनं तदनंतरं ततः स्नानादिकं कुर्यात्पश्चाच्छ्राद्धं
समाचरेदित्युक्तेः। यत्तु गत्वा स्नानं प्रकुर्वीत वपनं तदनंतरमिति। तन्मुशलस्नानपरं। तीर्थोपवास
काशीखंडे॥ तीर्थोपवासः कर्तव्यः शिरसो मुंडनं तथा उपवासेन तत्रैवोक्तं। यद्दिने तीर्थप्राप्तिः स्या
त्तदह्नः पूर्ववासरे। उपवासः प्रकर्तव्यः प्राप्ते न्हि श्राद्धदो भवेत्। अत्र उपवासं ततः कुर्यात्तस्मिन्न
हनि सुअन इति। प्राप्तिदिने पुष्पवासोक्तो विकल्पः। मुंडनं तु स्कांदे देवलो मुंडनं चोपवासं च सर्व
तीर्थेष्वयं विधिः। वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयां। विरजं लोणारं॥ प्रसिद्धमहाती
र्थपरः शर्वतीर्थशब्दः अत्र विशेषः स्मृत्यंतरे। ऊर्ध्वं पक्षाद्द्विमासाद्वा तु न तीर्थं व्रजे यदि मुंडनं
चोपवासं च ततो यत्नेन कारयेत्। तदानंतहूपशलमापश्चिमश्नेद्विजेतिवापाठः। प्रयागे प्रति
मां तु योजनत्रयमिष्यते क्षौरं कृत्वा तु विधिवत्ततः स्नायात्सितासिते। अपरार्के स्कांदे॥ उदक्
ले भास्करो वावपनं कारयेत्सुधीः केशश्मश्रुलोमनखान्युदकसंस्थानि वापयेत्। इदं प्रयागे
स्थवानामपि सफलं भवतीति भट्टाः। युक्तं तु सर्वान् केशान् समुद्धृत्य छेदयेदंगुलद्वयं। एवमेव
हि नारीणां शस्यते वपनं क्रियेति॥ तच्चाकृतचूडानां न कार्यमिति केचित्। तन्न तु नैमित्तिकत्वात्पि
त्रादिमृतवत्कार्यमेवेति। तदपि प्रयागे नित्यं नान्यत्र। तच्च पतिमित्र्यापि अनुसंधेयं कार्यं
न्यदा। कृतोपस्य शिखावर्जं अनुसंधिं तु वापयेदिति स्मृतेः। इदं जीवत्पितृकेतरविषयं। विना तीर्थं कार्यं
तत्र मुंडनं पिंडदानं चेति दक्षवचनेन निषेधः। विना तीर्थं विवाहयज्ञमातापित्रोर्मृतिं विना। यो वा
पयति लोमानि स पुत्रः पितृघातकः इति स्मृत्यंतरसंकोचात्॥ तदपि प्रयागे प्रतिमात्रमन्यतीर्थे

अथयात्रायामेवेतिशिष्टाः॥ ततः स्नानं॥ एतदर्थंतु मार्कंडेयपुराणे॥ मातरंपितरंजायांभ्रातरंसुहृ
दंगुरुं यमुद्दिश्यनिमज्जेत अष्टमांशंलभेत्तुसः। पैठीनसिः॥ प्रतिकृतिंकुशमयींतीर्थवारिणिमज्ज
येत्। मज्जयेच्चयमुद्दिश्यसोऽष्टभागफलंलभेत्। ततस्तर्पणंश्राद्धं॥ पृथ्वीचंद्रोदयेब्रह्मदेवीपुरा
णकाशीखंडादिषु॥ अकालेऽप्यथवाकालेतीर्थश्राद्धंचतर्पणं अविलंबेनकर्तव्यंनैववि
घ्नंसमाचरेत्॥ मात्स्ये॥ पितॄणांचैवतर्पणमितितुर्यपादः। तत्रदेवतामहालयनिर्णयेप्रागुक्ताः
शंखदेवलौ॥ तीर्थद्रव्योपपत्तौचनकालमवधारयेत्। पात्रंचब्राह्मणंप्राप्यसद्यःश्राद्धंसमा
चरेत्। हारीतः दिवावायदिवारात्रौभुक्तोवायोबिनोपिवा नकालनियमस्तत्रगंगांप्राप्यस
रिद्वरां भारते॥ भुक्तोवाप्यथवाभुक्तोरात्रौवायदिवादिवा पर्वकालेयथाकालेशुचिर्वाप्य
थवाशुचिः यदेवदृश्यतेतत्रनदीचित्रियथाप्रिये॥ ग्रामंदर्शनंतस्मान्नकालस्तत्रकारणं
आशौचेपिकार्यं॥ विवाहदुर्गयज्ञेषुयात्रायांतीर्थकर्मणि। नतत्रसूतकंतद्वत्कर्मयज्ञादि
कारयेदिति पैठीनसिस्मृतेः॥ तदानीमकरणेत्वाशौचांतएवकुर्यात्। प्रभासखंडे॥ नवारंन
चनक्षत्रंनकालस्तत्रकारणं। यदेवदृश्यतेतीर्थंतदापर्वसहस्रकं मलमासेपिकार्यं नित्य
नैमित्तिकेकुर्यात्प्रयतःसन्मलिम्लुचे तीर्थश्राद्धंगजच्छायांप्रेतश्राद्धंतथैवचेतिबृहस्प
तिस्मृतेः। एतच्चाशौचेकृतभोजनस्यरात्रौस्नानश्राद्धादिकमाकस्मिकतीर्थयात्रायांहेम
श्राद्धविषयग्रहणादिवत् नतुबुद्धिपूर्वमाशौचादौतीर्थयात्रापिकार्या। मलमासेतुमासद्वयेती
र्थश्राद्धंकार्यमिति। चंद्रिकायां देवीपुराणे श्राद्धंचतत्रकर्तव्यमर्घ्यावाहनवर्जितं हेमाद्रौ॥
अर्घ्यमावाहनंचैवद्विजांगुष्ठनिवेशनं तृप्तिप्रश्नंचविकिरंतीर्थश्राद्धेविवर्जयेत्॥ भविष्ये॥
आवाहनेविसृष्टिश्चतत्रतेषांनविद्यते। आवाहनंनतीर्थेस्यान्नार्घ्यदानंतथाभवेत्। आहूताः
पितरस्तीर्थेकृतार्घ्याःसन्निवेशतः अग्नौकरणंचनेति रत्नावल्यां। अत्रषड्दैवतश्राद्धेपिमात्रा
दीनांपिंडमात्रंदेयं हविःशेषंततोमुष्टिमादायैकैकमादृतः। क्रमशःपितृपत्नीनांपिंडनिर्वप
णंचरेदिति तीर्थोपक्रमेदेवलोक्तेरितिपृथ्वीचंद्रः। ततःसामान्यपिंडंदद्यात्। ततःपिंडमुपा
दायहविषःसंस्कृतस्यच ज्ञातिवर्गस्यसर्वस्यसामान्यपिंडमुत्सृजेत्। इतितेनैवोक्तेः। पाद्मे॥ ती
र्थश्राद्धंप्रकुर्वीतपक्वान्नेनविशेषतः आमान्नेनहिरण्येनकंदमूलफलैरपि। पिंडद्रव्याणि
देवीपुराणे। हेमाद्रौब्राह्मे॥ सक्तुभिःपिंडदानंचसंयावैःपायसेनवा कर्तव्यमृषिभिःप्रोक्तंपिंड
केनगुडेनवा। पिंडानांतीर्थेप्रक्षेपश्च। नान्याप्रतिपत्तिरित्युक्तंप्राक्। एतच्चविधवयाऽपुत्रया
कार्यं। नसपुत्रयेत्युक्तंप्राक्। सपुत्रयानकर्तव्यंभर्तुःश्राद्धंकदाचनेतिस्मृतेश्च। अनुपनीतेना
पिकार्यं। एतच्चानुपनीतोपिकुर्यात्सर्वेषुपर्वस्वितिपाद्मेतीर्थश्राद्धमुपक्रम्योक्तेः॥ एतज्जीवत्पि
तृकेणापिकार्यमित्युक्तंप्राक्। यतिनातुनकार्यं। नकुर्यात्सूतकंभिक्षुःश्राद्धपिंडोदकक्रियां।
त्यक्तंसन्यासयोगेनगृहस्थधर्मादिकंव्रतं। गोत्रादिचरणंसर्वंपितृमातृकुलंधनमितिस्मृतेः॥
गयायांसूक्तंवायवीये। दंडंप्रदर्शयेद्भिक्षुर्गयांगत्वानपिंडदः। दंडंस्पृष्ट्वाविष्णुपदेपितृभिः
सहमुच्यते। गयायांमुंडपृष्ठेचकूपेयूपेवटेतथा दंडंप्रदर्शयन्भिक्षुःपितृभिःसहमुच्यते॥

कल्पतरौप्रभासखंडे॥ तीर्थेचेत्तुनिरुद्धानिब्राह्मणोरंतिदेवलः दर्शाशमर्जितंद्यादेवंकुर्वन्न हीयते इतिविशेषविशेषांतराणिभट्टकृतत्रिस्थलीसेतौज्ञेयानीतिदिक्॥ इतितीर्थश्राद्धविधिः

॥अथाशौचनिर्णयपरिच्छेदःप्रारंभः॥०

श्रीगणेशायनमः॥ अथाशौचं॥ नारायणात्मजश्रीमद्रामकृष्णस्यसूनुना कमलाकरसंज्ञेनाशौचंनिर्णीयतेधुना॥ मरीचिः आचतुर्थाद्भवेत्स्रावः पातः पंचमषष्ठयोः। अतऊर्ध्वंप्रसूतिःस्याद्दशाहंसूतकंभवेत्। स्रावेमातुस्त्रिरात्रंस्यात्सपिंडाशौचवर्जनं पातेमातुर्यथामासंसपिंडानांदिनत्रयं। अत्रसर्वत्रमूलंमिताक्षरादौज्ञेयं। अत्रमासत्रयेत्रिरात्रंस्यादित्यनुवादः। रजस्वलात्वेनैवतत्सिद्धेः। यद्यप्यनेनचतुर्थमासेत्रिरात्रंप्राप्तंतथापिमरणात्सार्धंनरंस्राव जंभेस्रावोभवेद्यदि तदामाससमैस्तासांदिवसैःशुद्धिरिष्यते। इत्यादिपुराणात्। रात्रिभिर्मासतुल्याभिर्गर्भस्रावेविशुध्यतीतिमनूक्तेः। गर्भस्रावेयथामासमचिरेतूत्तमेत्र्यहइतिमरीच्युक्तेश्चचतुरात्रंज्ञेयं। अचिरेत्रिमासमध्ये। उत्तमेब्राह्मणे। अत्रसपिंडानांस्नानं। सद्यःशौचंसपिंडानांगर्भस्यपतनेसतीतितत्रैवोक्तेः। एतदाचतुर्थमासात्॥ पातेत्रिदिनस्योक्तेः। अकारणायाःपुंडेर संभवात्। सद्यःपदंस्नानपरं। एवमग्रेपिगर्भस्रावेस्नानमात्रंपुरुषस्येति। रुद्रवसिष्ठोक्तेः। पुरुषस्येतिसपिंडोपलक्षणम्। स्त्रीणांवचनात्। आचतुर्थमासंसपिंडानांस्नानं। किंतुसएव पातेत्रिदिनंनिर्गुणपरं। गुणवतस्तुअजातदंतेतनयेशिशौगर्भच्युतेतथा सपिंडानांतुसर्वेषामेकरात्रमशौचकमितियमोक्तेरेकाहइतिमदनपारिजातः। सप्तमषाण्मासादिदशाहे। एतत्सर्ववर्णविषयं॥ तुल्यंवयसिसर्वेषामतिक्रांतेतथैवचेतिव्याघ्रोक्तेः। पराशरः। जातेविप्रोदशाहेन द्वादशाहेनभूमिपः वैश्यःपंचदशाहेनशूद्रोमासेनशुध्यति॥ संवर्तः॥ जातेपुत्रेपितुःस्नानंसचैलंतुविधीयते। माताशुध्येद्दशाहेनस्नानात्तुस्पर्शनंपितुः। पुत्रपदात्कन्यायांतुनपितुःस्नानमितिहारलतायां। तन्न॥ पुत्रपदस्यपौत्रीमातामहत्वेनेतिकन्यायामपिप्रयोगात्। यच्चानंतेवोक्तम् सूतकेतुमुखंदृष्ट्वाजातस्यजनकःसुतः कृत्वासचैलंस्नानंतुशुद्धोभवतितत्क्षणात्। इत्यादिपुराणान्मुखदर्शनोत्तरमेवपितुःस्नानमिति। तन्न। विदेशेमुखदर्शनाभावस्यस्पष्टतापत्तेः। मुखदर्शनोत्तरंपुनःस्नानार्थमिदमितिस्मार्तगौडाः तन्न॥ मूलेकपितस्नानमात्रपरत्वात्। इदंसर्ववर्णसमं। सूतिकासर्ववर्णेषुदशरात्रेणशुध्यति। ऋतौचनपृथक्शौचंसर्ववर्णेष्वयंविधिरिति॥ हारलतायांप्रचेतसोक्तेः॥ यत्तुब्राह्मे॥ ब्राह्मणीक्षत्रियावैश्याप्रसूतादशभिर्दिनैः। गतैःशूद्राचसंस्पृश्यात्रयोदशभिरेवचेति॥ प्रयोगपारिजातेपारस्करः॥ द्विजातेःसूतिकायाःस्नानंसादशाहेनशुध्यति॥ त्रयोदशेह्निसंप्राप्तेशूद्राशुध्यत्यसंशयमितितदसच्छूद्रपरं। अंगिराः। सूतिकांसूतिकावर्जंसंस्पर्शोननिषिध्यति। संस्पर्शेसूतिकायास्तुस्नानमेवविधीयते। नाशौचंसूतकेपुंसःसंसर्गंचेन्नगच्छति रजस्तत्राशुचिर्ज्ञेयंतच्चपुंसिनविद्यते। संसर्गोमैथुनंस्पर्शइत्यन्ये। मातुरेवसूतकंतांस्पृशतश्चेति हारलतायांसुमंतूक्तेरिति॥ तन्न॥ संस्पर्शेसूतिकायास्तुस्नानमेवविधीयते। इतिस्नानमात्रोक्तेः। सोमतवस्यस्नानपर्यंतमस्पृश्यत्वमात्रबोधकत्वात्। एवकारोबालस्पृश्यतार्थः। माधवस्तु॥ यत्तेः

महासपिंडोपि प्रकुर्यात्स्वपनाशनं। बांधवो वा परो वापि स दशाहेन शुध्यतीति। बृहस्पतिस्मृतेः॥ स्वपनाशनादिरूपसंसर्गमाह॥ पराशरः॥ यदि पत्न्यां प्रसूतायां द्विजः संस्पर्शमिच्छति। सूतकं तु भवेत्तस्य यदि विप्रः षडंगवित्। पितृवत्सापत्नमातुः शाकस्नानादस्पृश्यत्वं। सूतिकास्पर्शे तु यावदाशौचं। अन्याश्रमान्तरस्थस्तु गृहे न व्रजति चेदिति॥ ब्राह्मोक्तेरिति शुद्धितत्त्वादयः। तत्त्वं तद्गृहं गत्वा सूतिकां यदि न स्पृशति तदास्पृश्यो अन्यथा नेति तस्यार्थः। कर्मानधिकारमाह पैठीनसिः॥ सूतिकां पुत्रवतीं विंशतिरात्रेण कर्माणि कारयेन्मासेन स्त्रीजननीं॥ इदमाशौचोत्तरं॥ अन्यथा सद्यः सपिंडानामाशौचे न तदभावः स्यात्। विध्यनुवादविरोधश्च॥ एतच्च सोमयागादिश्रौतभिन्नपरं। प्रजाता पाश्चदशरात्रादूर्ध्वं स्नानादिति कात्यायनोक्तेः॥ व्यासः॥ प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा। त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि॥ पुत्रशब्दोऽपत्यमात्रपरः॥ ब्राह्मे॥ देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनां। आयांति तस्मात्तदहः पुण्यं पूज्यं च सर्वदा जनने विशेषः प्रागुक्तः॥ अत्र प्रयोगपारिजातः॥ पुंप्रसवे दशाहः। स्त्र्यपत्ये तु त्र्यहः॥ पुत्रजन्मनि सपिंडानां दशाहाच्छुद्धिरिष्यते। त्र्यहादेकोदकानां च एकाहः सूतकं क्वचित्। स्त्रीजन्मनि सपिंडानां सोदकानां त्र्यहाच्छुचिः। स्त्रीषु त्रिपुरुषं ज्ञेयं सपिंडत्वं द्विजोत्तमा॥ इत्यग्निस्मृतेरित्याह मेधातिथिरपि। अप्रत्तानां तु स्त्रीणां त्रिपुरुषी विज्ञायते इति वासिष्ठमुक्ताशौचे एवेन द्विवाहे तु विधिर्दर्शित एवेत्याह। अन्ये तु त्रिपुरुषसापिंड्यकानीनकन्यापरत्वमाहुः। अप्रत्तानां तथा स्त्रीणां सापिंड्यं साप्तपौरुषं। प्रत्तानां भर्तृसापिंड्यं प्राह देवः प्रजापतिरिति कौर्मविरोधाच्च। अत्रेदं तत्त्वं। पंचमात्सप्तमाद्धीनां यः कन्यामुद्वहेद्द्विजः। गुरुतल्पी स विज्ञेय इत्यादिविरोधात्त्रिपुरुषं प्रकरणान्मरणाशौचपरं। वासिष्ठे तदग्रे उदकदानोक्तेः। तेन कन्याप्रसवेपि साप्तपुरुषं दशरात्रमेव। न च कन्यापुत्रकसंप्रसवे बलाबलं क्वाप्युक्तं। अग्निस्मृतिस्त्वनुकल्पो विगीता चेति सर्वं सिद्धांतः। अन्यथा त्रिपुरुषे सपिंडानामष्टमादिसोदकानां च त्र्यहसाम्यापातात्। चतुर्थादिसप्तमांतानां च किमपि न स्यात्। किंच स्त्रीजन्मोद्देशेन त्रिपुरुषं सापिंड्यं तेषां च त्रिरात्रमित्यनेकार्थविधिः कथं स्यात्। वाक्यभेदापत्तेः। न च चतुर्थादीनां सोदकत्वं क्वापि सिद्धं। तेन त्रिपुरुषं चतुर्थादीनां च स्त्रीजन्मनि सोदकत्वं विधाय पुनस्तेषां त्रिरात्राशौचविधौ विध्यनुवादविरोधो वाक्यभेदद्वयं चेत्यसंबद्धार्थाग्निस्मृतिर्हेया॥

॥अथ मृताशौचं हारीतः॥ जातमृते मृतजाते वा सपिंडानां दशाहं। दशाहमिति स्वाशौचपरं। जातमृते नालच्छेदोर्ध्वं। यावन्न छिद्यते नालं तावन्नाप्नोति सूतकं। छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते इति जैमिन्युक्तेः। नाड्यां छिन्नायामाशौचमिति हारीतोक्तेश्च मृताशौचपरमेव। जननाशौचं तु नालच्छेदात्प्रागपि जननाद्येव। मृतजाते नालच्छेदाभावात्षष्ठीपूजाद्युत्कर्षापत्तेश्च। तेन नाडीछेदात्प्राक् मातुः स्पर्शेपि न दोष इति। शुद्धितत्त्वोक्तिः परास्ता॥ नाभिच्छेदात्प्राङ्मृते तु बृहन्मनुः॥ जीवन्जातो यदि ततो मृतः सूतक एव तु। सूतकं सकलं मातुः पित्रादीनां त्रिरात्रकं। इदं च प्रसवाशौचमेव। शावनिमित्तं स्नानमा

न्ते॥ माड्॥ नामकरणात्सद्यः शौचमिति शंखोक्तेः॥ अत्र कश्चिदाह॥ नामकरणमाशौचांतकालोप
लक्षणं। अशौचव्यपगमे नामधेयमिति विष्णूक्तेः। आशौचे व्यतिक्रांते नामकर्म विधीयत इति
मनूक्तेश्च। नाम्नो नियतकालत्वात्। न च नामधेयं दशम्यां तु द्वादश्यां वापि कारयेत्। पुण्ये तिथौ
मुहूर्ते वा नक्षत्रे वा गुणान्विते इति मनूक्तेरनियतकालत्वं। दशम्यामतीतायां विप्रः द्वादश्या
मतीतायां क्षत्रियः। वैश्यः षोडशे शूद्र एकत्रिंशेऽप्यपि ज्ञेयं। पुण्य इत्याद्यनुकल्पः। तेन नाम्नः का
लोपलक्षणं। एवं दंतजननेऽपि दंतजन्म सप्तमे मासीत्युपनिषद्दिनियतकालत्वात्। चौलेऽपि कालोप
लक्षणं। प्रथमेऽब्दे तृतीये वा कर्तव्यं श्रुतिचोदनादिति मनूक्तेः। ततः संवत्सरे पूर्णे चूडाकर्म विधीयते॥
द्वितीये वा तृतीये वा कर्तव्यं स्मृतिदर्शनादिति यमोक्तेश्च तस्यानियतकालत्वादिति। तन्मंदं॥ चौ
लवन्नामदंतजननयोरपि स्वरूपेण निमित्तत्वोपपत्तेः लाहित्सिद्धकालानुवादे वाक्यभेदात्। सप्तममा
सादर्वाग्दंतजनने तदभावप्रसंगाच्च। पक्षउपनिषद्दर्शनेन निर्णयं कुर्यात्। मनूक्तं शतायुः पुरुष इति श्रु
तेर्स्वाकूपितमरणेन दंत्यकर्मापि त्यजेत्। ननु कालानुपलक्षणे नामोत्कर्षेण दभावे वा स्नानमात्रा
च्छुद्धिः स्यात्। ततः किमस्तु। अत एवोक्तं। आदंतजन्मनः सद्य इति। सा च विष्णुवचनाद्दाहाभावे वि
षयेति वक्ष्यामः। त्रिवर्षादावपि स्यादिति चेन्न। दाहदंतादिनिमित्ते विशेषाशौचैः पूर्वस्या बाधात्।
तदुक्तं। पूर्वत्वाधेन नोत्पत्तिरुत्तरस्य हि सिध्यतीति। जननाद्दशरात्रे व्युष्टे शतरात्रे संवत्सरे वेति पारस्क
र। द्वादश्यामपरेण्यां मासे पूर्णे तथापरे। अष्टादशेऽहनि तथा वदंत्यन्ये मनीषिण इति भविष्यवचना
च्च॥ कालानियमाच्च। न च प्राथम्याद्दशरात्रे गौण इति मुख्यः कालस्त्वन्यस्त्वनुकल्प इति वाच्यं। चौ
लेऽपि तथापत्तेः। न च दंतजननकालानुपलक्षणे सदंतजातमृतस्य दाहेकाहप्रसंगः। दशाहमध्या
त्। नामकरणोत्तरमेव दाहप्रवृत्तेः। दशाहाभ्यंतरे बाले प्रमीते तस्य बांधवैः। शावाशौचं न कर्त
व्यं सूत्याशौचं विधीयत इति बृहन्मनूक्तेश्च। आशौचे दाहोपलक्षणं। स्मृतवदिति पारस्करोक्तेः
यत्तु विष्णुः। अनिरन्ने दशाहे तु पंचत्वं यदि गच्छति। सद्य एव विशुद्धिः स्यान्न प्रेतं नोदकक्रियेति।
तदपि मृताशौचं निषेधार्थं। न तु सद्यस्त्वपरं वाक्यभेदात्। किंच। नामकालात्प्राक् मृतस्य स्नानं।
तदुत्तरं त्वेकाहादि। नामकालेत्वेकादशाहे मृतस्य न किमपि स्यात्॥ ॥ अथ शंखवचने
ल्यब्लोपपंचमी। तदाश्रिति नोपपद्यते। नाग्निवापि कृते सतीति मन्वादिविरोधान्नकालान्य
इति माधवमिताक्षरादिविरोधाच्च। न कालोपलक्षणं। क्वापीति दिक्। नामोत्तरं दंतोत्पत्तेः प्राक्
दाहे सत्यहः। अदंतजाते तनये शिशौ गर्भच्युते तथा। सपिंडानां तु सर्वेषामहोरात्रमशौचकमिति
मोक्तेः। दाहाभावे तु स्नानमात्रं। अदंतजाते मृते सद्य एव नास्याग्निसंस्कार इति विष्णुना दाहाभावे
तदुक्तेः। आदंतजन्मनः सद्य इति याज्ञवल्क्याच्च। दाहविकल्पं चाह लौगाक्षिः। तूष्णीमेवोदकं
कुर्यात्तूष्णीं संस्कारमेव च। सर्वेषां कृतचूडानामन्यत्रापीच्छया द्वयं। अस्मात्कृतचूडे। अत एव प्र
णां तृतीयवर्षरूपकालोपलक्षणार्थमिति मेधातिथिहरदत्तौ। मनुरपि॥ नात्रिवर्षस्य कर्तव्या बांधवै
रुदकक्रिया। जातदंतस्य वा कुर्युर्नाम्नि वापि कृते सतीति। उदकं दाहोपलक्षणं। दंतोत्पत्त्यनंतरमाकृत्रि
वर्षांतात्त्र्यहः। दंतजातेऽकृतचूडे त्वहोरात्रेण शुद्धिरिति विष्णूक्तेः। त्रिवर्षोर्ध्वं कृतचूडे अकृतचूडे

वाग्दानपर्यन्तमहः। यद्यप्यकृतचूडोवैजातदंतस्तुसंस्थितः। तथापिदाहयित्वैनमाशौचंत्र्यहमाचरेदिति
आंगिरसोक्तेः। अत्रजातदंतत्वमुद्देश्यविशेषणत्वादविवक्षितं। दाहयित्वेत्यप्यनुवादः। उभयविधौ
वाक्यभेदात्। त्रिवर्षात्प्राक्चूडाभावेग्निदाने त्र्यहस्तदभावे विष्णूक्तएकाहइतिमाधवः॥ यत्तुकश्चिद
ह। प्रागृत्रिवर्षेविषयादस्मादेवार्थात्त्रिवर्षोर्ध्वमपितत्सिद्धिः। विज्ञानेश्वरोक्तेश्च। त्रिवर्षोर्ध्वमकृतचूडे
विषयत्वंचिंत्यं। जातपदवैयर्थ्यादिति। तन्न। उक्तदाहस्याविधेयत्वात्। नृणामकृतचूडानामशुद्धिर्नै
शिकीस्मृतेतिमनूक्तेस्त्रिवर्षोर्ध्वमेकाहापत्तेरर्थात्त्र्यहासिद्धेः। त्वयाप्ययेनयोगीकारात्पदवैयर्थ्यस्य
साम्याद्वाक्यार्थाज्ञानाच्चेत्यलंनितांतस्वरार्थानभिज्ञदूषणेन। प्रथमवर्षादौकृतचूडस्यसदात्र्यहः।
निर्वृत्तचूडकानांतुत्रिरात्राच्छुद्धिरिष्यतइतिमनूक्तेः। एतच्चसर्वंप्रागुक्तंसपिंडानां। मातापित्रोस्तुदशाहोर्ध्वं
मृतेप्येवंत्रिरात्रंबालानाम जातदंतानांत्रिरात्रेणशुद्धिरितिकाश्यपोक्तेः। वैजिकादभिसंबंधादनुरुं
ध्यादघंत्र्यहमितिमनूक्तेश्च। शुद्धितत्त्वादयोगौडास्तु अजातदंतमरणेपित्रोरेकाहमिच्छंति। दंतजाते
त्रिरात्रंस्याद्यदिस्यातांतुनिर्गुणाविति कौर्मात्। काश्यपं शूद्रपरं। अनूढानांतुकन्यानांतथावैशूद्रज
न्मनामितिअहानुवृत्तौशंखोक्तेः। त्रिरात्रंतुभवेच्छूद्रेवर्णमासेपिप्रिशोमृतइतिमत्स्यसूक्ताच्च। दंत
जातेशूद्रेतुपंचाहः। यथाहांगिराः॥ शूद्रेत्रिवर्षान्न्यूनेतुमृतेशुद्धिस्तुपंचभिः। अतऊर्ध्वंमृतेशूद्रेद्वा
दशाहोविधीयते॥ षड्वर्षांतमतीतोयःशूद्रःसंम्रि यतेयदि मासिकंतुभवेच्छौचमित्यंगिरस
भाषितमिति॥ यत्तुअनूढभार्यःशूद्रस्त्वितिशंखोक्तमाशौचंतत्सगुणशूद्रपरं। निर्गुणत्वेनूढभा
र्यशूद्रेत्रिवर्षोर्ध्वंद्वादशाहःषड्वर्षोर्ध्वंमासः। षड्रात्रमागमिष्ठतोद्वाहेमासइत्याहुः। एतत्तुल्यंवयसि
सर्वेषामितिविरोधाच्छिष्टविगानाच्चादर्त्तव्यमितिविज्ञानेश्वरादयः। दाक्षिणात्यानांतथैवाग्र
स्पदेशप्रागुक्तमितिगौडाः। एवंकन्यास्वपि। तास्वप्यजातदंतासुपित्रोरेकरात्रमितिमाधवः। य
त्तुविज्ञानेश्वरेणोक्तंऊनद्विवर्षेउभयोःसूतकंमातुरेवहीतियाज्ञवल्क्योक्तेः। गर्भस्थप्रेतेमातु
र्दशाहः। जातेउभयोःकृतेनाम्निसोदराणांचेति। पैठीनस्युक्तेश्चपित्रोःसोदराणांचदशाहमस्पृश्य
त्वमिति तन्नेदानींप्रचरति। अतएवस्मृत्यर्थसारे। तन्नादृतं। कन्यासुचौलात्प्राक्मृतौस्नानं। आ
चूडायांतुकन्यायांसद्यःशौचंविधीयतेइत्यापस्तंबोक्तेः। इदं त्रिपुरुषमध्ये अप्रत्तानांतुस्त्रीणां
त्रिपुरुषीविज्ञायते इतिवसिष्ठोक्तेः। इदंवाग्दानोत्तरमितिगौडाः। अप्रत्तानांतथास्त्रीणांसापिं
ड्यंसाप्तपौरुषमितिवचनात्। चौलोत्तरवाग्दानपूर्वंतास्वेकाहः। अविशेषेणवर्णानामर्वाक्
संस्कारकर्मणः। त्रिरात्रात्तुभवेच्छुद्धिःकन्यास्वह्नाविधीयतेइत्यंगिरसात्रिरात्रविषयेह्नोविधा
नात्। अप्रत्तानामविवाहितानांत्रिपुरुषीपितृपितामहप्रपितामहैःसकमाप्याश्चतुर्थ्याःसापिं
ड्यं। एवंचकन्यापेक्षयापंचमेवृद्धप्रपितामहेसापिंड्यंनिवर्ततेइतितत्संतानेन्यस्मिन्विवाहिता
शौचादिधर्मोनभवतीत्यर्थः। इतिगोविंदार्णवेसंस्कारवीचौ। स्त्रीणांतुपितृपक्षेपंचावधिकं
सपिंडत्वं अप्रत्तानांतुस्त्रीणांत्रिपुरुषमित्यादिसंस्कारवीचौप्रपंचितम्। अतश्चकन्यायावृद्धप्रपि
तामहसंतत्यातद्धसापिंड्याभावात्कस्यामरणेपितत्पिंडकृताशौचंनास्तीतिपृथ्वीचंद्रोगोविंदा
र्णवे॥ अतःशूद्रस्योपनयनस्थानीयविवाहात्पूर्वंत्रिरात्रं। विवाहोत्कर्षेतुषोडशाब्दमध्येत्रिरात्र

मेवेत्यपरार्कोधाः। शूद्रनिर्णयेऽब्दोर्ध्वं पंचाहं। षडब्दोर्ध्वं विवाहाभावे द्वादशाहइति गौडाः। स्त्रुणा
नाषोडशाब्दोर्ध्वं तु विवाहाभावे पि पूर्णाशौचं वक्ष्यते। तदूर्ध्वं प्राग्विवाहादत्ते कुलपितृकुलेष
सप्तपूरुषावधित्रिरात्रं। अवाशिष्टं वंशज्ञानुपानैव प्रतिपादिता। असंस्कृतानुसाज्ञेया त्रिरात्रं शुभ
योः स्मृतमिति मरीच्युक्तेः। रत्नाकरे तु हितत्वेच शंखः। पितृवेश्मनि या नारी रजः पश्यत्यसंस्कृ
ता। तस्यां मृतायां नाशौचं कदाचिदपि शाम्यति। यावज्जीवमशौचमिति वाचस्पतिमिश्राः॥

॥ अथानुपनीते किंचिदुच्यते॥ तत्र प्राक्सुत्रेवखननमेव। तदूर्ध्वं वर्षत्रयात्प्राक् चौलाभावेऽप्यु
दकदानविकल्पः। नात्रिवर्षस्य कर्तव्या बांधवैरुदकक्रिया। जातदंतस्य वा कुर्युर्नाम्नि वापि कृते सती
ति मनूक्तेः। उदकक्रियामाह चर्याद्दाहोपलक्षणं खनने तु नाल्पदोषे दैहिकं। ऊनद्विवर्षं निखनेन्न कुर्या
दुदकं ततइति याज्ञवल्क्योक्तेः। उदकमंत्यकर्मपरमित्यपरार्कः॥ यमः॥ ऊनद्विवर्षं प्रेतं घृताक्तं
निखनेद्भुवि। यमगाथा गायमानो यमसूक्तमनुस्मरन्। माधवीये त्वाह्येपि॥ स्त्रीणामनुपनीतो गर्भे
सद्योजातो मृतोथवा। अजातदंतो मासैर्वा मृतः बह्निर्गतेर्बहिः। वस्त्राद्यैर्भूषितं कृत्वा निक्षिपेत्तं तु
काष्ठवत्। खनित्वा शनकैर्भूमौ सद्यः शौचं विधीयते। अलंकरणमपि वक्ष्यते। कृतचूडस्य तु त्रिवर्षात
प्रागूर्ध्वं चाप्युदकदानं नियतं॥ यत्तु वसिष्ठः॥ ऊनद्विवर्षे प्रेते गर्भपतने वा सपिंडानां त्रिरात्रमिति तत्र
कुमारचूडापरं। वर्षत्रयादूर्ध्वमकृतचूडस्यापि नियतं। वर्षत्रयोर्ध्वमुपनयनात्पूर्वं च तूष्णीमग्न्युद
कदानाद्यत्तूष्णीमेवोदकं कुर्यात्तूष्णीं संस्कारमेव च इति पूर्वोक्तलौगाक्षिस्मृतेः॥ पिंडदानमपि कार्यं।
असंस्कृतानां भूमौ पिंडं दद्यात् संस्कृतानां कुशेष्विति॥ प्रचेतसोक्तेः। उदकदानं सपिंडैः कृतचूडस्ये
तिगौतमोक्तेः। उदकग्रहणमौर्ध्वदेहिकपरमिति हरदत्तः। द्वादशाहस्तु सर्वो कपौगंडमरणे
सति सपिंडीकरणं नस्यान्नैकोद्दिष्टं निकार्यमिति हरदत्तपृथग्देवलोक्तेश्च। मरीचिरपि॥ प्रे
तपिंडं बहिर्दद्याद्दर्भमंत्रविवर्जितमिति॥ एतदनुपनीतपरमिति विज्ञानेश्वरः॥ अत्र वृद्धैर्वर्षाव
धिः पूर्ववाक्येषु ततग्रहणात्। उदकग्रहणस्योपलक्षणत्वाद्याह: पूर्वावधिरिति केचित्। द्वादशा
हस्तु दिनानुपनीतद्विजात्मजस्य विषये अहाशौचपिंडदानविधिमाह पारस्करः प्रथमेऽहि
सेदेयास्त्रयः पिंडाः समाहितैः। द्वितीये चतुरो दद्यादस्थिसंचयनं तथा। त्रींस्तु दद्यात्तृतीयेह्नि व
स्त्रादि क्षालयेत्ततः इति। अत्र देवयाज्ञिक निबंधे विशेषः। शिशुरादंतजननाद्बालः स्याद्यावदा
शिखः वाच्यते सर्वशास्त्रेषु कौमारो मौंजिबंधनात्। आषडब्दाच्च कौमारं पौगंडं नवहायनः॥ तथा
गर्भे नष्टे क्रिया नास्ति दुग्धं देयं शिशौ मृते। पायसं क्षीरं दद्याद्बालविपत्तितः। एकादशाद्वाद
शाहः पश्चात्संगं विधौ चित्ता तथा॥ पंचप्रभीयतेवालस्तत्र भावः प्रदीयते। किंचित्समानवयसा स
स्कृत्साजं यथाविधिः॥ भक्ष्यं भोज्यं च दातव्यं तथा वस्तुखेलस्निका तद्रूपाणि प्रदेयानि सोपान
त्क्वानि तत्समे। कुमाराणां च बालानां भोजनं वस्त्रवेष्टनं। पंचोपजीवते बाल लसंहिमायदीयते।
तथा॥ भूमिनिःक्षेपणं बाले त्वावर्षद्वयमाशिखं॥ ततः परं खग्नेश्च देहदाहो यथाविधिः॥ अत्र
पूर्वं खननं निरूत्पर्थं मावर्षद्वयमिति। प्रागपिकृतचूडस्य निरूत्यर्थमाशिखमिति॥ तथा॥ चूडा
कर्मणि संजाते विपत्तिस्तु यदा भवेत् सतकाले प्रकर्तव्यमुद्दिश्यारोपणं तदा। तत्रेदाहः प्रकर्तव्य

अकृतचूडे निश्चितम्। आद्वानिषोडशात्पित्रः सपिंडीकरणं विना। इदं पंचवर्षोत्तरं॥ जन्मतः पंचवर्षाणि भु
क्तेदन्नमसंस्कृतं। पंचवर्षाधिके बाले विपन्ने यदि जायते। वृषोत्सर्गादिकं कर्म कर्तव्यमुदकांतरं॥ अह
न्यहनि संप्राप्ते कुर्याच्छ्राद्धानि षोडश॥ पायसेन गुडेनैव पिंडं दद्याद्यथाक्रमं। उदकुंभप्रदानं च पददा
नानि यानि च। दीपदानानि यत्किंचित्पंचवर्षाधिके सदा। कर्तव्यं तु खगश्रेष्ठ नार्वाक्प्रेतत्वप्नये
स्वाहाकारेणैव कार्याण्येकोद्दिष्टानि षोडश॥ ऋजुदर्भैस्तिलैः शुक्लैः प्राचीनावीतिना नयेति त
त्रैवोक्तेः। अत्र मूलं चिंत्यं। वार्षिकादि न भवत्येव। सपिंडत्वाभावे पितृत्वायोगात्। वचनाभावाच्च। दि
वोदासीये॥ अव्रते नियतं शान्ते विशाद्दोऽमुद्रजातिवत्। क्रियाः सर्वाः समुद्दिश्य सपिंडीकरणं विना उ
दकं पिंडदानं च कृतचूडे विधीयते इति। स्त्रीणां तु दाहोत्तरमुदकपिंडदानविकल्पः॥ स्त्रीणां चैके
प्रत्तानामिति गौतमोक्तेः। स्त्रीशूद्राश्चधर्मिण इति वचनाच्छूद्रेप्येवं। एतद्द्वयोर्निमित्ताशौचं सर्ववं
र्णासमं। तुल्यं वयसि सर्वेषामतिक्रांते तथैव चेति व्याघ्रपादोक्तेः। यानि तु। निवृत्तचूडके विप्रे त्रिरात्रा
च्छुद्धिरिष्यते। निवृत्ते क्षत्रिये षड्भिर्वैश्ये नवभिरुच्यते। शूद्रे त्रिवर्षन्यूने तु मृते शुद्धिस्तु पंचभिः॥
अत ऊर्ध्वं मृते शूद्रे द्वादशाहो विधीयते। षड्वर्षांतमतीते तु शूद्रे मासमशौचकमिति व्याङ्गिरसादी
नि तानि शिष्टविगानान्नादर्तव्यानीति विज्ञानेश्वरमदनपारिजातादयः। तेनैतद्देशाच्छूद्राणामव
स्थाशौचं ग्राह्यमेव। तुल्यं वयसि सर्वेषामिति दाक्षिणात्यपरं। अन्यदेशे कौर्मोक्ताव्यवस्थेति शु
द्धितत्त्वे॥ ॥अथ जाम्याशौचं॥ ॥ तच्च द्विजपुंसामुपनयनोर्ध्वं प्रव
र्तते। त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परं। सत्रस्य द्वादशाहानि विंशः पंचदशैव तु। त्रिंशद्दिनानि
शूद्रस्य तदर्धं न्यायवर्तिन इति याज्ञवल्क्योक्तेः॥ यत्तु स एव। त्रिरात्रं दशरात्रं वा शावमाशौचमिष्य
ते इत्याह। तत्र दशाहे त्रिरात्रमस्पृश्यत्वं। एकदिनोत्पन्नमशौचं हयेद्दशाहमस्पृश्यत्वं। मरणादि तु
ल्यस्यान्मरणेन कथंचन। अस्पृश्यं तु भवेज्ज्ञातं सर्वमेव सबांधवमित्यंगिरस्योक्तेः। दशाहाशौचपरत्वे
दशरात्रमतः परमित्यनेन पौनरुक्त्यापत्तेरिति शुद्धिविवेकादयः॥ तन्न॥ स्मृतिभेदात्। त्रिरात्रं द
शरात्रं वेति विकल्पायोगाच्च॥ यत्तु पुत्राणां वेदानध्याप्य वृत्तिं विदध्यादिति तत्राहाश्वलायनः॥ द्वाद
शरात्रं महागुरुषु दानाध्ययने वर्जयेरन्निति। अत्र यावदुक्तं निषेधो वा स्पृश्यत्वमात्रं वा। न तु कर्मान
धिकारः। एकादशाहे तु वैश्वदेवोक्तेः। एकादशाहिकमुक्त्वा तत्रस्वंते विधीयते इति। शुद्धितत्त्वे तु
त्रयः पुरुषस्याति गुरवो भवंति माता पिता चार्य्यश्चेति विष्णूक्तेः। पित्रादयो महागुरवः भर्त्ताप्युक्तो रा
मायणे। पतिर्बंधुर्गतिर्भर्त्ता दैवतं गुरुरेव च। शातातपः॥ पतिरेको गुरुः स्त्रीणां सर्वस्याभ्यागतो गु
रुः॥ एकपत्त्रविमूढानां पितृमातृनिषेधार्थं। सोदकानां त्रिरात्रं। अहस्तूदकदायिन इति मनूक्तेः॥ अ
श्रिशरणे॥ सपिंडता तु पुरुषे सप्तमे विनिवर्त्तते। समानोदकभावस्तु निवर्त्तेताचतुर्दशात्॥ जन्मना
मस्तनेरेके तत्परं गोत्रमुच्यते॥ बृहस्पतिः॥ दशाहेन सपिंडास्तु शुध्यंति प्रेतसूतके। त्रिरात्रेण सकु
ल्यास्तु स्नात्वा शुध्यंति गोत्रजाः। स्त्रीशूद्रयोस्तु विवाहोर्ध्वं जाम्याशौचं। वैवाहिको विधिः स्त्रीणामौ
पनायनिकः स्मृत इत्युक्तेः। दत्तानां भर्तुरेव हि। स्वजन्मकृतमशौचं स्यान्मृतके जातके तथेति माधवीये
मात्राच्च। शूद्रस्य विवाहाभावेपि षोडशवर्षोर्ध्वं मासः। अनूढभार्यः शूद्रस्तु षोडशाद्वत्सरात्परं। मृत्यु

यन्तुं समधिगच्छेद्वे मासा गतस्यापि बांधवाः। शुद्धिं समधिगच्छंतीति नात्र कार्या विचारणेति। अपरार्के शंखो
क्तेः निर्णयामृतमदनपारिजातादौ त्वन्यथोक्तं॥ हारीतः अप्रौजीवंधनाद्विप्रः स्वत्रिपक्षधनुर्ग्रहात्।
आगमनोद्दशाहाद्वैश्यः शूद्रद्वादशहेयोगहात्॥ यन्तु नोदावतमेदेवाद्दर्शेनवत्सप्रमिति। मेधातिथिस्तु
त्रिरात्रमात्रतादेशादिमनकगते कालोपलक्षणार्थं। स च कालः स्वस्वीयः। सर्वेषां चाष्टमवर्षे रूपनेनच
तुर्णामिति वर्णानामुपनयनाभावेप्यष्टमादूर्ध्वं पूर्णमाशौचं तत्रापि भागष्टमाच्छिशवः मोक्षादित्यस्य
त्पंतरादूर्ध्वं संपूर्णमवोक्तमिति। यथा आषोडशाद्वै बाल इत्याहुस्तेषामप्यष्टमादूर्ध्वं शूद्रे मासस्य अर्धं
मष्टभ्यो वर्षेभ्यः शुद्धिः शूद्रस्य मासिकीति वचनादित्याह। हारलतायां शुद्धितत्त्वादिगौडग्रंथेषूक्तं। अनु
पनीतो विप्र इत्युक्ता॥ ग्रीयते पत्नसंस्पादाशौचं त्र्यहेनैव हि। द्विजन्मनामयं कालस्त्रयाणां तु प्रशि
कश्यादिपूरणोक्तमुपनयनकालोपलक्षणं। षडब्दपदं मासत्रयाधिकपरं। गर्भाष्टमेऽष्टमे वाब्दे इत्युक्तेः
मनुजाबालः॥ व्रतचूडाद्विजानां च यतीनां च यथाक्रमं। दशाहं त्र्यहमेकाहं शुध्यंत्यपि हि निर्गुणाः॥ इति
द्विजादेनाः इदं यत्नेनिनिस्तुक्तेः पंचाब्दोपनीतपरमिति। तदेतन्नाद्रियंते वृद्धाः। यानि तु पराशरः एका
हाद्ब्राह्मणः शुद्धियोऽग्निवेदसमन्वितः। त्र्यहात्केवलवेदस्तु तद्धीनो दशभिर्दिनैः। केवलवेदः के
वलश्रौतास्नेरप्युपलक्षणं। अपंसेकोवोहोमाध्यापनपरएव। ननु संध्यादिविषीति हारलतायां॥
अंगिरः॥ सर्वेषामेव वर्णानां सूतके मृतके तथा। दशाहाच्छुद्धिरेतेषामिति शातातपोऽब्रवीत्। दे
वलः॥ आशौचं दशरात्रं तु सर्वेषामपरे विदुः। निधने मरणे चैव पश्यतः क्रमणः स्वयं॥ अग्नितो
न्वृत्तसकर्महानौ पीडवतो विप्रपरिचर्यापरं। शूद्रे दशरात्रमिति हारलतायां॥ दक्षः॥ सद्यःशौ
चं तथैकाहस्त्र्यहश्चतुरहस्तथा। षड्दशाहाद्दशाहश्च पक्षो मासस्तथैव च। मरणांतं तथा चान्यद्द
श पक्षास्तु सूतके। मितास्त्ररायां स्मृत्यंतरे। चतुर्थे दशरात्रं स्यात् षण्णिशाः पुंसि पंचमे। षष्ठे चतु
रहाच्छुद्धिः सप्तमे त्वहरेव तु इत्यादिना माषदनाषड्गुणवद्गुणवद्विषयाणि देशाचारभेदा
द्वा नेयानि। सद्यःशौचादिषडहंताः पक्षायामावरादिपराः। अत्र मरणांतजननादिनिमित्तादि
न्नं। शिष्टविगानान्नादर्तव्यानीति विज्ञानेश्वरः। स्नात्वा चाप्यहुत्वा वा अदत्वाप्यलयाहिजः
एवं विधस्य विप्रस्य सर्वदा सूतकं भवेदिति। दक्षोक्तो। अन्यपूर्वा गृहे यस्य भार्या स्यात्तस्य नित्यशः
अशौचं सर्वकार्येषु देहे भवति सर्वदेति। ज्ञानादि वशायां वृत्ययपरार्के मदनपारिजातादयः
माधवस्तु॥ वृत्तस्वाध्यायसापेक्षमघसंकोचनं तथेति कलिवर्ज्येषूक्तेः दशाहमेव विप्रस्य सपिं
डमरणे सति कलांतराणि कुर्वाणः कलौ भवति किल्बिषीति॥ हारीतोक्तेः अन्यूनाशौचपक्षाद्यु
गांतरविषया। मरणांतादिपक्षास्तु निंदार्थवादः अन्यथा नामधारकविप्रस्तु दशाहं सूतकी भवेदि
ति विरोधस्यादित्याह। मनुदेवलः॥ दशाहादित्रिभागेन कृते संचयने क्रमात्। अंगस्पर्शनमि
ति वर्णानां तत्त्वदर्शिन इति। पूर्णाशौचे स्पर्शनमाह। यज्ञानुपनीतानिकांनाशौचे त्रिरात्रादौ तु
नैवोक्तं। स्वाशौचकालाद्विज्ञेयं स्पर्शनं तु त्रिभागतः इति॥ तदपि युगांतरेषु। अस्थिसंचयनादूर्ध्व
मंगस्पर्शनमेव चेति माधवीये कलौ तन्निषेधात्। यत्तु हारलतायां॥ चतुर्थेहनि कर्तव्यः संस्पर्शो
ब्राह्मणस्य तु इति अंत्येतसोक्तेः अहेकाशौचेपि चतुर्थाह एवांगस्पर्श इति। तन्न॥ देवलादि

वसेनास्य दशाहमेवत्वात्। मनुः। वर्णसंकरजा मूर्धावसिक्ताद्यास्तेषामाशौचविशेषः कलौनोपयुक्त
इति नोच्यते। प्रतिलोमजानां नाशौचं। मलापकर्षणार्थं तु स्नानमात्रमिति विज्ञानेश्वरः। माधवस्तु
शौचाशौचे प्रकुर्वीरन् शूद्रवद्वर्णसंकरा इति ब्राह्मोक्तेः शूद्रवदाह। हारलताप्येवं॥ दत्तक्रीतकृत्रि
मादिपुत्रेषु अहीनवर्णासु स्त्रीषु च सपिंडत्वेपि प्रसवे मरणे च पूर्वापरपित्रोर्भर्तुश्च त्रिरात्रमेव न द
शाहादि। अनौरसेषु पुत्रेषु जातेषु च मृतेषु च। परपूर्वासु भार्यासु प्रसूतासु मृतासु चेति त्रिरात्रानुवृत्तौ
विष्णूक्तेः। सपिंडानां त्वेकाहः। परपूर्वासु भार्यासु पुत्रेषु कृतकेषु च। भर्तृपित्रोस्त्रिरात्रं स्यादेकाहस्तु
सपिंडत इति माधवीये हारीतोक्तेः। सूतके मृतके चैव त्रिरात्रं परपूर्वयोः। एकाहस्तु सपिंडानां त्रिरात्रं
यत्र वै पितुरिति मरीच्युक्तेश्च। शंखः। अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु च। परपूर्वासु च स्त्रीषु त्रि
रात्राच्छुद्धिरिष्यते॥ परपूर्वा पुनर्भूः॥ इदं सवर्णासु हीनवर्णासु शंखलिखितौ। परपूर्वासु भार्या
सु पुत्रेषु कृतकेषु च। नान्यथा यो भवेत्तस्य नाशौचं नोदकक्रिया। ब्राह्मेपि। अशौचं तु त्रिरात्रं स्यात्स
मवर्णेषु निश्चितं। यत्तु षडशीतौ। अन्यपूर्वोढदारासु त्रिदिनाच्छुद्धिरिष्यते। तासु वानन्यपूर्वासु पं
चाहोभिर्विशुध्यतेति। तत्र पंचाहे मूलं चिंत्यं। यत्तु याज्ञवल्क्यः अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु
चेत्येकाहमाह॥ तदसन्निधौ ज्ञेयं। यदा पितुरेकाहस्तदा सपिंडानां स्नानं। अन्याश्रितेषु दारेषु प
रपत्नीसुतेषु च। गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पितेति प्रजापत्युक्तेः। पितेति वोढुरुपलक्ष
णं तयोपक्रमात्। यत्तु दत्तके पालकप्रतियोगिकपुत्रत्वात् पूर्वपितुर्न त्रिरात्रं पूर्वसंबंधनिवृत्तेश्च न
दशाहादीति कश्चित्। तन्न। जनकेपि वैजिकादभिसंबंधादनुहरेद्यादघं त्र्यहमिति वाचनिकाशौच
स्यानिवार्यत्वात्। पितृमरणेपि दत्तकादीनां त्रिरात्रं। शुद्धितत्त्वेप्याहे॥ दत्तकश्च स्वयंदत्तः कृत्रिमः
क्रीत एव चेति। उपक्रम्य सूतके मृतके चैव त्र्यहाशौचस्य भागिन इत्युक्तेः। स्मृतिकौमुदी हारलताया
चैवं। दत्तकस्य पुत्रपौत्राणां जनने मरणे वा सपिंडानामेकाहः। बीजिनश्चेति॥ गोतमेन साप्तपौरुष
सापिंड्योक्तेः। सपिंडानां चैकाहस्योक्तत्वात्। सपिंडेन तु पुत्रीकृते सपिंडदत्तौरसयोर्भ्रात्रेस्तत्पुत्रयोर्द
शाह एव। तत्रावासाभावात् सपिंडत्वेन दशाहप्राप्तत्वाच्च। पूर्वापरमन्तेन्यत्वयोः पुत्रयोस्त्र्याहमाधवी
ये मरीचिः मातुरैक्याद्द्विपितृकौ भ्रातरावन्यगोत्रजौ। एकाहं सूतकं तत्र त्रिरात्रं मृतके तयोरिति द्वि
के। ऊढाकन्यायां तु विष्णुराह। संस्कृतासु स्त्रीषु नाशौचं पितृपक्षे तत्प्रसवमरणे चेत्पितृगृहे स्यातां
तदैकरात्रं त्रिरात्रं चेति प्रसवे एकरात्रं मरणे त्रिरात्रमिति। विज्ञानेश्वरापरार्कौ॥ माधवस्तु प्रसवेपि
त्रिरात्रं पित्रोः एकरात्रं भ्रात्रादिबंधुवर्गस्य दत्ता नारी पितुर्गेहे सूयेताथ म्रियेत वा। तद्बंधुवर्गस्त्वेके
नशुचिस्तज्जनकस्त्रिभिरिति ब्राह्मोक्तेरित्याह॥ यत्तु कश्चिदाह पक्षपदेन भ्रातरो गृह्यंते॥ वाक्यांतरेण
भगिनीमृतौ त्रिरात्रोक्तेरिति तच्चिंत्यं॥ तदभावादेनहिरेधाच्च॥ भ्रातुः प्रसवे एकाहः। मृतौ त्रिरात्रमि
ति केचित्। युक्तं तु पक्षिणी परस्परमृतौ भ्रातृभगिन्योः पक्षिणी भवेदिति ब्राह्मात्। भ्रातृभिन्नाना
मेकाहः वृद्धोक्तेः॥ इतरेषां यथा विभीतिवक्ष्यमाणवचनाच्च। यत्तु प्रधानगृहे मृतौ पित्रोः पूर्णं भ्रातु
स्त्र्यह इति कश्चित्तन्निर्मूलत्वान्नाशौचं पितृपक्षे इत्येन हिरेधाच्च भ्रांतः॥ दत्ता नारी पितुर्गेहे प्रधाने
त्सूयेत यदा। म्रियते वा तदा तस्याः पिता शुध्येत्त्रिभिर्दिनैरिति कल्पतरौ शुद्धितत्त्वे च। पतिगृहे प्रसवे

तुपित्रादीनामाशौचंनास्तिमृतौपित्रोःत्रिरात्रमस्त्येव।यत्ताश्चत्तासुपोषितासुसंस्कृतासंस्कृतासुच।
मातापित्रोस्त्रिरात्रंस्यादितरेषांयथाविधिः।अदत्तासुपित्रोरेकरात्रमितिमाधवीयेशंखकार्ष्णा
जिनिस्मृतेः।वैजिकादभिसंबंधादित्युक्तेश्च।स्मृत्यर्थसारेप्येवं॥माधवस्तुइदंत्रिरात्रंजातदंताप
रं।दंतोत्पत्तेःप्रागेकरात्रंपित्रोः।सद्यस्त्वशौढकन्यायांमोढायांवासराच्छुचिः।प्रदत्तायांत्रिरात्रेणाद
त्तायांपक्षिणीभवेदिति।पुलस्त्योक्तेरन्यत्रकन्यामृतौपित्रोःपक्षिणीत्याह।षडशीतावपि॥पितृ
गेहात्तेयत्रयदिपुत्रीप्रमीयते।पक्षिणीतत्रपित्रोःस्यान्नान्येषामितिनिश्चयः॥ग्रंथांतरेऽप्येवमि
तिस्मृत्यर्थसारे।भ्रातुस्तुपक्षिणी।श्वशुरयोर्भगिन्यांचमातुलान्यांचमातुले।पित्रोःस्वसरितद्वच्च
पक्षिणीक्षपयेन्निशामितिबृहस्पतिस्मृतेः।शुद्धितत्वेकौर्म्मे॥आदंतात्सोदरेसद्यःआचूडादेकरा
त्रकं।आप्रदानात्त्रिरात्रंस्याद्दशरात्रमतःपरं।पित्रोर्मृतौस्त्रीणांत्रिरात्रं।पित्रोरुपरमेस्त्रीणांमूढानां
तुकथंभवेत्।त्रिरात्रेणैवशुद्धिःस्यादित्याहभगवान्यमः॥इतिमाधवीयेबृहन्मनूक्तेः।इदंदशाहांतः
ऊर्ध्वंपक्षिणी॥भ्रातुर्भगिनीगृहेनस्यावातद्गृहेमृतौत्रिरात्रमन्यत्रतुपक्षिणीतिषडशीतावुक्तं॥अ
न्येपि॥परस्परंमृतौभ्रातृभगिन्योःपक्षिणीभवेत्।मातुलाशौचवत्तुज्ञाःपितृव्याशौचमिष्यतइति।
शिष्टास्तुसपिंडत्वात्पितृव्येस्नानमात्रमाहुः।त्रिंशच्छ्लोक्याम्॥मैथिलाचार्यमातामहदुहितृसुतश्रो
त्रियर्त्विक्स्वयाज्यसतीर्थेषु त्रिरात्रंत्रिदिवसमशुचिः।सोदकस्तूभयत्रपक्षिण्याशौचंमृतिर्दुहितृ
सुतसहाध्यायबंधुत्रयांतेवासिश्वश्रूश्वशुरमित्रश्वशुरभगिनिकाभागिनेयप्रयाणे।मातामह्यांचपित्रोः
स्वसरिचविरतौमातुलेमातुलान्यां।चाथोसज्योतिरेवस्वविषयनृपतौग्रामनाथेवनष्टे।शिष्योपाध्या
यबंधुत्रयगुरुतनयाचार्यभार्यासगोत्रानूचानश्रोत्रियेषुस्वगृहपमृतौमातुलेचैकरात्रं॥रात्रिंसब्रह्म
चारीएयथनुकथमपिस्वल्पसंबंधयुक्तेस्नानंवासोयुतंस्यादिदमपिसकलंसर्ववर्णेषुतुल्यमिति।
अत्रमूलेमिताक्षरादौस्पष्टं।दौहित्रभागिनेययोरुपनीतयोस्त्रिरात्रं।अनुपनीतयोःपक्षिणी।
संस्थितेपक्षिणींरात्रिंदौहित्रेभगिनीसुते।संस्कृतेतुत्रिरात्रंस्यादितिधर्मोव्यवस्थितःइतिवृद्धम
नूक्तेः।संस्कृतेदाहेनेनदाहेत्रिरात्रं नान्यथेतिगौडाः॥तन्न॥विशेषवैयर्थ्यात्।मातुलादौसन्नि
धिविदेशाभ्यांपक्षिण्येकाहयोर्व्यवस्था॥मनुः॥त्रिरात्रमाहुराशौचमाचार्येसंस्थितेसति।तस्य
पुत्रेचपत्न्यांचदिवारात्रमितिस्थितिः॥श्रोत्रियेस्वगृहेत्रिरात्रं श्रोत्रियेतूपसंपन्नेत्रिरात्रमशुचिर्भ
वेदितिस्मृतेरितिमाधवः।एकग्रामीणेत्वेकाहः।ऋत्विजिबाहुल्यकालश्रौतसत्रेयाजनपरे
त्रिरात्रैकरात्रेज्ञेये।यद्यपिकर्मकुर्वन्नेवयाचकःशब्दोभवतीतिशबराचार्यैःकर्मण्येवर्त्वि
क्त्वमुक्तं।तथापिकर्मारंभाशौचनिषेधात्तदुत्तरमेवैतज्ज्ञेयं॥गौडास्तु।एकोदकानांत्वहोरा
त्रंज्ञातीनामहःस्मृतं।मातृबंधौगुरौमित्रेमंडलाधिपतौतथेतिजाबालोक्तेर्मातृबंधुरेकाहमाहुः।शिष्येसं
पन्नेत्र्यहः।शिष्यसतीर्थ्यसब्रह्मचारीषुक्रमेणत्रिरात्रमेकाहइतिमाधवीयेबोधायनोक्तेः।अन्यत्रतु
मनुःमातुलेपक्षिणींरात्रिंशिष्यर्त्विग्बांधवेषुचेति।बंधुत्रयंचआत्मपितृष्वसृमातृष्वसृमातुलपुत्राः
पितुःपितृष्वसृमातुलपुत्राः।मातुःपितृष्वसृमातृष्वसृमातुलपुत्राश्चेतिविज्ञानेश्वरः।अत्रपक्षिणी
पितृष्वस्रादिकानामूढानांत्वेकाहः।तद्बंधुवर्गस्त्वेकेनेति।पूर्वोक्तमाद्यानरइतिकेचित्।यत्तुषडशी

मां।एवंपित्रोर्भगिन्योर्येयेपितामहयोस्तथा।येमातामहयोश्चैवभगिन्योस्तत्प्रजाश्रयाः॥मातुलाःस्व
स्वपित्रोश्चपत्न्यश्चैषांप्रजाश्रयाः।पितरश्चेतिसर्वेषुपक्षिणीस्वगृहेत्र्यहं।एवंश्वशुरजामातृदौहि
त्रविषयंदिस्मृतं।यच्चयमः जामातरिमृतेशुद्धिस्त्रिरात्रेणोभयोःस्मृता।पक्षिणीशालकानांस्यादि
तिशातातपोब्रवीत्।इति॥ तन्निर्मूलत्वात् मिताक्षरादिविरोधाच्चोपेक्ष्यं।मदनपारिजातेविष्णुः
असपिंडेस्ववेश्मनिमृतेएकरात्रं।अत्रहरदत्तोक्तःशवेचेत्यापस्तंबसूत्रेणःशवेग्रामेधनुःशता
दर्वागन्नमभोज्यं।दीपमुदकुंभंचोपनिधायभुंजीत।यदिसमानवंशेनगृहमेवंसूतिकायामि
त्याह।प्रचेतागृहेमृतोनु।गृहेयस्यमृतःकश्चिदसपिंडःकथंचन।तस्याप्यशौचंविज्ञेयंत्रिरात्रं नात्र
संशयः।इत्यंगिरसोक्तमितिमाधवः॥एतेनत्रिरात्रमसपिंडेषुस्वगृहेसंस्थितेषुचेतिकौर्मंव्याख्या
तंशुद्धितत्त्वेरहस्यंतु॥श्वशूद्रपतिताश्चांत्यामृताश्चेद्द्विजमंदिरे।शौचंतत्रप्रवक्ष्यामिमनुनाभा
षितंयथा।दशरात्राच्छुनिप्रेतेमासाच्छूद्रेभवेच्छुचिः।द्वाभ्यांतुपतितेगेहमंत्येमासचतुष्टयात्।
अत्यंतवर्ज्येदेहेहिनित्यमेवंमनुरब्रवीत्॥अत्यंतोम्लेच्छः।अंत्यतःश्वपाकइतिवाचस्पतिः।तत्रैवय
मः॥द्विजस्यमरणेवेश्मविशुध्यतिदिनत्रयात्।संवर्तः॥गृहशुद्धिंप्रवक्ष्यामिअंतस्थशवदूषिते
प्रोत्सृज्यमृण्मयंभांडंसिद्धमन्नंतथैवच।गोमयेनोपलिप्याथच्छागेनाघ्रापयेद्बुधः ब्राह्मणैर्मंत्र
पूतैश्चहिरण्यकुशवारिभिः।सर्वमभ्युक्षयेद्वेश्मततःशुद्ध्यत्यसंशयं॥बृहद्विष्णुः॥ग्राममध्यग
तोयावच्छवस्तिष्ठतिकस्यचित् ग्रामस्यतावदाशौचंनिर्गतेशुचितामियात्।गृह्यप०त्रादौमृतेप्ये
वं।अत्रमाधवीयेप्रचेतसा।मातृस्वस्रादिषुत्रिरात्रमुक्तं।मातृष्वसामातुलयोःश्वश्रूश्वशुरयोर्गुरो
मृतेचर्त्विजियाज्येचत्रिरात्रेणविशुध्यति।गुरुराचार्यः॥ऋत्विक्कुलागतः॥तत्रगृहेमृतेज्ञेयं।
श्वशुरयोरन्यत्रमृतावपिसन्निधौत्रिरात्रमसन्निधौपक्षिणी।देशांतरेएकरात्रंवक्ष्यमाणविष्णू
क्तेरितिमाधवगौडादयः॥अन्यत्रतुमातृस्वस्रादिषुपक्षिणीं।पित्रोःस्वसरितद्वच्चपक्षिणीः॥
क्षपयेन्निशामितिवृद्धमनूक्तेः।यत्तुवृद्धमनुः॥अन्यत्रसंस्कृतायांतुभ्रातर्यपिचसंस्कृते।मित्रजा
मातरिपत्नेदौहित्रेभगिनीसुते।शालकेतत्सुतेचैवसद्यःस्नानेनशुध्यतीति।तद्भ्रातृदौहित्रादे
देशांतरे।शालकसुतजामात्रोःस्वदेशेज्ञेयं।शालकेतुस्वदेशेएकाहः।आचार्यपत्नीपुत्रोपाध्या
यमातुलश्वसुरश्वशुर्यसहाध्यायिशिष्येष्वेकरात्रमितिमाधवीयेविष्णूक्तेः।हरदत्तीयेदशश्लोक्या
मप्येवं।श्वशुर्यःशालकः।देशांतरेस्नानं।श्वशुरयोर्देशांतरेएकाहःजाबालः॥एकोदकानांतु
त्र्यहोगोत्रजानामहस्स्मृतं सर्वत्रमूल्याभावेपित्र्यकंतुदेशाहः।गुरोःप्रेतस्यशिष्यस्तुपितृमेधं
समाचरेत् प्रेताहारैःसमंतत्रदशरात्रेणशुध्यतीतिमनूक्तेः।शिष्यइत्युपलक्षणं।निरन्वयेस
पिंडेतुमृतेसतिदयान्वितः तदाशौच तदाशौचपुराचीर्णोकुर्यात्तुपितृवत्क्रियामितिमाध
वीयेब्राह्मोक्तेः।दिवोदासीये।सगोत्रोवासगोत्रोवायोग्निंदद्यात्सखेवनरः सोपिकुर्यान्नवश्रा
द्धंचदशमेहनि।यत्रैकविषयेपक्षिण्येकाहादिपक्षद्वयमुक्तंतत्रसन्निधिविदेशभेदादि
कृताव्यवस्था।त्रिंशच्छ्लोक्यां॥वानप्रस्थेयतौचोपरमति कुलजेषट्केचाप्यूर्ध्वःस्याद्योविद्रो
विप्रगर्भेमृतवतितुदिनंयुद्धविद्धेचसद्यः।अत्रमूलमाकरेस्पष्टं।युद्धेऽभिमुखेमृतस्यस्नानं।उप

नैरहवेशस्थैः क्षत्रधर्महतस्य च सद्यः संतिष्ठते यज्ञस्तथाशौचमिति स्थितिरिति मनूक्तेः। यज्ञोत्यक्त
मे संवत्सरे देवेत्यर्थः। यत्तु भारते राजधर्मेषु॥ अशौच्यो हि हतः शूरः स्वर्गलोके महीयते नह्यन्नमु
दकं तस्य न स्नानं नाप्यशौचकमिति श्राद्धादिनिषेधः स पुत्राद्यभावपरः। अत एव तत्र कर्णादीनां
श्राद्धमुक्तं। अन्ये तु दशपिंडनिषेधमाहुर्यतिवत्। यत्तु पराशरः॥ आहवेषु हतानां च एकरात्रम
शौचकमिति। तद्युद्धस्थनेन कालांतरमृते ज्ञेयं असन्निधौ स्थानमिति माधवः। शुद्धितत्त्वेप्येव
रात्रौ। दंष्ट्रिभिः शृंगिभिर्वापि हतानां म्लेच्छैश्च तस्करैः। येषामप्यर्थे हता यांति राजन्स्वर्गे न संशयः
। सर्वेषामेव वर्णानां क्षत्रियस्य विशेषतः। यत्तु बृहस्पतिः॥ डिंबाहवे विद्युता च राज्ञा गोविप्रपाल
ने। सद्यः शौचं मृतस्याहुरहश्चान्ये महर्षयः। तच्छस्त्रं विना पराङ्मुखहते च विरामे। रात्रावप्याह
ते सद्यः शौचमन्यत्र त्रिरात्रं। तत्रैव व्याघ्रः। क्षतेन म्रियते यस्तु तस्याशौचं भवेद्दिवा। आसन्नात्त्रि
रात्रं स्याद्दशरात्रमतः परं। शस्त्राघातेऽक्षतं विना शवस्पर्शे तु हारीतः। शवस्पृशो ग्रामं न प्रविशेयुरा
नक्षत्रदर्शनाद्रात्रौ चेदादित्यस्य। यत्तु मनुः॥ अन्हा चैकेन रात्र्या च त्रिरात्रैरेव च त्रिभिः। शवस्पृशो वि
शुध्यंति त्र्यहादुदकदायिन॥ इति अन्हा रात्र्या चेति अहोरात्रमुक्तम्। त्रिभिस्त्रिरात्रैरिति नवरात्रमे
वं दशरात्रमित्यर्थः। तत्र तदन्नाशने तद्गृहवासे नापदि च ज्ञेयं। आनदन्नन्नमन्हैव न चेत्तस्मिन्गृहे वसेदि
ति तेनैवोक्तेः। अंगिराः॥ आशौचं यस्य संसर्गादापतेद्गृहमेधिनः। क्रियास्तस्य न लुप्यंते गृह्याणां
च न तद्भवेत्॥

॥अथ निर्हाराद्याशौचं॥

॥स्नेहेन सवर्णनिर्हारे तद
न्नाशने तद्गृहवासे च दशाहः। तदन्नाशने तद्गृहवासे त्र्यहः। गृहावासेऽन्नभक्षणे चैकाहं भिन्न
हरणे निर्हरणे चैव तज्जात्याशौचं यदि निर्हरति प्रेतं लोभाक्रांतमानसः। दशाहेन द्विजः शुद्ध्ये
द्द्वादशाहेन भूमिपः। मासार्द्धेन तु वैश्यस्तु शूद्रो मासेन शुध्यतीति कौर्मोक्तेः। विजातीयनिर्हारे तु श
वजातीयमशौचं॥ अत्र भृतिगृहे द्विगुणं। अवरश्चेद्वरं वर्णं वरो वाप्यवरं यदि। वहेच्छवं तदाशौ
चं दृष्ट्वा च द्विगुणं भवेदिति ब्राह्मोक्तेः। कौर्मे मेत इति गौडः। दोहप्येवं। यत्तु व्यासः॥ योऽवर्णं तु
मूल्येन नीत्वा चैव दहेन्नरः। आशौचं तु भवेत्तस्य प्रेतजातिसमं नृपेति। तदापदि ज्ञेयं। सोदकनि
हारे तु दशाह इति माधवः। अलंकरणे तु शंखः॥ कच्छपादौ सपिंडस्य प्रेतालंकरणे कृते [illegible]
नाद्युपवासः स्याद्दशाहे स्नानमिष्यते। धर्मार्थं त्वनाथसवर्णहरणे क्रियाकरणे बहुफलं स्नानं तु
यज्ञफलं स्नानेनशाणां यामोग्निस्पर्शश्चेति माधवीये। अंगिरस्प्येवं॥ प्रेतसंस्पर्शसंस्कारे ब्राह्मणो
नैव दुष्यति। वोढा चैवाग्निदाता च सद्यः स्नात्वा विशुध्यतीति ब्रह्मपुराणे बृहत्पराशरोक्तेः। मातुल
त्यादिसंबंधे त्रिरात्रं। असंबंधिद्विजान्वहित्वा दहित्वा च सद्यः शौचे संबंधे त्रिरात्रमिति पैठीनसि
स्मृतेः। गौतम मिताक्षरायां वृद्धात्रिः॥ स्नातकोद्विगुणं शावं शावाद्द्विगुणमार्तवं आर्तवाद्द्विगु
णा सूतिः सूतितोपि शवदाहकः। अत्र शवेन नीतरनिश्चितिरित्यर्थः॥ विष्णुः॥ मृतं द्विजं न शूद्रेण ना
हारयेन्न शूद्रं द्विजेन॥ देवलः॥ ब्रह्मचारी न कुर्वीत शवदाहादिकाः क्रियाः। यदि कुर्याच्चरेत्कृ
च्छ्रं पुनः संस्कारमेव च॥ याज्ञवल्क्यः॥ आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती भवेत्। अभुगन्नेन स
पिंडेन दोषः। विहितं हि सपिंडानामेव निर्हरणादिकं तेषां करोति यः कश्चित्तस्याधिकं विपतेत्

इतिदेवलोक्तेः॥ दोषस्त्वाद्यसपिंडस्यान्नानाथक्रियाविनेतिहारीतोक्तेः। समोत्कृष्टवर्णे तु माधवीये
कण्वः। अनुगम्य शवं बुध्वा स्नात्वा स्पृष्ट्वा हुताशनं। सर्पिः प्राश्य पुनः स्नात्वा प्राणायामैर्विशुध्यति।
हीनवर्णे तु क्षत्रिये त्र्यहः। वैश्ये पक्षिणी शूद्रे त्रिरात्रं क्षत्रियस्य वैश्ये त्र्यहः शूद्रे पक्षिणी वैश्यस्य शूद्रे त्र्य-
हमिति विज्ञानेश्वरः॥ माधवस्तु विप्रस्य वैश्ये द्व्यहः क्षत्रियस्य शूद्रे प्येवं॥ अन्यत्राप्यवगाह्य स्नानाग्नि
स्पर्शः घृताशनानि सर्वत्रेत्याह। हीनवर्णस्य दाहोर्ध्वदैहिककरणे तु ब्राह्मे॥ ब्राह्मणो हीनवर्णस्य
न कुर्यादौर्ध्वदैहिकं। कामाल्लोभादथो मोहात्कृत्वा तज्जातितां व्रजेत्॥ मनुः॥ ज्ञात्यानां याजनं कृ-
त्वा परेषामन्त्यकर्म च। अभिचारमहीनं च त्रिभिः कृच्छ्रैर्व्यपोहति। परेषां सर्ववर्णानां। हीनेषु तद्द्वैगुण्य-
त्रैगुण्यचातुर्गुण्याद्यूह्यं॥ ॥अथ एतेन समोत्तमवर्णयोः॥ ॥संचयनात्पू-
र्वं सचैलस्नानमूर्ध्वमाचमनम्। हीनवर्णे तु संचयनात्प्राक् सचैलमूर्ध्वं स्नानमात्रं॥ विप्रस्य क्षत्रवैश्य
विषये तु ब्राह्मे॥ अस्थिसंचयने विप्रो रोदिति चेत् क्षत्रवैश्ययोः। तदा स्नात्वा सचैलस्तु द्वितीयेहनि शुध्य-
ति। कृते तु संचये विप्रः स्नानेनैव शुचिर्भवेत्। क्षत्रस्य वैश्ये प्येवम्। शूद्रे तु संचयनात्प्राक् विप्रस्य त्रिरात्रं क्ष-
त्रवैश्ययोर्द्विरात्रं। ऊर्ध्वं तु द्विजानामेकाहः। शूद्रस्य शूद्रस्पर्शे विनास्थिसंचयात्पूर्वमेकाहः ऊर्ध्वं स-
ज्योतिरिति माधवीये ज्ञेयं। शुद्धितत्त्वे पारस्करस्तु॥ अस्थिसंचयनादूर्ध्वं मासं यावद्द्विजातयः। दिवसे-
नैव शुध्यंति वाससां क्षालनेन च। स्नानेहि वसनेनैव त्र्यहात्क्षत्रियवैश्ययोरित्युक्तम्। सपिंडनारो-
दने निर्हरणादावदोष इत्युक्तं प्राक्। विज्ञानेश्वरस्तु। मृतस्य बांधवैः सार्द्धं कृत्वा तु परिदेवनं। वर्जयेत्त-
दहोरात्रं दानश्राद्धादिकर्म चेति पारस्करोक्तेः सर्वत्रैकरात्रमाह॥ ॥अथाशौचा-
न्नभक्षणे॥ विष्णुः॥ ब्राह्मणादीनामाशौचे यः सकृदेवान्नमश्नाति तस्य तावदा-
शौचं यावत्तेषां। आशौचव्यपगमे प्रायश्चित्तमिति। अज्ञाने त्वंगिराः॥ अंतर्दशाहे भुक्त्वान्नं सूतके
मृतकेपि वा। अस्याशौचं भवेत्तावद्यावदन्नं जरत्यधः। प्रायश्चित्तं तु मत्या विप्रस्य वर्णक्रमेणाह।
अहःपंचाहसप्ताहोपवासः। दशविंशतिषष्टिः शतं च प्राणायामाः पंचगव्याशनं च। अभ्यासे द्विगु-
णं। आपदि तु प्राणायामशतं पंचशतमष्टसहस्रं गायत्रीजपश्च॥ मत्या यदि तु सवर्णाशौचे त्रिरघम-
र्षणं गायत्र्यष्टसहस्रं च। क्षत्रियाशौचे उपवासश्च। वैश्याशौचे त्रिरात्रोपवासश्च। शूद्राशौचे कृच्छ्रं
क्षत्रवैश्ययोः पंचशतमष्टशतं गायत्रीजप उक्तमेषु। शूद्रस्य सर्वत्र स्नानं। मत्या नापदि विप्रस्य वर्णे-
षु शांतपनकृच्छ्रमहाशांतपनचांद्रायणं। अभ्यासे तु मासिकद्वैमासिकत्रैमासिकषाण्मासिका-
नीत्यादि माधवीयाद्यज्ञेयं॥ ॥अथ दासस्य स्वदास्युत्पन्नस्य॥ ॥स्वस-
पिंडमृतौ स्नानमात्रेण स्वामिकार्ये स्पृश्यत्वं भक्तदासस्य त्र्यहोर्ध्वं। सद्यः स्पर्शो गर्भदासो भक्तदास-
स्त्र्यहाच्छुचिरिति स्मृत्यंतरोक्तेः। मूल्यकर्मकराः शूद्रा दासीदासास्तथैव च॥ स्नाने शरीरसंस्का-
रे गृहकर्मण्यदूषिताः इति शातातपोक्तेश्च। एतच्चानन्यसाध्ये तत्कार्यमात्रे। अन्यत्र मासाद्याशौ-
चमस्त्येव। एवं दास्यामपि सूतिकायां तस्या अस्पर्शत्वमपि मासमात्रं। दासीदासश्च सर्वो वै यस्य
वर्णस्य यो भवेत्। तद्वर्णस्य भवेच्छौचं दास्या मासस्तु सूतकमित्यंगिरसोक्तेः। षडशीतावपि॥
स्वामिशौचेन दासाद्याः स्पृश्या मासानुकर्मसु। योग्यास्तु भोसतो दासी सूती चेन्न स्पर्शनामियात्

दत्तदासादीनां स्वसपिंडमरणादौ स्वाम्याशौचसमसंख्यदिनोर्ध्वं स्वस्यापि मातामाद्याशौचे स्वामिका ॥
र्यं स्यादिति हरदत्तः ॥ दासांतेवासिभृतकाः शिष्याश्चैकत्रवासिनः । स्वामितुल्येन शौचेन शु ॥
ध्यंति मृते सूतकेऽपि हरदत्तस्मृतेः । दासश्चात्र गृहजातस्तथा क्रीतो लब्धो दायादुपागतः । अन्ना
कालभृतस्तद्वदाहितः स्वामिना च यः । मोक्षितो महतश्चर्णाद्युद्धप्राप्तः पणे जितः । तवाहमित्यु
पगतः प्रव्रज्यावसितः कृतः । भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः । विक्रेता चात्मनः शास्त्रे दा
सः पंचदश स्मृता इति नारदोक्तपंचदशविधदासभक्तदासौ विना ज्ञेयः ॥ वडवा दासी ॥ तया हृतः तम्
उद्वाह्य दासो जात इत्यर्थः । अंतेवास्यपि तेनैवोक्तः । स्वशिल्पमिच्छन्नाहर्तुं बांधवानामनुज्ञया
आचार्यस्य वसेदंते कृत्वा कालं सुनिश्चितं । आचार्यः शिक्षयेदेनं स्वगृहे दत्तभोजनमिति । शि
ष्यस्तु तुल्यो विद्यार्थी । दासादेः स्वामिनः सपिंडमरणेऽनुवृत्तिः । पत्नीनां दासानामानुलोम्येन स्वा
मितुल्यमाशौचं मृते स्वामिन्यात्मीयमिति । प्रतिलोमदासानामाशौचाभावः । वर्णानामानुलो
म्येन दास्यं न प्रतिलोमत इति याज्ञवल्क्योक्तेः ॥ ॥ अथ शौचे जननमरणे वा रात्रिविभा
गं कृत्वाद्यभागद्वये चेत्पूर्वदिनं अन्यथोत्तरमिति मिताक्षरायां । यत्तु प्रागर्धरात्रात्तत्स्यात्सूर्योद
यात्पूर्वदिनमित्युक्तं । तत्तद्देशाचारतो व्यवस्था । सर्वमाशौचमाहिताग्नेर्दाहतः अन्यस्य मरण
मारभ्य ज्ञेयं । अनग्निमत उत्क्रांतेराशौचादि द्विजातिषु । दाहादग्निमतो विद्याद्विदेशस्थे मृते स
तीति पैठीनसिस्मृतेः । साग्निराहिताग्निः । आहिताग्निश्चेत्प्रवसन्म्रियेत पुनः संस्कारं कृत्वा
शववदाशौचमिति वासिष्ठे विशेषोक्तेः । दाहादेवानुकर्त्तव्यं यस्य वैतानिको विधिरिति वा लाय
नधृते स्वामिनारम्भां गरेणचोक्तं ॥ आहिताग्नेरपि मरणादेव दशरात्रं । दशाहं शावमाशौच
मिति मरणनिमित्तत्वात्तस्य । यत्तु दाहादेव तस्याशौचमुक्तं तत्संस्कारनिमित्ताशौचं पृथगे
वा तेन गृह्याग्नेः संस्कारांगं त्रिरात्रं । श्रौताग्नेस्तु दशरात्रं । मरणनिमित्तमुभयोर्दशाहं दाहात्प्रागपीति
तद्वचनविरोधात्सर्वस्यैवोत्कर्षोन्मूलकत्वेनालाघवाच्चिंत्यं ॥ ॥ अथातिक्रांताशौ
चं ॥ ॥ तत्राशौचमध्ये जननादौ ज्ञाते तच्छेषेणैव शुद्धिः ॥ विगतं तु विदेशस्थं शृणुया
द्यो ह्यनिर्दशं । यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेदिति मनूक्तेः । अत्र केचिदेतत्पुत्रातिरिक्त
विषयं । तेषां त्वाशौचमध्ये श्रवणेऽपि तदाद्येव दशाहादि । पितरौ चेन्मृतौ स्यातां दूरस्थोऽपि हि पुत्र
कः । श्रुत्वा तद्दिनमारभ्य दशाहं सूतकी भवेदित्यस्य सर्वापवादत्वादित्याहुः । तन्न ॥ ज्ञानमरण
स्यानिमित्तत्वात् ॥ अनग्निमत उत्क्रांतेरित्यादिविरोधाच्च ॥ स्मृत्यर्थसारेऽपि ॥ जनने मरणे वा प्रथ
मदिनादूर्ध्वं ज्ञाते पुत्रादीनां शेषेणैव शुद्धिरिति । षडशीतावपरार्केऽप्येवं । दशाहादूर्ध्वं ज्ञाने तु वृद्ध
वसिष्ठः ॥ मासत्रये त्रिरात्रं स्यात्षण्मासे पक्षिणी तथा । अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्य
ति । जनने त्वतिक्रांताशौचं नास्त्येव । नाशुद्धिः प्रसवाशौचे व्यतीतेषु दिनेष्वपीति देवलोक्तेः । पि
तुः स्नानं तत्रापि भवत्येव । निर्दशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च । सवासा जलमाप्लुत्य शुद्धो भव
ति मानवः । इति मनूक्तेः ॥ तच्चातिक्रांताशौचं दशाहादिजात्याशौचविषयं । न त्वनुपनीतादिनि
मित्तत्रिरात्रादौ ॥ उपनीते तु विषमं तस्मिन्नेवातिकालजमिति व्याघ्रोक्तेः । निर्दशं ज्ञातिमरणे ।

अतिक्रान्तेदशाहेत्वितिमनूक्तेश्च॥माधवीयेदेवलस्तु॥आत्रिपक्षात्त्रिरात्रंस्यात्षण्मासात्पक्षिणीत-
तः॥परमेकाहमावर्षादूर्ध्वंस्नातोविशुध्यतीत्याह।तत्रापदनापद्विषयत्वेनव्यवस्था।इदंचैकदेशे
देशान्तरेतुस्नानमात्रं।देशान्तरमृतेश्रुत्वाक्लीबेवैखानसेयतौ। मृतेस्नानेनशुध्यंतिगर्भस्रावेचगो-
त्रिणइति॥पराशरोक्तेरितिविज्ञानेश्वरः।स्नानंवत्सरान्ते।अर्वाक्त्रिपक्षात्त्रिनिशंषण्मासाच्च
दिवानिशं।अहःसंवत्सरादर्वाक्देशान्तरमृतेष्वपीतिस्मृतेरितिमाधवः।इदंसपिंडानां।देशांत-
रेस्नानंसोदकानामिति।युक्तंतल्लक्षणंत्वाहबृहस्पतिः॥ महानद्यन्तरंयत्रगिरिर्वाव्यवधायकः।
वाचोयत्रविभिद्यन्तेतद्देशान्तरमुच्यते।देशान्तरंवदन्त्येकेषष्टीयोजनमायतं।चत्वारिंशद्वदन्त्येकेत्रिं-
शदन्येतथैवचेति॥एतत्सर्वंमातापितृमित्रविषयं।तयोस्तुपितरौचेदितिपूर्वपैठीनसिवाक्यात्स-
दापूर्वमेवदशाहादि।स्मृत्यर्थसारे॥मातापितृमरणेदूरदेशेपिसंवत्सरोर्ध्वमपिपुत्रोदशाहादिकं
पूर्णमाशौचंकुर्यात्॥स्त्रीपुंसयोःपरस्परंसवर्णोत्तमवर्णसपत्नीषुचैवमिति।शुद्धितत्त्वादयोगौ-
डास्तु॥ऊर्ध्वंसंवत्सराद्यत्रबंधुश्चेच्छ्रूयतेमृतः।भवेदेकाहमेवात्रनचसन्यासिनांत्वितिदेवलो-
क्तेःपित्रोरब्दमध्येत्रिरात्रमूर्ध्वमेकाहः।बंधुर्मातापिताभर्त्ताच।पूर्वोक्तदशाहस्तुकलिंगादिदेशप-
रइत्याहुः।तन्नबंधुपदस्यपित्रादिपरत्वेमानाभावात्।उपेक्ष्यम्।शौ दंसपत्नमातृस्तुदक्षः।पितृपत्न्या-
मपेतायांमातृवर्जंद्विजोत्तम संवत्सरेव्यतीतेपित्रिरात्रमशुचिर्भवेत्॥ हीनवर्णामातृहीनवर्णे
सपत्नीषुचैवमितिस्मृत्यर्थसारे।केचित्तुःपत्न्यांप्रमीतायामौरसेनतनयेनचेति।ब्राह्मोक्तेरौ-
रसेपीदमाहुः॥षडशीतावप्येवं।एतत्सर्ववर्णतुल्यं।तुल्यंवयसिसर्वेषामतिक्रान्तेतथैवचेति
मार्कोक्तेः॥ ॥अथाशौचसंपातउच्यते॥ ॥तत्रशावेशावंसू-
तकेसूतकं।शावेसूतकं।सूतकेशावंवा॥तत्राप्युत्तरकालतःपूर्वेणसमन्यूनमधिकंचेतिद्वाद-
शभेदाः।यदेकदिनेसमन्यूनमधिकंवाशौचद्वयंतत्रतंत्रेणान्यसिद्धिः॥द्वयोरेककालत्वात्।य-
दातुद्वितीयादिदिनेपूर्वंसजातीयंशावेजननेवासमकालं।न्यूनकालंवापरस्यात्तदापरस्तुपू-
र्वशेषेणशुद्धिः॥अंतराजन्ममरणेशेषाहोभिर्विशुध्यतीति॥याज्ञवल्क्योक्तेःअंतरा-
ज्ञातेइत्यर्थः।ज्ञानस्यैवजननादेर्निमित्तत्वात्॥पूर्वाशौचोत्तरंतन्मध्योत्पन्नेज्ञातेतूत्तरमेवका-
र्यं।शुद्धितत्त्वेप्युक्तं।पूर्वाशौचान्तरुत्पन्नं समानंलघुवानिमित्तंतत्कालादुपरिस्थितस्याशौचहे-
तुरेव।अज्ञातंतुन।अविज्ञानेनदोषस्याकाशादिषुकथंचनेत्यस्याशौचसांकर्येपिप्रवृत्तेः॥त-
न्नाज्ञानात्।उपोत्सर्गादौकृतेपश्चात्तज्ज्ञानेपितावृत्तिरिति।माधवीयेयमोपि॥जननेजननंचे-
त्स्यान्मरणेमरणंतथा।पूर्वशेषेणशुद्धिःस्यादन्तरशौचवर्जनं।अत्रकेचिद्दशाहस्यान्तं-
चेत्पुनर्मरणजन्मनी॥तावत्स्यादशुचिर्विप्रोयावत्तत्स्यादनिर्दशमिति मनुपराशरोक्तेर्दशा-
हमध्यस्थमरणाशौचएवपूर्वशेषेणशुद्धिः।अहाद्यल्पाशौचसंपातेतत्तरेणैवशुद्धिरित्याहुः।ह-
रदत्तोप्येवमाह।गौडाअप्येवं।तन्न॥याज्ञवल्क्यादिवशेनदशाहस्यतुल्यकालाशौचोपलक्ष-
णत्वात्।समानाशौचसंपातेप्रथमेनसमापयेत्।असमानंद्वितीयेनधर्मराजवचोयथेतिमाध-
वीयेशंखोक्तेः।अपरार्कमिताक्षरादिविरोधाच्च।यदातुसूतकेशावंसमंन्यूनमधिकंवातदान

पूर्वशेषाच्छुद्धिः॥ तदाहांगिराः॥ सूतके सूतकं चेत्स्यान्मृतके त्वथ सूतकं। तत्राधिकृत्य मृतकं शौचं कुर्या
न्न सूतकं॥ षट्त्रिंशन्मते॥ शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत्। शावेन शुध्यते सूती न सूती शावशो
धिनी॥ चतुर्विंशतिमतेऽपि॥ मृतेन शुध्यते जातं न मृतं जातकेन तु। अतो परादशाह। जननमध्ये न
दंते वा अहादिशावं तदा पूर्वेण शुद्धावपि निमित्तमरणस्य त्वभवत्येव। मरणोत्पत्तियोगे तु मरिष्य
मरणं भवेदिति कौर्म्योक्तः। गौतमस्याप्येषां चरुत्रानिरपि। सूतकाद्द्विगुणं शावं शावाद्द्विगुणमार्तवं
आर्तवाद्द्विगुणा सूती ततोऽपि शवदाहकः। अत्र पूर्वपूर्वेण नोत्तरोत्तरनिवृत्तिरस्पर्श्यत्वाधिक्या
दित्यर्थः। षडशीतावपि। स्वभावबहुत्वात्तु न्यूनशावविशोधिनीति। रात्रिशेषादौ च दिनद्वितीरि
नैरागंतुकैः। सूते बहुत्वं न स्वभावेनात लन न्यूनशावस्यापि न पूर्वेण शुद्धिरिति वक्तुं स्वभावेनात
तन्न्यूनशावस्यापि न पूर्वेण शुद्धिरिति वक्तुं स्वभावेरत्युक्तं। वाच्ये। नागंतुकैरधाहोभिराशौचमप
नुपपद्यते। न च पातनिमित्तेन शावस्य स्पर्शोपनिमित्तिः एवं न च पक्षाः। यदा तु महापत्याशौचमध्ये
सजातीयं विजातीयं वा दीर्घकालमुत्तरं तदा पुनरं पूर्वकार्येन पूर्वेण शुद्धिः। स्वल्पाशौचस्य म
ध्ये तु दीर्घाशौचं भवेद्यदि। न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुध्यतीति। उशनसोक्तेः। तेन त्र्यहादि
शावमध्ये दशाहादिसूतकेऽपि न पूर्वेणाशुद्धिरित्यपरार्कः। शावनिमित्तमस्पृश्यत्वमभवत्येवाशुद्धि
विवेकेन तु शावेन शुध्यते सूतिरिति भागकेलवापुत्तराशौचनिवृत्तिरुक्ता। तन्न॥ उत्तरस्य कालाधि
क्येन बलवत्वात्। माधवीयेऽप्येवं॥ अथ शुद्धिमदाशौचं पश्चिमेन समापयेत्। यथा त्रिरात्रे प्रक्रांते
दशाहं प्रविशेद्यदि। आशौचं पुनरागच्छेत्तत्समाप्य विशुध्यतीति। हारीतोऽपि। गुरुणा लघुनश्चे
तु लघुना नैव तद्गुर्विति। गुरुत्वं च लघुत्वं च कालकृतमेव। पूर्वानुरोधात्। एतच्च हरदत्तेन स्पष्टमुक्तमपि
नाशौचपातमप्येवं॥ यत्तु त्र्यधानां योगपद्येतु त्रेधा शुद्धिर्गरीयसी। मरणोत्पत्तियोगे तु गरीयो मरणं भवे
दिति हारीतकौर्मादि तत्रास्पृश्यताभिप्रायं शावस्य गुरुत्वे तेषां क्वचिदल्पकालेनापि दीर्घकाला
शौचनिवृत्तिमाह। देवलः॥ परतः परतोऽशुद्धिरघवृद्धौ विधीयते। स्याच्चेत्पंचतमादह्नः पूर्वेणैवात्र
शिष्यते॥ अस्यार्थः॥ अघवृद्धौ दीर्घाशौचे परतोऽशौचशुद्धिः परतोऽशौचं पतितपूर्वाशौचमुत्तरस्य पंच
दिनात्परतोऽनुवर्तते। तदा पूर्वेणैव शुद्धिः पूर्वस्मात्तराशौचाद्दीर्घकालव्यापिनेऽपि शेषाच्छुद्धिरि
त्यर्थः। यथा षष्ठमासे गर्भपातनिमित्तषडहाशौचमध्ये दशाहपाते पूर्वेणोत्तरनिवृत्तिः यथावाग्र
हमध्ये स्रावपातनिमित्तचतुरहपंचाहयोरिति कश्चित्॥ तन्न॥ दशाहावधिपूर्वशेषशुद्ध्यादेकवा
क्यविरोधात्। षष्ठादिदिने तु पूर्णाशौचं मत्स्यराज्ञोऽनुद्यहस्त्यनौ वित्याच्च॥ अस्मद्गुरवस्तु पंचतमा
दह्न आततो न्यूनं। अहादिन्नेत्याशावासिन् विषये पूर्वेणाशुद्धिः शिष्यते। दशाहादिरात्रिशेषे
अहादस्याशौचानां परस्परं रात्रिशेषसंपाते च नद्यहादिशुद्धिरित्यर्थमाहुः क्वचित्पूर्वशेषेणाशु
द्धेरपवादमाह गौतमः। रात्रिशेषे सति द्वाभ्यां प्रभाते तिसृभिरिति। प्रभाते त्वपायेः। रात्रिशेषे त्र्यहा
च्छुद्धिर्यामत्रयेषु चित्र्यहादिति शातातपोक्तेः। इदं शावांते सूतकपाते सजातीयेऽवानुल्यं। अ
त्रकेचित्। रात्रिशब्दः अहोरात्रिपरः। अहःशेषे द्वाभ्यां प्रभाते तिसृभिरिति शंखलिखितावुक्तेः॥
॥अथ परदेशस्थज्ञातिमरणे त्रिपक्षादर्वाग्दशरात्रमाशौचं॥ ॥मानवमाद्विवसात्र

रात्र्यूर्ध्वं द्विरात्रेण सुषुप्तायां त्रिरात्रेणेति बौधायनोक्तेः पुनः पाते दशाहः। आकृष्णेन सह गच्छेत् दशमे
ऽह्नि पतेद्यस्याहर्द्वयात् विशुध्यति। प्रभाते तु त्रिरात्रेण दशरात्रेष्वयं विधिरिति देवलोक्तेश्च। नवमद
शमयोरशौचापाते तु दिनपरो। तेन क्षत्रियादावपि तथेत्याहुः। माधवीयेप्येवं। अन्ये त्वाहुः अंत
र्दशाहे स्यातां चेत् पुनर्मरणजन्मनी। तावत्स्यादशुचिर्विप्रो यावत्तत्स्यादनिर्दशमिति। मनुपराश
राभ्यां दशमदिने तत्रस्य शुद्धेरुक्तत्वाद्विरोधः स्पष्ट एव विरोधे च यद्वै किंचन मनुरवदत्तद्भेषजं। क
लौ पराशरः स्मृतिरित्यनेन च पूर्ववचसां बाधः। अत एव वाचस्पतिनानेषामनाकरत्वमुक्तम्। सा
करत्वेपि जातिमात्रविप्रादिविषयं देशांतरविषयं युगांतरविषयं वास्तु। तेन गौतमीये रात्रिशब्दे
नाहोरात्रपरः रात्रिमात्रावशिष्टे इति मिताक्षरोक्तेश्च। तन्नु कविज्ञानेश्वरेणान्यथा व्याख्या युक्ता।
माधवस्तु। अनिर्गतदशाहमिति पूर्वेस्त्वयं यथ विरोधादुपेक्ष्य इति अस्मत्पितृचरणास्तु बौधाय
नीये आ नवमाद्दिवसादिति द्वितीयाशौचस्य नवमे दिने प्रथमस्य दशममेवाहुः। द्यहादिवृद्धेः पू
र्वशेषापवादत्वात्तस्य चत्यापत्तौ द्वितीयदिनादेव प्रवृत्तेः। अत ऊर्ध्वमिति दशमरात्रिपरं। शंखलि
खितावुक्तौ देवलोक्तौ चाहःशेषदशमेऽह्नि चातीते रात्रौ पतेदित्यर्थः। दशम्यां पितृनाम कुर्यादिति
वत्। तेन न मन्वाद्यैर्विरोधो नापि मिताक्षराद्यैरित्याहुः। अपरार्के निर्णयामृते त्वरसोप्येवं। यत्तु त्रै
वमाते॥ आद्यंत भागद्वयं यावन्मृतकस्य तु सूतके। द्वितीये पतिते त्वाद्यात्सूतकाच्छुद्धिरिष्यते।
अत ऊर्ध्वं द्वितीयात्तु सूतकात्तच्छुचिः स्मृतः एतदेव विचार्यं स्यान्मृतके मृतकांतरे। मृतकस्यांत
रे पतन् सूतकं प्रति पद्यते॥ सूतकस्यांतरे वाथ मृतकं यत्र विद्यते। मृतकांते भवेत्तत्र शुद्धिर्वर्णेषु सर्व
श इति। अस्यार्थस्तत्रैवोक्तः॥ पूर्वाशौचपरमहोरात्रस्य दिनरूपे आद्यभागद्वये अन्याशौचपाते पू
र्वेण शुद्धिः। भागद्वयार्ध्वं रात्रौ सूतकांतरे द्वितीयात्। पूर्वं भिन्नात् सूतकांतात् द्यहादिपूर्वा शुद्धि
रिति। अपरार्के त्वाशौचकाले त्रिधा विभज्य निर्गुणविषयत्वेनेदमुक्तं अस्य वचनस्य निर्मूल
त्वोक्तिरन्तोक्तिरेव। अतः पूर्वाशौचात्यरात्रावन्याशौचे अहोरात्रद्वयमधिकं। रात्रेरंत्ययामे तु दिन
त्रयमिति शूद्रचरणोपदिष्टः पंथाः॥ एतत्संपूर्णाशौचसंपाते एव रात्रिशेषे त्रिरात्रादिसंपाते तु पूर्व
शेषेणैव शुद्धिः। द्विरात्रादिवृद्धेः पूर्ववाक्ये दशाहविषयत्वादपवादाभावे शेषशुद्धेरेव सामान्य
तः प्रवृत्तेः॥ षडशीतौ तु दशाहांते अहःपातेपि द्वित्रिदिनवृद्धिरुक्ता॥ रात्रिशेषपदाशौचं पूर्वान
धिकमापतेत्। ऊर्ध्वं दिनद्वयं पूर्वा यामशेषे दिनत्रयमिति। अनधिकसमन्यूनं वा तन्तुच्छं॥ त
स्य निर्मूलत्वादंते पक्षिण्यादिपातेपि द्विरात्रादिवृद्ध्यापत्तेश्च। पूर्वाशौचांतवर्तित द्वित्रिदिनमध्ये
धिकाशौचांतरपाते तु वर्धितस्याल्पत्वादधिकेनैव शुद्धिः। न च वर्धितस्य पूर्वशेषत्वं शंकनीयं॥
रात्रिशेषे पूर्वशेषशुद्ध्यपवादे नैमित्तिकवृत्तिन्यायोज्जीवनात्। अपवादाभावे उत्सर्गस्य प्राप्तेः। अ
पवादमाह शंखः॥ मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता। पितुः शेषेण शुद्धिः स्यान्मातुः कुर्या
त्तु पक्षिणीं। पादत्रयं स्पष्टम्॥ तुर्यस्य त्वयमर्थः। पित्राशौचमध्ये मातृमृतौ पित्राशौचांते मातुः पक्षि
णीमधिकां कुर्यादिति॥ तत्राशुद्धावित्युक्ते रात्र्यहादेः पितुरशौचाभावान्मातृमरणे न पक्षिणी।
किंतु पूर्णमेवाशौचं। इयं च पक्षिणी तृतीयादिपरतनाद्यदिनद्वये प्रति निमित्तं नैमित्तिकावृत्तिन्या

पूर्वशेषाच्छुद्धिः॥ तदाहांगिराः॥ सूतके सूतकं चेत्स्यात् मृतके त्वथ सूतकं तत्राधिकृत्य मृतकं शौचं कुर्या
न्न सूतकं॥ षट्त्रिंशन्मते॥ शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत्। शावेन शुध्यते सूती न सूती शावशो
धिनी॥ चतुर्विंशतिमतेऽपि॥ मृतेन शुध्यते जातं न मृतं जातकेन तु। अतो यदा दशाह जननमध्ये न
दंने वा अहादिशावं तदा पूर्वेण शुद्धावपि तन्निमित्तमस्पृश्यत्वं भवत्येव। मरणोत्पत्तियोगे तु मरियो
मरणं भवेदिति कौर्मोक्तं। गौतमव्याख्यायां हरदत्तोऽपि। सूतकाद्द्विगुणं शावं शावाद्द्विगुणमार्तवं
आर्तवाद्द्विगुणा सूती ततोऽपि शवदाहकः। अत्र पूर्वपूर्वेणोत्तरोत्तरनिवृत्तिरस्पृश्यत्वाधिक्या
दित्यर्थः। षडशीतावपि। स्वभाववह्नहत्यन्तिसूत्यन्तं न शावविशोधिनीति। रात्रिशेषादेव वर्द्धितद्वित्रादि
नैरागंतुकैः। सूतवेहुत्वं न स्वभावेनात लन्त्र्यूनेन शावस्यापि न पूर्वेण शुद्धिरिति वक्तुं स्वभावेनात
लत्र्यूनशावस्यापि न पूर्वेण शुद्धिरिति वक्तुं स्वभावेत्युक्तं। वाह्यं। नागंतुकैरप्यहोभिरशौचमप
नुपपद्यते। तत्र पातनिमित्तेन शावस्यास्पृश्यत्वमिति। एवं नवपक्षाः। परान्तु त्र्यहाद्यल्पाशौचमध्ये
सजातीयं विजातीयं वा दीर्घकालमुत्तरं तदा पुत्तरं पूर्णकार्यं न पूर्वेण शुद्धिः। स्वल्पाशौचस्य म
ध्ये तु दीर्घाशौचं भवेद्यदि। न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुध्यतीति। उशनसोक्तेः। तेन त्र्यहादि
शावमध्ये दशाहादिसूतकेऽपि न पूर्वेण शुद्धिरित्यपरार्कः। शावनिमित्तमस्पृश्यत्वं भवत्येवाशुद्धि
विवेके तनु शावेन शुध्यते सूतिरिति पाठे अल्पकालेनापुत्तराशौचनिवृत्तिरुक्ता। तन्न। उत्तरस्याल्पकालाधि
क्येन बलवत्त्वात्। माधवीयेप्येवं॥ अथ शुद्धिमदाशौचं पश्चिमेन समापयेत्। यथा त्रिरात्रे प्रक्रांते
दशाहं त्वविशेषयदि। आशौचं पुनरागच्छेत्तत्समाप्य विशुध्यतीति। हारीतोऽपि। गुरुणा लघुमध्ये
तु लघुना नैव तद्भवेदिति। गुरुत्वं च लघुत्वं च कालकृतमेव। पूर्वानुरोधात्। एतच्च हरदत्तेन स्पष्टमुक्तं। मि
ताक्षरायामप्येवं॥ यत्तु अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसी। मरणोत्पत्तियोगे तु गरीयो मरणं भवे
दिति हारीतकौर्मोक्तिः। तत्रास्पृश्यत्वाभिप्रायं शावस्य गुरुत्वं ज्ञेयं। क्वचिदल्पकालेनापि दीर्घकाला
शौचनिवृत्तिमाह देवलः॥ परतः परतोऽशुद्धिरघवृद्धौ विधीयते। स्याच्चेत्पंचतमादह्नः पूर्वेणैवात्र
शिष्यते॥ अस्यार्थः॥ अघवृद्धौ दीर्घाशौचे परतोऽशौचशुद्धिः परतोऽशौचं यदि पूर्वाशौचमुत्तरस्य पंच
दिनात्परतो नुवर्तते। तदा पूर्वेणैव शुद्धिः। पूर्वस्मान्नाशौचाद्द्वैधिककालव्यापिनि पूर्वशेषाच्छुद्धिरि
त्यर्थः। यथा षष्ठमासे गर्भपातनिमित्तषडहाशौचमध्ये दशाहपाते पूर्वेणोत्तरनिवृत्तिः। यथा वा त्र्य
हमध्ये स्रावपातनिमित्तचतुरहपंचाहयोरिति कश्चित्॥ तन्न॥ दशाहावधिपूर्वशेषशुद्ध्यादेकवा
क्यविरोधात्। षष्ठादिदिने पूर्णाशौचं मंतपरत्रौ तु त्र्यहस्त्यतो विरूपाच्च॥ अस्माद्गुरवस्तु पंचतमा
दह्न आरभ्य ततोऽन्यूनं। अहादित्रयाशौचास्मिन्विषये पूर्वेणैवाशुद्धिः शिष्यते। दशाहादिरात्रिशेषे
अहादल्पाशौचानां परस्परं रात्रिशेषसंपाते च न द्व्यहादिवृद्धिरित्यर्थमाहुः। क्वचित्पूर्वशेषेणाशु
द्धेरपवादमाह गौतमः। रात्रिशेषे सति द्वाभ्यां प्रभाते तिसृभिरिति। प्रभाते त्वयामे। रात्रिशेषे द्व्यहा
च्छुद्धिर्यामशेषे शुचिस्त्र्यहादिति शातातपोक्तेः। इदं शावोत्तरसूतकपाते सजातीये वा तुल्ये। अ
त्र केचित्। रात्रिशब्दः अहोरात्रिपरः। अहःशेषे द्वाभ्यां प्रभाते तिसृभिरिति शंखलिखितोक्तेः॥

॥ अथ यदि दशरात्राः संनिपतेयुराद्यं दशरात्रमाशौचं॥ ॥मानवमाद्दिवसात्

पनुव्रतीपेतंनव्रतेनविमुच्यतेइतिमनूक्तेः निर्हरणमंत्यकर्मपरं एवंमातामहस्य। यथाव्रतस्थोपिसुतःपितुः
पौर्ध्वक्रियांनृप तथामातामहस्यापिदौहित्रःकर्तुमर्हतीतिभविष्योक्तेः। मातापित्रोरुपाध्याया
चार्ययोरौर्ध्वदेहिकं। कुर्वन्मातामहस्यापिव्रतीनभ्रश्यतेव्रतादितिकालादर्शोक्तेश्च। तत्रांत्यकर्मनिमित्तमस्पृ
श्यत्वंदशाहमस्त्येव। सगोत्रोवाऽसगोत्रोवायोग्निंदद्यात्सखेनरः सोपिकुर्यात्नवश्राद्धंशुद्धेतुदशमेहनी
तिदिवोदासोक्तसूचनात्। अतएवब्रह्मचारिणः शवकर्मणोव्रतान्निवृत्तिरन्यत्रमातापित्रोर्गुरोश्चेति
गौतमीयेव्रतनिवृत्तेरेवपर्युदासोनाशौचस्य। संध्यादिकर्मलोपस्तुनास्ति तत्पत्नेत्रतकेकर्मब्रह्मचा
रीत्ययंकश्चितइतिकंदोगपरिशिष्टात्। पित्रोर्गुरौविपन्नेतुब्रह्मचार्यपियःसुतः। सव्रतस्थोपिकुर्वीत
अग्निकुंडोदकक्रियां। तेनाशौचमकर्तव्यंसंध्याचैवनलुप्यते। अग्निकार्यंचकर्तव्यंसायंप्रातश्च
नित्यशइतिचंद्रिकायां॥ संवर्तश्च॥ अत्रकर्मानधिकाररूपाशौचनिषेधएव। अपरार्केमाधवीये
तु। एकाहमाशौचमाहुः। आचार्यंवाप्युपाध्यायंगुरुंवापितरंचवा। मातरंवास्वयंदग्ध्वाव्रतस्थस्त
त्रभोजनं। कृत्वापततितोतस्मात्प्रेतान्नंतत्रभक्षयेत् अन्यत्रभोजनंकुर्यान्नचतैःसहसंवसेत्। ए
काहमशुचिर्भूत्वाद्वितीयेहनिशुध्यतीतिब्राह्मोक्तेः। तदन्नभोजनेतुप्रायश्चित्तंपुनरुपनयनमाशौ
चंच॥ दिवोदासादयस्तु। ब्राह्मोक्तेः॥ प्रथमेन्हिसंध्यादिलोपः। ब्रह्मचारीयदाकुर्यात्पिंडनिर्वपणं
पितुः। तावत्कालमशौचंस्यात्पुनःस्नात्वाविशुध्यतीति। प्रजापतिवचनात् द्वितीयाहादौपिंडदान
कालेएवास्पृश्यत्वमात्रंनान्यदित्याहुः। दशाहमस्पृश्यत्वेपिकर्मांगस्नानविधानार्थमेतदितियुक्तं।
अंत्यकर्माकरणेतुब्रह्मचारिणः। पित्रादिमरणेप्याशौचाभावएव। सोपिब्रह्मचर्यकालएव। समा
वर्तनोत्तरंतुपूर्वमृतानामाशौचंभवत्येव। आदिष्टीनोदकंकुर्यादाव्रतस्यसमापनात्। समाप्तेतूदकं
दत्वात्रिरात्रमशुचिर्भवेदितिमनूक्तेः। तत्रापिविकल्पः। पितर्यपिमृतेनैषांदोषोभवतिकर्हिचित्
आशौचंकर्मणोंतेस्यात्त्र्यहंवाब्रह्मचारिणामितिकंदोगपरिशिष्टात्॥ यथाकृतजीवच्छ्राद्धेन
किमप्याशौचंनकार्यमितिहेमाद्रिःशुद्धितत्वेकौर्मे॥ सद्यःशौचंसमाख्यातंदुर्भिक्षेवाप्युपद्रवे डिं
बाहवहतानांचविद्युतापार्थिवेद्विजैः। उपद्रवेत्यमरके॥ उपसर्गमृतेचैवसद्यःशौचंविधीयतेइ
ति। पराशरोक्तेः। उपसर्गोमरकइतिशूलपाणिनिरुद्धभट्टादयः॥ मरीचियाज्ञवल्क्यावपि। आ
पद्यपिचकष्टायांसद्यःशौचंविधीयतेइति। मरणसमयेपिनाशौचं। तथाचशुद्धिरत्नाकरेदक्षः
स्वस्थकालेत्विदंसर्वंसूतकंपरिकीर्तितं। आपद्गतस्यसर्वस्यसूतकेपिनसूतकं। अतःसतिवैरा
ग्येसंन्यासोप्यातुरस्यभवतीतिकेचित्॥ ॥अथकर्मतः॥ ॥त्रिंशत्श्लो
कां। तत्रत्कार्येषुसत्रिव्रतिनृपवद्दीक्षितर्त्विक्स्वदेशभ्रंशापत्स्वप्यनेकश्रुतिपठनभिषक्कारुशि
ल्पानुरागं। संप्रारब्धेषुदानोपनयनयजनश्राद्धयुद्धप्रतिष्ठा। चूडातीर्थार्थयात्राजपपरिणयना
द्युत्सवेघेतरर्थे। नाशौचमितिशेषः। सत्रीअन्नसत्रवान्। मुख्यसत्रस्यदीक्षितपदात्सिद्धेः॥ व्रती
अनंतव्रतादिनियमवान्। तव्रतीनांव्रतेइतिविष्णूक्तेः॥ प्रचेताः कारवःशिल्पिनोवैद्यादासीदासा
स्तथैवच राजानोराजभृत्याश्चसद्यःशौचाःप्रकीर्तिताः। कारवःसूपकारादयाः शिल्पिनःचैलनिर्णेज
काद्याः आतुरस्यव्याधिनाशार्थेदानादौतुलादानादेः। प्रारंभोनांदीश्राद्धंसंकल्पोवा। यजनंतडागो

सनुव्रतीपेतंनव्रतेनविमुच्यतेइतिमनूक्तेः निर्हरणमंत्यकर्मपरं एवंमातामहस्य। यथाव्रतस्थोपिसुतःपितुः
कुर्यात्क्रियांनृप तथामातामहस्यापिदौहित्रःकर्तुमर्हतीतिअपरार्के भविष्योक्तेः। मातापित्रोरुपाध्याया
चार्ययोरौर्ध्वदेहिकं। कुर्वन्मातामहस्यापिव्रतीनभ्रश्यतेव्रतादितिकालादर्शोक्तेः। तत्रांत्यकर्मेतिभिन्नमस्य
सत्वंदशाहमस्त्येव। सगोत्रोवाऽसगोत्रोवायोग्निंदद्यात्सखेनरः सोपिकुर्यान्नवश्राद्धंशुद्धेतुदशमेहनी
तिदिवोदासोक्तवचनात्। अतएवब्रह्मचारिणः शवकर्मणोव्रतान्निवृत्तिरन्यत्रमातापित्रोर्गुरोश्चेति
गौतमीयेप्युक्तनिवृत्तेरेवपर्युदासोनाशौचस्य। संध्यादिकर्मलोपस्तुनास्ति नत्यजेत्सूतकेकर्मब्रह्मचा
रीस्वकंक्वचित् इतिछंदोगपरिशिष्टात्। पित्रोर्गुरौविपन्नेतुब्रह्मचार्यपियःसुतः। सव्रतस्थोपिकुर्वीत
अग्निकुंडोदकक्रियां। तेनाशौचमकर्तव्यंसंध्याचैवनलुप्यते। अग्निकार्यंचकर्तव्यंसायंप्रातस्त्व
नित्यशइतिचंद्रिकायां॥ संवर्तेपि॥ अतःकर्मानधिकाररूपाशौचनिषेधएव। अपरार्केमाधवाद्य
स्तु। एकाहमाशौचमाहुः। आचार्यंवाप्युपाध्यायंगुरुंवापितरंचवा। मातरंवास्वयंदग्ध्वाव्रतस्थस्त
त्रभोजनं। कृत्वापततिनोतस्मात्प्रेतान्नंतत्रभक्षयेत् अन्यत्रभोजनंकुर्यान्नचतैःसहसंवसेत्। ए
काहमशुचिर्भूत्वाद्वितीयेहनिशुध्यतीतिब्राह्मोक्तेः। तदन्नभोजनेतुप्रायश्चित्तंपुनरुपनयनमाशौ
चंच॥ दिवोदासादयस्तुब्राह्मोक्तेः॥ प्रथमेह्निसंध्यादिलोपः। ब्रह्मचारीयदाकुर्यात्पिंडनिर्वपणं
पितुः। तावत्कालमशौचंस्यात्पुनःस्नात्वाविशुध्यतीति। प्रजापतिवचनात् द्वितीयाहादौपिंडदान
कालेएवास्पृश्यत्वमात्रंनान्यदेत्याहुः। दशाहमस्पृश्यत्वेपिकर्मांगस्नानविधानार्थमेतदितियुक्तं।
अंत्यकर्माकरणेतुब्रह्मचारिणः। पित्रादिमरणेप्याशौचाभावएव। सोपिब्रह्मचर्यकालएव। समा
वर्तनोत्तरंतुपूर्वश्रुताशौचंयच्छेषंचभवत्येव। आदिष्टीनोदकंकुर्यादाव्रतस्यसमापनात्। समाप्तेतूदकं
दत्वात्रिरात्रमशुचिर्भवेदितिमनूक्तेः। तत्रापिविकल्पः। पितर्यपिमृतेनैषांदोषोभवतिकर्हिचित्
आशौचंकर्मणोतेस्यात्त्र्यहंवाब्रह्मचारिणामितिछंदोगपरिशिष्टात्। यथाकृतजीवच्छ्राद्धेन
किमप्याशौचंनकार्यमितिहेमाद्रिः शुद्धितत्वेकौर्मे॥ सद्यःशौचंसमाख्यातंदुर्भिक्षेचाप्युपद्रवे डिं
बाहवहतानांचविद्युतापार्थिवैर्द्विजैः। उपद्रवेष्वमरके॥ उपसर्गमृतेचैवसद्यःशौचंविधीयतइ
ति। पराशरोक्तेः। उपसर्गोपमरकइतिशूलपाण्युपनिषद्भट्टादयः॥ मरीचियाज्ञवल्क्यावपि। आ
पद्यपिचकष्टायांसद्यःशौचंविधीयतइति। मरणसमयेपिताशौचं। तथाचशुद्धिरत्नाकरेदक्षः
सत्यकालेत्विदंसर्वंसूतकंपरिकीर्तितं। आपद्गतस्यसर्वस्यसूतकेपिनसूतकं। अतःसतिवैरा
ग्येसंन्यासोप्यातुरस्यभवतीतिकेचित्॥ ॥अथकर्मतः॥ ॥त्रिंशच्छ्लो
कं। तत्कार्येषुसत्रिव्रतिनृपवद्दीक्षितर्त्विक्स्वदेशभ्रंशापत्स्वप्यनेकश्रुतिपठनभिषक्कारुशि
ल्पानुगानां। संप्रारब्धेषुदानोपनयनयजनश्राद्धशुद्धप्रतिष्ठा। चूडातीर्थार्थयात्राजपपरिणयना
द्युत्सवेचेतदर्थे। नाशौचमितिशेषः। सत्रीअन्नसत्रवान्। मुख्यसत्रस्यदीक्षितपदात्सिद्धेः॥ व्रती
अनंतव्रतादिनियमवान्। तद्व्रतीनांव्रतेइतिविष्णूक्तेः॥ प्रचेताः कारवःशिल्पिनोवैद्यादासीदासा
स्तथैवच राजानोराजभृत्याश्चसद्यःशौचाःप्रकीर्तिताः। कारवःसूपकाराद्याःशिल्पिनःचैलनिर्णेज
काद्याः आतुरस्यव्याधिनाशार्थेदानादौतुलादानादेः। प्रारंभोनांदीश्राद्धंसंकल्पोवा। यजनंतडागो

र्गकोटिहोमादिस्तु विरुद्धः॥ व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे। आरब्धे सूतकं न स्यादनारब्धे तु सू
तकं। आरंभो वरणं यज्ञे संकल्पो व्रतसत्रयोः। नांदीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रियेति। पाकस्य
परिसमाप्तनात्। क्रियापाकमोक्षणमिति शुद्धिप्रदीपः तन्मंदरूढयोगाद्बलवत्त्वात्। तीर्थेति। आ
शौचे आकस्मिकतीर्थप्राप्तौ। विवाहदुर्गयज्ञेषु यात्रायां तीर्थकर्मणि। न तत्र सूतकं तद्वत्कर्मय
ज्ञादिकारयेदिति पैठीनसिस्मृतेः। अत्र विशेषः प्रागुक्तः जपः पुरश्चरणादिस्तोत्रपाठः। अवि
च्छेदेन संकल्पितहरिवंशश्रवणादिश्च॥ अत एवोक्तं प्राक्॥ गृहीतनियमस्यापि न स्यादन्य
स्य कस्यचिदिति। एवं देवपूजादि। मदनपारिजातेप्येवम्। शिवविष्ण्वर्चने दीक्षा यस्य चाग्निप
रिग्रहः। श्रौतकर्माणि कुर्वीत स्नातः शुद्धिमवाप्नुयात्। गौडशुद्धितत्वे मंत्रमुक्तावल्यां तथा दे
वार्चनविधिः कार्यो दीक्षान्वितैर्नरैः। नास्ति पापं यतस्तेषां सूतकं वा यतात्मनां। राघवभट्टीये ना
रदः॥ अथ सूतकिनः पूजा वक्ष्याम्यागमचोदितां। स्नात्वा नित्यं च निर्वर्त्य मानसा क्रियया तु
वै। बाह्यपूजाक्रमेणैव ध्यानयोगेन पूजयेत्। यदि कामी न चेत्कामी नित्यमेव सदाचरेत्। यत्तु
नृसिंहकल्पे॥ सदा मंत्रजपं मुक्त्वा यदि स्यादशुचिर्नरः मनसा विहितस्तत्र स्मरेन्मंत्रं न तूच्चरेत्
तन्मूत्राद्यशौचपरं। रामार्चनचंद्रिकायां। अशुचिर्वाशुचिर्वापि गच्छंस्तिष्ठन्स्वपन्नपि। मंत्रैक
शरणो विद्वान्मनसैव सदाभ्यसेत्। कालनियमाभावेन। स्तोत्रहरिवंशादि हेयमेव। उत्सवोर
थयात्रादि एष्वनाशौचं। अयमाशौचाभावोऽनन्यगतित्वे ज्ञातव्यः॥ अत्र मूलमाकरेऽस्प
ष्टं। अत्र दीक्षितस्यावभृथात्पूर्वमेवाशौचाभावः। तदा दीक्षिताशौचमस्त्येव। तेन वैतानोपास
नाः कार्या इति वैतानत्वेप्यवभृथादिनभवत्येव। अत एवोक्तं माधवीये वाह्ले॥ तद्गृहीतदीक्षाव्रतस्यैतै
विधास्यमहामखे स्नानं त्ववभृथे यावज्जावत्तस्य न सूतकमिति वैतानोपासनाः कार्या इति श्रुतेश्चैव सि
द्धेः। ऋत्विजां च दीक्षितानां चेति। पुनर्दीक्षितगृहे यजमाने स्वयं कर्तृत्वात् स्नानं शास्त्रार्थं चेति। वि
ज्ञानेश्वरः॥ वस्तुतस्तु दीक्षणीयासंस्कृतस्य प्रागवभृथात्कर्मप्राप्त्यर्थं दीक्षितगृहणं। तेन ततः
निषेध पूर्वेषां एव। यत्तु आरंभो वरणं यज्ञ इति। तदृत्विक्परं तथा च छंदोगपरिशिष्टे। नदीक्षिणपाः
परं यज्ञे न कृच्छ्रादि तपश्चरन्निति। शुद्धितत्वेप्येवं। ऋत्विजां च मधुपर्कोत्तरमाशौचाभावः। गृही
तमधुपर्कस्य यजमानात्तु ऋत्विजः। पश्चादशौचे पतिते न भवेदिति निश्चयः। इति वाक्यात्। अत
एव शर्माडारः। चतुर्णां वरणे पक्षेऽन्येषामाशौचेऽन्यागमितव्य इत्याह। एवं स्मार्तेपि तुलाकोटि
होमादौ मधुपर्के सति दोषाभावो ज्ञेयः॥ यत्तु। आरंभो वरणं यज्ञ इति तत्रापि मधुपर्कांतं ज्ञेयं। ते
नाधानेष्टिपशुबंधादौ तदभावादन्यभवतीति सिद्धं। अपवादांतरमाह याज्ञवल्क्यः॥ वैतानो
पासनाः कार्याः क्रियाश्च श्रुतिचोदनात्। तत्र त्यागमात्रे स्नानोत्तरं स्वयं कर्तव्यं। श्रौते कर्मणि तत्का
ले स्नातः शुद्धिमवाप्नुयात् इति स्मृतेः॥ त्यागातिरिक्तं तु श्रौते स्मार्ते चान्यसेव कर्तव्यं सूतके
मृतके चैव त्वशक्तौ श्राद्धभोजने। प्रवासादिनिमित्तेषु हावयेन्न तु हापयेदिति बृहस्पत्युक्तेः। नि
त्यानि निवर्तेरन्वैतानवर्जं शालाग्नौ चैके अन्यएतानि कुर्युरिति पैठीनसिस्मृतेश्चेति विज्ञानेश्वरः
एकमहणं पूजार्थं तेन स्मार्तं कार्यमेवेति हारलतायां। दाक्षिणात्यास्तु विकल्पमाहुः॥ अपरा

कादिनिषेधात्तु श्रौतं सर्वं स्वयं कार्यं स्मार्तं त्यागातिरिक्तोऽन्यस्यैव कर्तृत्वं। त्यागमात्रेतु स्वयं। कर्मवैता
निकं कार्यं स्नानोपस्पर्शवान्स्वयमिति हारीतोक्तेः। दर्शं च पूर्णमासं च कर्म वैतानिकं च यत् सूतके
पि न तज्जह्यादाहिताग्निर्द्विज इति मरीच्युक्तेः। जन्महान्योर्वितानस्य कर्मत्यागो न विद्यते। शा
लाग्नौ केवलो होमः कार्य एवान्यगोत्रजैरिति जाबालोक्तेश्चेत्याहुः। आशार्केप्येवं। सूतके तु सपु
त्ते स्मार्तं कर्म कथं भवेत् पिंडयज्ञं चरुं होमम सगोत्रेण कारयेदिति जातूकर्ण्योक्तेश्च चरुः स्मा
र्तस्थालीपाकः। श्रवणाकर्मादिश्चेति विज्ञानेश्वरः। प्रारब्धं तु सपिंडेनापि वार्यं। न च तत्कर्म कु
र्वाणः सनाभ्योप्यशुचिर्भवेदिति मनूक्तेः। छंदोगपरिशिष्टेपि। होमं श्रौते तु वर्तेत शुष्कान्नेन फ
लेन वा अकृतं हावयेत्स्मार्ते तदभावे कृताकृतं। अकृतं व्रीह्यादि कृतं ओदनादि कृताकृतं तंडुलादि॥ स्मार्तहो
मादौ तु विकल्पोयं। शालाग्नौ चैके इति माधवोक्तेः। यदाकरणं तदान्यद्वारा अत्रेदं तत्त्वम् वैमां
वरुचादीनां दर्शादिमहोमेपि नाग्निविच्छेदः स नैकार्यं। तैत्तिरीयाद्यैः कार्यं चतुर्गृहम्। यमा
नोग्निर्लौकिकः संपद्यत इति सुदर्शनभाष्यवचनात्। समारूढे त्वग्नौ नैवाग्निकार्यं। किंतु नरा
नमेव समारोपः प्रत्यवरोह योरशौचापवादाभावादनन्यकर्तृकत्वाच्च अन्यथा पुनराधा
नमपि स्यात्। यत्त्वाश्वलायनः॥ नैवापि सूतके शावे पर्वणीष्टिर्महापदि। पुष्पवत्यां च भार्यायां न
कुर्यात्तां कदाचन स्मार्तोग्निः सूतके शावे स्वयं न जुहुयाद्द्विजः। श्रौताग्निस्तु सकृद्धुत्वा समाप्ते वा स्व
यं हुनेदिति। तदपि समारूढपरं। तदाह स एव। स्मार्ताग्निरात्मानो न्येषामभावे सूतकादिषु॥ समा
रोप्य तदंते तु विहृत्य जुहुयात्स्वयमिति। तथा मनुः॥ नस्पृहेनाग्निमुक्तिपा इति। वैश्वदेवस्य त्वग्नि
साध्यत्वेपि वचनान्निवृत्तिः। विप्रो दशाहमासीत वैश्वदेवविवर्जित इति संवर्तोक्तेः। यथापि पंच
यज्ञविधानं तु न कुर्यान्मृत्युजन्मनोरिति तेनैवोक्तेः। एवं निषेधो व्यर्थः। तथाप्यापस्तंबादीनां वै
श्वदेवस्य पंचयज्ञभिन्नत्वात्पृथङ्निषेधः। हरदत्तस्त्वाशौचेपि बह्वृचैर्वैश्वदेवः कार्यः। तस्य ह्याव
नध्यायोपदात्मा शुचिर्यद्देश इति ब्रह्मयज्ञस्यैवाशौचे विशिष्य निषेधात्। संध्यादीनामप्यपवाद
माह। अपरार्के पुलस्त्यः॥ संध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत्। नत्यजेत्सूतकेवापि त्य
जन्गच्छेदधो द्विजः। सूतके मृतके चैव संध्याकर्म समाचरेत्। मनसोच्चारयेन्मंत्रान्प्राणायाम
मृते द्विजः॥ यत्तु चंद्रिकायां जाबालः॥ संध्यां पंचमहायज्ञान्नैत्यकं स्मृतिकर्म च। तन्मध्ये हाप
येत्तेषां दशाहांते पुनः क्रियेति॥ यच्च संवर्तेः। सूतके कर्मणां त्यागः संध्यादीनां विधीयते॥ य
च्च विष्णुपुराणे। सर्वकालमुपास्यां तु संध्ययोः पार्थिवेष्यते। अन्यत्र सूतकाशौचविभ्रमातुर
भीतितः इति तत्पूर्णसंध्यापरं। अर्घांता मानसी संध्या कुशवारिविवर्जिता इति शुद्धिदीपे च्यवनो
क्तेः॥ पैठीनसिस्त्वर्घ्ये मंत्रोच्चारणमाह। सूतके सावित्र्यांजलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं ध्याय
न्नमस्कुर्यात्। प्रयोगपारिजाते भरद्वाजोपि। सूतके मृतके कुर्यात्प्राणायाममनंत्रकं तथा मा
र्जनमंत्रांस्तु मनसोच्चार्य मार्जयेत्। गायत्रीं सम्यगुच्चार्य सूर्या र्घ्यं च निवेदयेत्। मार्जनं तु न
वा कार्यमुपस्थानं न चैव हि। अहरहः श्राद्धादावप्याशौचापवादमाह व्याघ्रः॥ स्मार्तकर्मपरित्यागो
राहोरन्यत्र सूतके इति। लैंगेपि। सूतके मृतके चैव न दोषो राहुदर्शने। तावदेव भवेच्छुद्धिर्यावन्मु

क्रियते।प्रयोगपारिजाते बृहस्पतिः॥ कन्याविवाहे संक्रान्तौ सूतकं न कदाचन॥ वृद्धशातातपः॥ प्रसवे
जननकालेतु अशुचिर्भवतिद्विजः। भूमौनिक्षिप्यते यावत्संस्नात्वा विप्रो विशुध्यति। भस्मपिंडं तु यास्म
होरात्रेण शुध्यति। अशित्वा सर्वमेवान्नं त्रिरात्रेण विशुध्यति। उदकविशेषात् मृतकादिपरमपीति
शुद्धितत्त्वे मूलपाठोऽयं॥ ॥अथ द्रव्यतः॥ ॥मरीचिः॥ लवणे मधुमांसे
च पुष्पमूलफलेषु च। शाककाष्ठतृणेष्वप्सु दधिसर्पिःपयःसु च। तिलौषधाजिने चैव पक्वापक्वे स्व
यंग्रहः। पण्येषु चैव सर्वेषु नाशौचं मृतसूतके। स्वयमेव स्वाम्युद्दत्तपात्रासेन न तद्धस्तादित्यर्थः। अपे
तु तद्धस्तादपि न दोषः। पक्वं लड्डुकादि। अपक्वं तंडुलादि। एतत्स्वसत्त्वपरं। अन्यसत्त्वपरत्वे नानाम
मन्नमगर्हितम्। भुक्त्वा पक्वान्नमेतेषां त्रिरात्रेणाशुचिर्भवेदित्यंगिरसोक्तेः। पक्वान्नं मोदकादि।
न तु भक्ष्यं। षट्त्रिंशन्मते॥ उभाभ्यामपरिज्ञाते सूतके नैव दोषकृत्। एकेनापि परिज्ञाते भोक्तुर्दोष
मुपावहेत्। विवाहोत्सवयज्ञेषु त्वंतरा मृतसूतके। परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः॥ भुंजा
नेषु तु विप्रेषु त्वंतरा मृतसूतके। अन्यगेहोदकाचांताः सर्वे ते शुचयः स्मृताः॥ बृहस्पतिः॥ विवाहो
त्सवयज्ञेषु। पूर्वसंकल्पितान्नेषु न दोषः परिकीर्तितः। षडशीतौ॥ संसर्गो यस्य चाशौचं यस्याति
क्रांतकालता। तदीयस्य पदार्थस्य नाशौचं विद्यते क्वचित्॥ शुद्धितत्त्वे शुद्धोदिसतु बृहन्नो विष्णुः॥
मोक्षणेन पुस्तकमिति॥ ॥अथ मृतदोषे॥ ॥हेमाद्रौ षट्त्रिंशन्म
ते॥ क्रोधाद्वा व्यापादयेद्य आत्मानं स्वयमम्बुदकादिभिः। विहितं तस्य नाशौचं नाप्यग्निर्नोदक
क्रिया। शवदर्शनं यावदाशौचमस्यैव। हतानां नृपगोविप्रैरन्वक्षं चात्मघातिनामिति याज्ञ
वल्क्योक्तेः॥ शुद्धितत्त्वे कौर्मे॥ सद्यः शौचं समाख्यातं शापादिमरणे तथा। आदिपदादभिचा
रहतो भविष्ये॥ स्वेच्छया मरणं विप्राच्छृंगिदंष्ट्रिसरीसृपात्। आत्मायनविषोदवैरात्मना चै
वताडने। पाखंडमाश्रिताश्चैव महापातकिनस्तथा। स्त्रियश्च व्यभिचारिण्य आरूढपतितास्तथा
नैतेषां स्नानसंस्कारो नाशौचं न सपिंडनं॥ गौतमः॥ प्रायोनाशकशस्त्राग्निविषोदकोद्बंधनप्र
पतनैश्चेच्छतामिति॥ नाशौचमिति शेषः॥ अंगिराः॥ चंडालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि।
पि। दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणां। उदकं पिंडदानं च प्रेतेभ्यो यत्प्रदीयते। नोपतिष्ठ
ति तत्सर्वमंतरिक्षे विनश्यति। षट्त्रिंशन्मतेऽप्येवं। ब्राह्मेऽपि। शृंगिदंष्ट्रिनखिव्यालविषवह्नि
स्त्रियाजलैः। व्यालोऽजगरः। सुदूरात्परिहर्तव्यं कुर्वन्क्रीडां मृतस्तु यः। नागानां विप्रियं कुर्व
न्हतश्चाप्यथ विद्युता। निगृहीताश्च ये राज्ञा चौर्यदोषेण कुत्रचित्। परदारान्हरंतश्च द्वेषा
त्तत्पतिभिर्हताः। असमानैश्च संकीर्णैश्चांडालाद्यैश्च विग्रहं। कृत्वा तैर्निहतास्तद्वच्चांडालादी
न्समाश्रिताः। शस्त्राग्निगरदाश्चैव पाखंडाः क्रूरबुद्धयः। क्रोधात्प्रायं विषं वह्निं शस्त्रमुद्बंध
नं जलं। गिरिवृक्षप्रपातं च ये कुर्वंति नराधमाः। कुशिल्पजीविनो ये च सूनालंकारधारिणः।
मुखेभगास्तथा ये के चित्क्लीबप्रायनपुंसकाः। ब्रह्मदंडहता ये च ये चापि ब्राह्मणैर्हताः। महापा
तकिनो ये च पतितास्ते प्रकीर्तिताः। पतितानां न दाहः स्यान्नांत्येष्टिर्नास्थिसंचयः। न चाश्रुपा
तपिंडौ वा कार्यं श्राद्धादिकं क्वचित्॥ एतानि पतितानां तु यः करोति विमोहितः। तप्तकृच्छ्र

पनैवतस्यशुद्धिर्नचान्यथा।एतद्बुद्धिपूर्वं।सर्वेषांकरणेतुमाधवीयेवशिष्ठः।यः आत्मत्यागिनांकुर्या
त्स्नेहात्प्रेतक्रियांद्विजः।सतप्तकृच्छ्रसहितंचरेच्चांद्रायणव्रतं।अज्ञानेतु॥कृत्वाग्निमुदकंस्ना
नंस्पर्शनंवहनंकथां रज्जुच्छेदाश्रुपातंचतप्तकृच्छ्रेणशुध्यतीतिशेषः।प्रत्येकंबुद्धिपूर्वेएतदि
तिमदनपारिजातः।प्रत्येकंतुस्पर्शाश्रुणोर्मिताक्षरायां।तच्छवंकेवलस्पर्शमश्रुपातंवापानितम
देपूर्वोक्तानामकारीवेदेकरात्रमभोजनं।एकरात्रंतुनाश्नीयात्त्रिरात्रंबुद्धिपूर्वकमितिमाधवीये
उत्तरार्धं।अन्येषुसंवर्तः।एषामन्यतमंप्रेतंयोवहेत्दहेतोपिवा।कटोदकक्रियांकृत्वाकृच्छ्रंसां
तपनंचरेत्।अज्ञानेत्वर्द्धं।एतदनाहिताग्नेः।आहिताग्नेःकृच्छ्रएवेतिमाधवः॥मिताक्षरायां
आत्मनस्त्यागिनांनास्तिपतितानांतथाक्रिया। तेषामपितथागंगातोयेसंस्थापनंहितं। आ
हिताग्नेस्तुविशेषोहेमाद्रौभविष्ये।वैतानेप्रक्षिपेदग्नावावसथ्यंचतुष्पथे।पात्राणितुदहेदग्नौ
साग्निकेपापकर्मणि॥छंदोगपरिशिष्टेपि।महापातकसंयुक्तोदैवात्स्यादग्निमान्यदि।पुत्रा
दिःपालयेदग्नीन्युक्तश्चादोषसंक्षयात्।प्रायश्चित्तंनकुर्याद्यःकुर्वन्वाम्रियतेयदि।गृह्यंतन्नि
र्वापयेच्छ्रौतमप्स्वस्येत्सपरिच्छदः।पात्राणिदद्याद्विप्रायदहेदप्स्वेववाक्षिपेत्।माधवीयेपरा
शरः॥आहिताग्निर्मृतोविप्रश्चांडालेनात्मघातकः।दहेतब्राह्मणंविप्रोलोकाग्नौमंत्रवर्जितं
प्राजापत्यंचरेत्पश्चाद्विप्राणामनुशासनात्।दग्ध्वास्थीनिपुनर्गृह्यक्षीरेणक्षालयेत्ततः।स्वेना
ग्निनास्वमंत्रेणपृथगेनंपुनर्दहेत्।हेमाद्रौतु।दाहयित्वाशवंतेषांशूद्रैर्विधिपूर्वकमित्युक्तं।ए
तद्दोषिणामरणेज्ञेयं।तांस्तेप्रेत्याभिगच्छंतियेकेचात्महनोजनाइति।अतोवात्महननेएवदो
षोक्तेः।प्रमादमरणेत्वाशौचादिसर्वंभवत्येव।तदाहांगिराः॥ ॥अथकश्चित्प्रमादेनम्रियेता
ग्न्युदकादिभिः।तस्याशौचंविधातव्यंकर्तव्याचोदकक्रिया।ब्राह्मेपि।प्रमादादपिनिःशंकस्त्व
कस्माद्विधिचोदितः।शृंगिदंष्ट्रिनखिव्यालविषविद्युज्जलादिभिः।चंडालैरथवाचौरैर्निह
तोवापिकुत्रचित्।तस्यदाहादिकंकार्यंयस्मान्नपतितस्तुसः॥प्रमादमरणेत्रिरात्रमाशौच
मितिगौडाः।शुद्धितत्त्वादयः।दशाहादितिदाक्षिणात्याः।अस्यापवादोहेमाद्रौभविष्ये।प्रमादा
दिच्छयावापिनकुर्यात्सर्पतोमृते।नागपूजांविनानकुर्यादित्यर्थः॥बौधायनोपि।बुद्धिपूर्वा
त्महनृणांक्रियालोपोविधीयते।क्रियांत्यकर्म।तत्रदुर्मरणनिमित्तदानादिकार्यं।तत्रविश्वप्र
काशेशातातपीयेच।व्याघ्रेणनिहतेविप्रेविप्रकन्यांविवाहयेत्।सर्पदष्टेनागबलिर्देयःसर्प
श्चकांचनः।चतुर्निष्कमितंहेमगजंदद्याद्गजेहते।राज्ञाविनिहतेदद्यात्पुरुषंतुहिरण्मयं।चौरेण
निहतेधेनुंवैरिणानिहतेवृषं।वृषेणनिहतेदद्याद्यथाशक्त्याचकांचनं॥शय्यामृतेप्रदातव्या
शय्यातूलिसमन्विता।निष्कमात्रसुवर्णस्यविष्णुनासमधिष्ठिता।शौचहीनेमृतेचैवद्विनिष्क
स्वर्णजंहरिं।संस्कारहीनेचमृतेकुमारंसुप्रदापयेत्।निष्कमात्रस्वर्णमितंदद्यादश्वंहयाहते।शु
नाहतेक्षेत्रपालंस्थापयेन्निजशक्तितः।सूकरेणहतेदद्यात्महिषंदक्षिणान्वितं।कृमिभिश्च
मृतेदद्याद्गोधूमान्पंचखारिकाः।वृक्षस्तहतेदद्यात्तोवर्णवस्त्रसंयुतं।शृंगिणानिहतेदद्या
दृषभंवस्त्रसंयुतं।शकटेनहतेदद्यादश्वंसोपस्करान्वितं।भृगुपातेमृतेचैवप्रदद्याद्धान्यपर्वतं

अग्निना निहते कार्यमुदपानं स्वशक्तितः। दाहस्थाने हते चैव कर्तव्या सदने सभा। शस्त्रेण निहते
दद्यात् महिषीं रक्तशिरान्वितां। अश्मना निहते दद्यात् सवत्सां गां पयस्विनीं। विषेण च मृते दद्यात्
मेदिनीं हेमनिर्मितां। उद्बंधनेन च मृते कपिकं कनकनिर्मितं। मृते जलेन वरुणं हैमं दद्याद्धि निष्कजं
विषूचिकामृते स्वादु भोजयेच्च शतं द्विजान्। घृतधेनुः प्रदातव्या कंठेन्नकवले मृते। काशरोगेण
च मृते अष्टकृच्छ्रं व्रतं चरेत्। अतीसारमृते लक्षं गायत्र्या अप्यतो जपेत्। शाकिन्यादिग्रहग्रस्ते
जपेद्रुद्रं यथोदितं। विद्युत्पातेन निहते विद्यादानं समाचरेत्। अन्त्यजस्पृष्टमृते कार्यं वेदपारायणं तथा
सच्छास्त्रपुस्तकं दद्यादस्पृश्यस्पर्शतो मृते। पतितेन च मृते कुर्यात्प्राजापत्यांस्तु षोडश। मृते चाप्यपर
हिते कृच्छ्राणां नवतिं चरेत्। एवं कृते विधानेन तु विदध्यादौर्ध्वदेहिकं। तथा वैधमरणेपि न दोषः
तदाह तु मनुवृद्धगार्ग्यौ॥ वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः। आत्मानं घातयेद्यस्तु भृग्व
ग्न्यनशनांबुभिः। तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसंचयः। तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमा
चरेदिति हेमाद्रौ विष्णुधर्मेपि। नरस्तु व्याधिरहितो न त्यजेदात्मनस्तनुं। अस्वर्ग्या नाम ते लोका
अंधेन तमसा वृताः। तांस्ते प्रेत्याभिगच्छंति ये के चात्महनो जनाः। अरिष्टैरात्मनो ज्ञात्वा मृत्युका
लमुपस्थितं। व्याधितो भिषजा त्यक्तः शूरो वा युधि वात्मनः। यथायुगानुसारेण संत्यजेदात्मनस्तनुं
तस्मिन्काले तनुत्यागाद्यथेष्टं फलमाप्नुयात्। आयुषस्तु प्रहर्षं मरणान्मारणस्य च। नेति गौडाना
मपपाठः॥ उत्तरार्धे असंगतेः॥ क्षत्रियस्य तु संग्रामे मृते मन्त्रैरियोदितः॥ अपरार्के ब्रह्मगर्भः॥ जो
जीवितुं न शक्नोति महाव्याध्युपपीडितः। सोग्न्युदकमहायात्रां कुर्वन्नानसदुष्यति। अत्रोक्तस्य
मारणवचो निश्चयात्प्रयागातिरिक्ते। चिकित्स्यरोगाद्युपहतानामधिकारः। सोपि जीर्णवानप्रस्थ
स्यैवेति विज्ञानेश्वरदेवयाज्ञिकादयः॥ अत एव मिताक्षरायां भृगुपातानशनादिकं वानप्रस्थ
स्यैवोक्तं॥ मनुरपि॥ आसां महर्षिचर्याणां त्यक्त्वान्यतमया तनुं। वीतशोकभयो विप्रो ब्रह्मभू
याय कल्पत इति। तेनान्यत्रापि न द्विषपनेव। मूलं क्वादिति केचित्। तन्न॥ वानप्रस्थमरणे त्व
शौचनिषेधात्॥ तेन रहस्यादिपरमेवेदं तेन पतनेनाधिकारः। काम्येनाधिकारश्च। नैमित्तिक
त्वेत्व करणे दोषो नित्यता च स्यात्॥ प्रयागे तु रोगिणां च॥ यत्तु॥ शूद्राश्च स्त्रियो वैश्या अंत्य
जाश्च तथाधमाः॥ एते त्यजेयुः प्राणान्वै वर्जयित्वा द्विजनृप। पतित्वा ब्राह्मणस्तत्र ब्रह्महा नाम
हा भवेदिति॥ तन्निर्मूलमिति मदनः॥ तत्त्वं तु हेमाद्रौ व्रतकांडे लिखनान्निर्मूलत्वं चिंत्यमेव। ब्रह्म
मात्त्वपतित्वेति भृगुपातमात्रपरं युक्तं। ब्राह्मणस्याप्यनुज्ञातमिति॥ वक्ष्यमाणविरोधाच्च। मत्स्यपु
राणे। ब्राह्मणो वा स्वर्गादिमहाफलजिगीषया। प्रविशेज्ज्वलनं तोयं करोत्यनशनं स्वयमि
तत्प्रयागातिरिक्तपरमिति केचित्। हेमाद्रौ त्वेतदग्रे प्रयागवटशाखामारिन्युक्तेः ब्राह्मणस्य प्रयागे
पि नेति मतीयते। माधवीये पराके चादिपुराणे। दुश्चिकित्स्यैर्महारोगैः पीडितस्तु पुमानपि। प्रवि
शेज्ज्वलनं दीप्तं करोत्यनशनं तथा। अगाधतोयराशिं च भृगोः पतनमेव च। गच्छेन्महापथं वापि
तुषारगिरिमादरात्। प्रयागवटशाखाग्राद्देहत्यागं करोति वा। स्वयं देहविनाशस्य काले प्राप्ते महाम
तिः। उत्तमान्प्राप्नुयाल्लोकान्नात्मघाती भवेत्क्वचित्। एतेषामधिकारस्तु सर्वेषां सर्वजंतुषु। न

णामथ नारीणां सर्ववर्णेषु सर्वदा। देहशं मरणं ये मां जीवन्तं कुर्वन्ति विद्वेषात्। अशौचं स्यान्महत्तेषां वज्रा
नलहते तथा। वाराणसीं त्रिवेणीं च लुप्तमाग्ने नभिपकृत्रिमः। काष्ठपाषाणमध्यस्थो जाह्नवीजलम
ध्यगः। अविमुक्तोन्मुखस्तस्य कर्णमूलगतो हरः॥ प्रणवं तारकं ब्रूते नान्यथा कुत्रचित्क्वचित्॥ हेमा
द्रौ चैवं। अन्नशान्नकाले इत्युक्तेः शास्त्रमरणकालाद्याः स्त्रियाः अन्वारोहणे स्पर्शेऽपि वाशौचम्। पृथ्वी
चंद्रस्त्वनापि त्र्यहमाह। शुद्धतत्त्वादिगौडग्रंथेष्वप्येवं। एतच्च वृद्धादिमरणं कलौ निषिद्धं। भृग्वग्निप
तनैश्चैव वृद्धादिमरणं नास्तीति माधवेन पृथ्वीचंद्रेण च कलिवर्ज्येषूक्तेः। न चात्र यावदुक्तनिषेधः। वि
शिष्टोद्देशवाक्याभेदात्। न च कलौ वानप्रस्थाश्रमनिषेधाद्वृद्धमरणनिषेधोऽयमर्थ इति वाच्यं
सर्ववर्णाश्रिताद्भिस्तद्भिन्नस्यापि प्राप्तेः। काम्यं भवत्येव। येवेनन्वा विसर्जनीति श्रुतः स्मृत्यासं
कोचायोगात्। न चैवं स्वाभाविके मृत्यु पराधीरपदोक्तेः। मात्स्यभारतादिषु न लोकवचनान्नान्न
वेदवचनादपि मतिरुत्क्रमणीया ते प्रयागमरणं प्रतीत्युक्तेः। अत एव विष्णुधर्मे रोग्यादिमरणमुक्तो
क्तं यथायुगानुसारेण संत्यजेदात्मनस्तनुमिति। काम्यामप्युक्तं मात्स्ये। अग्निप्रवेशं ये कुर्युरविमु
क्ते विधानतः प्रविशन्ति सुखं ते मे निःसंदिग्धं वरानने। हेमाद्रौ विद्वत्सु। सर्वेंद्रियविमुक्तस्य स्व
व्यापारक्षमस्य च। प्रायश्चित्तमनुज्ञातमग्निपानो महापथः। धर्मार्जनासमर्थस्य कर्तुः पापांकि
तस्य च। ब्राह्मणस्याप्यनुज्ञातं तीर्थे प्राणविमोक्षणं। अपरार्के चैवं। सहगमनं कलौ भवत्येव।
कलौ नान्या गतिः स्त्रीणां सहानुगमनादृते इति॥ ब्रह्मवैवर्त्तात्। एतेन मरणांतिकप्रायश्चित्तं
काशीखंडादौ चानुवर्णस्य तनुत्यागविधयश्च युगांतरपरा एव। प्रयागेपि तिस्थलीसेतौ स्कांदे।
यथाकथंचित्तीर्थेस्मिन् प्राणत्यागं करोति यः। तस्यात्मघातदोषो न प्राप्नुयादीप्सितान्यपि॥ पा
द्मे विष्णुः॥ देहत्यागं तथा वीराः कुर्वंति मम सन्निधौ। मत्तनुं प्रविशंत्येव न पुनर्जन्मिनो नराः॥ कौर्मे।
व्याधितो यदि वा दीनः क्रुद्धो वापि भवेन्नरः। गंगायमुनमासाद्य यस्तु प्राणान् परित्यजेत्। ईप्सितां
ल्लभते कामान् वदंति मुनिपुंगवाः। तथा॥ या गतिर्योगयुक्तस्य सत्वस्थस्य मनीषिणः। सा ग
तिस्त्यजतः प्राणान् गंगायमुनसंगमे॥ वाराहे॥ तत्र ये मुंचति प्राणान् वटमूलेषु सुंदरि। सर्वलो
कानतिक्रम्य मम लोकं प्रपद्यते॥ तथा॥ अकामो वा सकामो वा वटमूलेषु सुंदरि। प्रीतः प्राणान्
प्रमुंचेत यदीच्छेत्परमां गतिं॥ तथा॥ पंचयोजनविस्तीर्णे प्रयागस्य तु मंडले। व्यतीतान् पुरुषा
न्सप्त भविष्यांश्च चतुर्दश॥ नरस्तारयते सर्वान् यस्तु प्राणान् परित्यजेत्॥ ब्राह्मे॥ ध्यात्वा विष्णु
पदांभोजं प्रयागे विष्णुतत्परः। तनुं त्यजति वै माघे तस्य मुक्तिर्न संशयः॥ दुष्कृतोपि दुराचारो ब्र
ह्महत्यादिपातकी। हरिं ध्यात्वा त्यजेद्देहं प्रयागे मुक्तिमान् भवेत्॥ भविष्योत्तरे॥ समाः सहस्रा
णि तु सप्तैव जले दशैकमग्नौ पतने च षोडश। महाहवे षष्टिरशीति गोग्रहे अनाशके भारत चा
क्षया गतिरिति सामान्यतोपि फलं। एवमन्ये विषया ज्ञेयाः॥ यत्तु गौडः॥ प्रयागादिमरणं ब्रा
ह्मणभिन्नविषयमित्याहुः॥ तद्दूषणं पितामहचरणैः प्रयागविधौ कृतमिति तातचरणैः। अ
त्र शहमाशौचं त्रिरात्रं स्नानकालगोचरत्वादिति मदनः॥ युक्तं तु त्रिरात्रं॥ दिवोदासीये
प्येवं शुद्धितत्त्वेपि कश्यपः॥ अनशनमृतानामशनिहतानामग्निजलमृतविप्राणां मृगस

वचनमस्तिपुत्रकर्तृकसर्वप्रायश्चित्तादिविप्लवापत्तेः।प्रागुक्तबौधायनवचनाच्चेतिदिक्॥इदंप्रायश्चि
त्तार्हाणामेव।प्रायश्चित्तानर्हाणांतुपतितोदकमात्रंकार्यमितिकेचित्॥मदनपारिजातादिस्वर
सोप्येवम्॥वस्तुतस्तुतदर्हानर्हयोर्वचनेनुपादानादविशेषात्तत्रापिनारायणबलिर्घटस्फोटश्चे
त्युक्तं।पतितोदकविधिस्तुपित्राद्यतिरिक्तविषयइत्यपरे।सयथा॥हेमाद्रौब्राह्मे॥पतितस्य
तुकारुण्याद्यस्तृप्तिंकर्तुमिच्छति।सहिदासींसमाहूयसर्वगांदत्तवेतनां।अशुद्धघटहस्तांतांत
थावृत्तंब्रवीत्यपि॥हेदासिगच्छमूल्येनतिलान्नानयसत्वरं।तोयपूर्णंघटंचेमंसतिलंदक्षिणामु
खी।उपविश्यतुवामेनचरणेनततःक्षिप।क्रीतेयेत्यातकीसंज्ञांत्वंपिबेतिमुहुर्वद।निशम्यत
स्यवाक्यंसालब्धमूल्याकरोतितत्।एवंकृतेभवेत्तृप्तिःपतितानांनचान्यथेति।इदंचमृताहे
कार्यं।पतितस्यदासीमृताह्निपदाघटंविवर्जयेदेतावतायमुपचरितोभवतीतिमदनरत्नेविष्णू
क्तेः।इदंचात्मत्यागिविषयं।आत्मत्यागिनःपतितास्तेनाशौचोदकभाजःस्युरित्युपक्रम्यविष्णु
नाएतस्याभिधानादितिगौडाः।उपलक्षणत्वात्सर्वेषामितितुयुक्तं।यत्तुकश्चिदाह।यःपतितो
घटस्फोटेनबांधवैर्बहिःकृतस्तद्विषयाणिक्रियानिषेधवाक्यानि।जीवत्येवतस्मिन्नन्त्यकर्म
णःकृतत्वात्।पुनःकरणाभावादिति।सर्वबंधुत्यागेनजातवैराग्यस्यकृतप्रायश्चित्तस्याप्यकर
णापत्तेर्भिन्नास्यादिविरोधमपश्यन्मूर्खैरुपेक्षणीयः।नचकृतघटस्फोटस्यसंग्रहविधिर्ने
तिवाच्यं।मनुनाकृतस्यघटस्फोटस्यत्यागमुक्त्वाप्रायश्चित्तेतुचरितेपूर्णंकुंभमपांनवं॥तेनैवसा
र्द्धंप्रास्येयुःस्नात्वापुण्येजलाशये।इत्युक्तेः।अन्यथाप्रायश्चित्तमात्रेणतत्संसर्गात्।अतोघटस्फो
टेनबहिःकृतस्यापिपित्रादेरन्त्येनारायणबलिः॥निषेधास्तुपित्राद्यपरइतितत्वं।केचि
त्तुनारायणबलौकृतेप्यंत्यकर्मसपिंडनवर्जंकार्यं।गोब्राह्मणहतानांचपतितानांतथैवच।व्यु
त्क्रमाच्चप्रमीतानांनैवकार्यासपिंडनेतिवचनात्।ब्राह्मणादिहतेतातेपतितेसंगवर्जितइति
श्राद्धप्रकाशोक्तेश्चेत्याहुः।तद्धेमाद्रिस्थपूर्वोक्तषट्त्रिंशन्मतविरोधात् निर्मूलत्वाच्छ्राद्धप्रका
शस्यवृद्धिश्राद्धविषयत्वाद्वोपेक्ष्यं॥नारायणबलिस्तुहेमाद्र्याद्यनुसारेणोच्यते।तत्रादौक्रिया
निबंधेगरुडेतर्पणमुक्तं।कार्यंपुरुषसूक्तेनमंत्रैर्वावैष्णवैरपि।दक्षिणाभिमुखोभूत्वाप्रेतंविष्णु
मितिस्मरन्।अनादिनिधनोदेवःशंखचक्रगदाधरः।अक्षय्यःपुंडरीकाक्षःप्रेतमोक्षप्रदोभवेति
शुक्लैकादश्यांदेशकालौसंकीर्त्यामुकगोत्रस्यामुकस्यादुर्मरणात्मघातजदोषनाशार्थं।औ
र्ध्वदेहिकेसंप्रदानत्वयोग्यतासिद्ध्यर्थंनारायणबलिंकरिष्येइतिसंकल्प्यब्रह्माणंविष्णुंशिवंयमं
प्रेतंपंचकुंभेषु॥विष्णुःस्वर्णमयःकार्योरुद्रस्ताम्रमयस्तथा।ब्रह्मारौप्यमयस्तत्रयमोलोहमयोभ
वेत्।प्रेतोदर्भमयःकार्यइतिगारुडोक्तास्तुसर्वास्तुहैमीर्वाप्रतिमासुषोडशोपचारैःपुरुषसूक्ते
नाभ्यर्च्याग्निप्रतिष्ठाप्यचरुंपुरुषसूक्तेनप्रत्यृचंनारायणायेदमितिहुत्वादेवानामग्रेदक्षिणा
ग्रदर्भेषुविष्णुरूपंप्रेतंस्मरन्।नामगोत्राभ्यांमधुघृततिलयुतान्दशपिंडान्यज्ञोपवीत्येवअमु
कगोत्रअमुकशर्मन्प्रेतविष्णुरूपायतेपिंडउपतिष्ठतामितिदत्वाकुशैःपुरुषसूक्तेनाभिमंत्र
यतेयममितिसूक्तेनपिंडानतुमंत्र्यशंखोदकेनचाभिषिच्याभ्यर्च्यामुकशर्माणममुकगोत्रंदि

ग्रामदेशांतरमृतानांजातदंतानांचत्रिरात्रमिति।एवंमरणांतप्रायश्चित्तेपि।पूर्वोक्तवाक्यान्महादोषेहा
शौचादिनिषेधस्तदानीमेव।वत्सरांतेतुसर्वमौर्ध्वदेहिकंकुर्यात्॥गोब्राह्मणहतानांचपतितानां
तथैवच।ऊर्ध्वंसंवत्सरात्कुर्यात्सर्वमेवौर्ध्वदेहिकमिति हेमाद्रौषट्त्रिंशन्मतात्।एवंम्लेच्छीकृ
तानामपिगयाश्राद्धमपिकार्यं॥ब्रह्महाचकृतघ्नश्चगोघातीपंचपातकी सर्वेतेनिष्कृतिंयांति
गयायांपिंडपातनादितित्रिपुराणात्।एवंब्राह्मेपि॥क्रियतेपतितानांतुगतेसंवत्सरेक्वचित्
देशधर्मप्रमाणत्वात्गयाकूपेषुबंधुभिः।मार्तंडपादमूलेवाश्राद्धंहरिहरौस्मरन्।सर्पपदे
त्यर्थः।तत्रवर्षमध्येकृत्स्नमुक्तपराकंवापूरणं।शुक्लपक्षेतुद्वादश्यांकुर्यात्कृष्णेतुवत्सरं।द्वा
दशाहानिवाकुर्यात्शुक्लेचप्रथमेहनि।छागलेयः॥नारायणबलिःकार्योलोकगर्हाभयान्न
रैः।तथातेषांभवेच्छौचंनान्यथेत्यब्रवीद्यमः॥व्यासः॥नारायणंसमुद्दिश्यशिवंवायत्प्रदीयते
तस्यशुद्धिकरंकर्मतद्भवेन्नेतरन्यथेति।सचात्मघातादिप्रायश्चित्तंकृत्वाकार्यः॥तदुक्तंहेमा
द्रौषट्त्रिंशन्मते।कृत्वाचांद्रायणंपूर्वंक्रियाकार्यायथाविधिः॥नारायणबलिःकार्योलोकग
र्हाभयान्नरैः।पिंडोदकक्रियाःपश्चात्वृषोत्सर्गादिकंचयत्।एकोद्दिष्टानिकुर्वीतसपिंडीकर
णंतथा।दिवोदासीयेवृद्धशातातपस्तु॥पतितेचमृतेशुद्धौभाजा(नत्परेतो)ऽशुः॥शूनेवापत्यर
हितेकृच्छ्राणांनवतिंचरेत्॥इत्याहइदंप्रायश्चित्तार्हंपित्रादिविषयं।इंद्रियैरपरित्यक्तायेवमू
ढाविषादिनः।घातयंतिस्वमात्मानंचांडालादिहताश्चये।तेषांदत्ताश्चयेभाश्वदयपासमभिमु
ताः।यथाश्राद्धंप्रनश्यंतिविष्णुनासमतिष्ठितं।तथातेसंप्रवक्ष्यामिनमस्कृत्यस्वयंभुवे।इतिहे
माद्रौनैवोक्तेः।तत्रैवबौधायनोपि॥नारायणबलिंव्याख्यास्यामोभिशस्तपतितसुरपात्मत्या
गिनांब्राह्मणहतानांचद्वादशवर्षाणित्रीणिवावारिमरणंयत्रयस्यतत्रतत्रकुर्वीतेति।एत
त्परिशिष्टेतु।चांडालादिप्रयुक्ताद्दग्ध्वाशरीरंप्रेतस्यसंस्थाप्यास्थीनियत्नतः।प्रायश्चित्तंतु
कर्तव्यंपुत्रैश्चांद्रायणत्रयमित्युक्तं।मदनरत्ने।ब्राह्मणहतानांचद्वादशवर्षाणित्रीणिवाकु
र्वीतेति।मदनरत्नेब्राह्मे॥प्रमादादपिनिःशंकःत्वकस्माद्विधिचोदितः चांडालैर्ब्राह्मणैश्चो
रैर्निहतोयत्रकुत्रचित्।तस्यदाहादिकंकार्यंयस्मान्नपतितस्तुसः चांद्रायणंतप्तकृच्छ्रं
यंतस्यविशुद्धये।यद्वाकृच्छ्रानंचदशकृत्वातुविधिनादहेत्।बुद्धिपूर्वमृतानांतुत्रिंशत्कृच्छ्र
समाचरेत्इत्युक्तम्॥स्मृतिरत्नावल्यांतद्द्विगुणंप्रायश्चित्तंकृत्वायोगप्यन्नात्सर्वंकार्यमित्युक्तं
आत्मनोघातशुद्ध्यर्थंचरेच्चांद्रायणद्वयं।तप्तकृच्छ्रंचत्रिंशत्कृच्छ्राणिवापुनः।अर्वाक्
संवत्सरात्कुर्याद्दहनादियथोदितं।कृत्वानारायणबलिमनित्यत्वात्तदायुषइति।इदंचात्मवध
निमित्तंतज्जातिवधप्रायश्चित्तेनसमुच्चितंकार्यं।अतएवबौधायनेनोक्तं।द्वादशवर्षाणित्री
णिवेति।मदनपारिजाते।स्मृत्यर्थसारेच।ब्रह्महादीनांतद्योग्यंप्रायश्चित्तंकृत्वानारायणबलिः
कार्यइत्युक्तम्।एवंम्लेच्छीकृतानामपि॥यत्तुकश्चिदाहपुत्रकृतेनप्रायश्चित्तेनपितुःपापनाशे
मानाभावात्आत्मघातेतुवचनादस्तु।महापातकेतुकथंस्यादिति।सत्यमेवात्मवधप्रायश्चि
त्तस्यजातिवधनिमित्तेनसमुच्चयं।चदलहृदयपूत्यएप।नहिजातिवधनिमित्तंपुत्रैःकार्यमिति

वचनमस्तिपुत्रकर्तृकसर्वप्रायश्चित्तादिविषयंवापत्नेः। प्रागुक्तबौधायनवचनाच्चेतिदिक्। इदंप्रायश्चि
त्तार्हाणामेव। प्रायश्चित्तानर्हाणांतुपतितोदकमात्रंकार्यमितिकेचित्॥ मदनपारिजातादिस्वर
सोप्येवम्॥ वस्तुतस्तुतदर्हानर्हयोर्वचनेनुपादानादविशेषात्तत्रापिनारायणबलिर्गयाश्राद्धंचे
तियुक्तं। पतितोदकविधिस्तु। पित्राद्यतिरिक्तविषयइत्यपरे। सयथा॥ हेमाद्रौब्राह्मे॥ पतितस्य
तुकारुण्यात्तृप्तिंकर्तुमिच्छति। सहिदासींसमाहूयसर्वगोदत्तवेतनां। अशुद्धघटहस्तांनाय
थावृत्तंब्रवीत्यपि। हेदासीगच्छमूल्येनतिलानानयसत्वरं। तोयपूर्णंघटंचेमंसनिलंदक्षिणामु
खी। उपविश्यतुवामेनचरणेनततःक्षिप। कीर्तयेत्यानकीसंज्ञांत्वंपिवेतिमुहुर्वदन्। निशम्यत
स्यवाक्यंसालब्धमूल्याकरोतितत्। एवंकृतेभवेत्तृप्तिःपतितानांनचान्यथेति। इदंचमृताहे
कार्यं। पतितस्यदासीमृताह्निपदाघटंविवर्जयेदेतावतायमुपचरितोभवतीतिमदनरत्नेविश्व
क्तेः। इदंचात्मत्यागिविषयं। आत्मत्यागिनःपतितास्तेनाशौचोदकभाजःस्युरित्युपक्रम्यविष्णु
नाएतस्याभिधानादितिगौडाः। उपलक्षणत्वात्सर्वेषामितितुयुक्तं। यत्तुकश्चिदाह। यःपतितो
घटस्फोटेनबांधवैर्बहिःकृतस्तद्विषयाणिक्रियानिषेधवाक्यानि। जीवत्येवतस्मिंस्तत्कर्म
णःकृतत्वात्। पुनःकरणाभावादिति। सबंधुत्यागेनजातवैराग्यस्यकृतप्रायश्चित्तस्याप्यकर
णापत्तेर्भिनास्तरादिविरोधमपश्यन्मूर्खैरुपेक्षणीयः। नचकृतघटस्फोटस्यसंग्रहविधिर्ने
तिवाच्यं। मनुनाकृतस्यघटस्फोटस्यत्यागमुक्त्वाप्रायश्चित्तेतुचरितेपूर्णंकुंभमपांनवं॥ तेनैवसा
र्धंप्रास्येयुःस्नात्वापुण्येजलाशये। इत्युक्तेः। अन्यथाप्रायश्चित्तमात्रेणतत्संगात्। अतोघटस्फो
टेनबहिःकृतस्यापिपित्रादेरब्दांतेनारायणबलिः॥ निषेधास्तुपितृव्यादिपराइतितत्वं। केचि
त्तुनारायणबलौकृतेप्यंतकर्मसपिंडनवर्जंकार्यं। गोब्राह्मणहतानांचपतितानांतथैवच। ऊ
र्ध्वमाब्दप्रमीतानांनैवकार्यासपिंडनेतिवचनात्। ब्राह्मणादिहतेनातेपतितेसंगवर्जितेइति।
श्राद्धप्रकाशोक्तेश्चेत्याहुः। तद्धेमाद्रिस्थपूर्वोक्तषट्त्रिंशन्मतविरोधात् निर्मूलत्वाच्छ्राद्धप्रका
शस्यवृद्धिश्राद्धविषयत्वाच्चोपेक्ष्यं॥ नारायणबलिस्तुहेमाद्र्याद्यनुसारेणोच्यते। तत्रादौक्रिया
निबंधेगरुडेतर्पणमुक्तं। कार्यंपुरुषसूक्तेनमंत्रैर्वावैष्णवैरपि। दक्षिणाभिमुखोभूत्वाप्रेतंविष्णु
मितिस्मरन्। अनादिनिधनोदेवःशंखचक्रगदाधरः। अक्षय्यःपुंडरीकाक्षःप्रेतमोक्षप्रदोभवेति
शुक्लैकादश्यांदेशकालौसंकीर्त्यामुकगोत्रस्यामुकस्यदुर्मरणजनितदोषनाशार्थं। और्
ध्वदेहिकेसंप्रदानत्वयोग्यतासिध्यर्थंनारायणबलिंकरिष्यइतिसंकल्प्यब्रह्माणंविष्णुंशिवंयमं
प्रेतंपंचकुंभेषु॥ विष्णुःस्वर्णमयःकार्योरुद्रस्ताम्रमयस्तथा। ब्रह्मारौप्यमयस्तद्वद्यमोलोहमयोभ
वेत्। प्रेतोदर्भमयःकार्यइतिगारुडोक्तासुसर्वासुहैमीर्वाप्रतिमासुषोडशोपचारैःपुरुषसूक्ते
नाभ्यर्च्याग्निंप्रतिष्ठाप्यचरुंपुरुषसूक्तेनप्रत्यृचंनारायणायेदमितिहुत्वादेवानामग्रेदक्षिणा
ग्रदर्भेषुविष्णुरूपंप्रेतंस्मरन्। नामगोत्राभ्यांमधुघृततिलयुतान्दशपिंडान्यज्ञोपवीत्येवअमु
कगोत्रअमुकशर्मन्प्रेतविष्णुरूपायंतेपिंडउपतिष्ठतामितिदत्वाकुशैःपुरुषसूक्तेनाभिमंत्र
णेयममितिसूक्तेनपिंडाननुमंत्र्यशंखोदकेनचाभिषिच्याभ्यर्च्यामुकशर्मणोऽमुकगोत्रेदि

सुरूपं केनं तर्पयामीति पुरुषसूक्तेन प्रत्यृचं तर्पयित्वा एकसामर्थ्यं ब्रह्मादिभ्यश्च भ्योदद्यात् । मंत्रस्तु ॥ ब्र
ह्मविष्णुमहादेवा यमश्चैव सकिंकरः । बलिं गृहीत्वा कुर्वंतु प्रेतस्य च शुभां गतिमिति । मिताक्षरा
यां तु होमवस्त्रादि नोक्तं । ततः प्रतिदैवतं त्रिविधं फलं शर्करामधुघृतयुतानि च निवेद्य पिंड
मभ्यर्च्य नद्यां क्षिप्त्वा रात्रौ नव सप्त पंच वा विप्रान्निमंत्र्योपोषितेन जागरणं कृत्वा श्वोभूते पु
नर्विष्णुपूजां समाप्यैकोद्दिष्टविधिना श्राद्धपंचकं करिष्ये इत्युक्त्वा ब्रह्मविष्णुशिवयमप्रेतानां स्थाने
विप्रान् उपवेश्य प्रेतस्थाने चैकं विष्णुस्वरूपावाहनाद्यर्घ्यपूर्वं तर्पितं प्रश्नानंतरं कृत्वा तेषामन्नादि कृ
त्वान्नशेषेण ब्रह्मणे विष्णवे शिवाय यमाय सपरिवाराय च चतुरः पिंडान् दत्त्वा प्रेतनामगोत्रे स्मृ
त्वा विष्णुनाम्ना पंचमं दत्त्वाभ्यर्च्य ब्राह्मणेभ्यो दक्षिणां दत्त्वैकं प्रेतं स्मृत्वा विशेषतः ॥ संतोष्य विप्रैः
प्रेताय देहि तिलोदकं सुपवित्रं नामेति । सतिलमुदकं दापयित्वा भुंजीतेति । अत्र विशेषांतरं भट्ट
नारायणपद्धतौ ज्ञेयं । सर्पहते तु वर्षपर्यंतं पूर्वेद्युरेकभक्तं पूर्वं शुक्लपंचम्यामुपवासं नक्तं वा कृत्वा पि
ष्टमयं नागमनंतवासुकिशंखपद्मकंबलकर्कोटकाश्वतरधृतराष्ट्रशंखपालकालियतक्षक
कपिलेति नामभिः प्रतिमासं संपूज्य पायसेन विप्रान् संभोज्य वत्सरांते हैमं नागं गां च सत्पात्राय द
त्त्वा नारायणबलिं कुर्यात् । मूलं तु हेमाद्रौ ज्ञेयं । बौधायनसूत्रे सर्पमृतानां नमोऽस्तु सर्पेभ्य इति
सूक्ताहुतीर्हुत्वोदके मृतानां समुद्राय वरुणायेति हुत्वेति । क्रियां कुर्यादिति शेषः ॥ व्यासः ॥ सौव
र्णं भारं निष्पन्नं नागं कृत्वा तथैव गां । व्यासाय दत्त्वा विधिवत् पितुरानृण्यमाप्नुयात् । हेमाद्रौ भ
विष्ये । पंचम्यां पन्नगं हैमं स्वर्णनैकेन कारयेत् । क्षीराज्यपात्रमध्यस्थं पूज्य विप्राय दापयेत् । प्रा
यश्चित्तमिदं प्रोक्तं नागदष्टस्य शंभुनेति । अपरार्के स्मृत्यंतरे ॥ तद्देवं प्रतिपेतो नारायणबलौ कृ
ते । यो ददाति क्रियापिंडं तस्मै प्रेतानुवर्तिनः । तस्यैवाशौचमुद्दिष्टं त्र्यहमेवं न संशयः । विष्णुश्चात्र
स्मात्तौ तु यो दद्यात् दिनत्रयं त्र्यशौचं पिंडदः कुर्यान्न तु तद्बंधुगोत्रजाः । यस्य वै मृत्युकाले तु व्यु
च्छिन्ना संततिर्भवेत् स वसेन्नरके नित्यं पंकमग्नः करीषवत् । तस्य बलिं नारायणं कुर्यात्त
स्योद्देशेन भक्तिमानिति गारुडोक्तेः पुत्रस्यापि प्रत्यायैः कार्यस्तु न देवयाज्ञिकेन ॥

॥अथ विधानान्त्याशौचाभावः॥ ॥यद्यपि यतिपुत्रमृतादिषु त्र
याणामाश्रमाणां च कुर्याद्दाहादिकाः क्रियाः । यतेः किंचिन्न कर्तव्यं न चान्येषां करोति सप्रति
ब्राह्मणात् ॥ उशनाः ॥ एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा । अहन्येकादशे प्राप्ते पार्वणं तु
विधीयते । सपिंडीकरणं तेषां न कर्तव्यं सुतादिभिः । त्रिदंडग्रहणादेव प्रेतत्वं नैव जायते । त
त्संस्कारं वक्ष्यामः दत्तात्रेयः ॥ एकोद्दिष्टं जलं पिंडमाशौचं प्रेतसत्क्रियां । न कुर्याद्वार्षिकादन्यत्
ब्रह्मीभूताय भिक्षवे । वार्षिकादर्वाक् मासिकादिनिषेधानुवादार्थं देः । संन्यासिनोऽप्या
ब्दिकादि पुत्रः कुर्याद्यथाविधीति । वायवीयोक्तेः ॥ पृथ्वीचंद्रोदये प्रजापतिः ॥ अहन्येकाद
शे प्राप्ते पार्वणं तु विधीयते । सपिंडीकरणं तस्य न कर्तव्यं सुतादिभिः ॥ एकोद्दिष्टपिंडनादिनि
षेधानुवादेन पार्वणोक्तेः । तत्स्थाने पार्वणस्य गम्यते ॥ नगरागिरेतिनृपादैरुक्त
त्वोऽप्यमितिवत् । इदं वार्षिकादिविधानं च त्रिदंडिपरं । एकदंडीपरमहंसादीनां तु न किमपि
कार्यं । पूर्वोक्तोशनोवाक्ये । त्रिदंडीग्रहणादिति शूलपाण्यादयो गौडाः ॥ त्रिदंडिशब्देन प

नोद्दंडादिदंडत्रयोक्तेः। यस्यैते नियता दंडाः स त्रिदंडीति चोच्यते इति स्मृतेः। बौधायनः। नारायण
बलिश्चास्य कर्तव्यो द्वादशेहनि॥ अस्य पार्वणेन समुच्चयो ज्ञेयः। तं च स एवाह। कृत्वा विष्णो
र्महापूजां पायसं विनिवेदयेत्। अग्नौ हुत्वा तु तच्छेषं व्याहृतीभिः समाहितः। यतीन् ब्रह्मस्था
न्साधून्वा निमंत्र्य द्वादशावरान्। अभ्यर्च्य गंधपुष्पाद्यैर्मंत्रैर्द्वादशनामभिः। संभोज्य हव्येनान्ते
न दक्षिणां च निवेदयेत्। त्रयोदशं द्विजश्रेष्ठमात्मसंज्ञं यतेंद्रियं। विष्णुं यथा तथाभ्यर्च्य पाद्यार्घ्यै
श्च विधानतः। दद्यात्पुरुषसूक्तेन गंधपुष्पादिकं क्रमात्। वस्त्रालंकरणादीनि यथाशक्ति प्र
दापयेत्। उच्छिष्टसन्निधौ तस्य दर्भानास्तीर्य भूतले। भूर्भुवः स्वः स्वधा युक्तैस्तस्मै दद्याद्बलि
त्रयं। अश्वमेधसहस्रस्य वाजपेयशतस्य च। यत्फलं तल्लभेदेवं यत्करोति यतिक्रियां। शौन
कस्तु॥ शौनकोह एव स्वामिनारायणबलिपरं। चंडालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युताद
पि॥ दंष्ट्रिभ्यश्च पशुभ्यश्च रज्जुशस्त्रविषाश्मभिः। देशांतरमृतानां च मृतानां चैव साधनैः॥
जीवच्छ्राद्धे मृतानां च कनिष्ठानां तथैव च। यतीनां योगिनां पुंसामन्येषां मोक्षकांक्षिणां।
पुण्यायाथक्ष्यार्थाय द्वादशेहनि कारयेत्। द्वादश्यां श्रवणे वांते पंचम्यां पर्वणोस्तु वै। उक्त्वा
पूर्वोक्तं सर्वं विधिमुक्त्वा नो देवेति षड्भिः पुरुषसूक्तेन च यजेच्च पायसं हुत्वा केशवादिद्वा
दशनामभिस्तद्रूपिणोपि त्वे द्वादशविप्रान्संभोज्य तैरेव द्वादशपिंडान्दद्यादित्यधिकमाह
युद्धमृते तु प्रागुक्तं॥ कृतजीवच्छ्राद्धे मृते सपिंडैराशौचादि कार्यं न वा॥ तदुक्तं हेमाद्रौ लैंगे
मृते कुर्यान्न कुर्याद्वा जीवन्मुक्तो यतः स्वयं॥ कालेगते द्विजभूमौ खनेद्वापि दहेत्तु वा। एतत्कृ
तमशौचं च कृत्वा दोषो न विद्यते जीवत्यपि विशेषस्तत्रैवोक्तः। नित्यनैमित्तिकं यत्तु कुर्याद्वा
संत्यजेत्तु वा। बांधवैर्विमृते तस्य नैवाशौचं विधीयते। सूतकं च न संदेहः स्नानमात्रेण शुद्ध्य
ति॥ एतद्योगो विषयं च। योगमार्गरतोपि वेतितस्याप्युक्तेः। तथा॥ आहिताग्नौ प्रोषितमृते
तदस्थिदाहात्पूर्वं पुत्रादीनामाशौचं संध्यादिकर्मलोपश्च नास्ति। अनग्निमतस्तु मृतेराशौ
चादि द्विजातिषु। दाहादग्निमतो विद्याद्विदेशस्थे मृते सति इति स्मृतेः॥ आहिताग्नेर्दाहात्प्रा
गपि दशाहः। संस्कारांगं च भिन्नो दशाहः इति भट्टस्वामी रामांडारश्च॥ तच्चिंत्यं॥ मूले वचना
द्वचोविरोधाच्च॥ एतत्प्रागुक्तं। अत्र देहस्यैव संभवे दाह। आहिताग्नौ विदेशस्थे मृते सति क
लेवरं। निर्मथ्याग्निभिर्यावत्तदीयैरपि दह्यते। इति ब्राह्मोक्तेः॥ तदभावे छंदोगपरिशि
ष्टे। विदेशमरणेस्थीनि आहृत्याभ्यज्य सर्पिषा। दाहयेद्धहिंषाच्छाद्य पात्रन्यासादिपूर्ववत्
अस्थ्नामलाभे पर्णानि शकलान्युक्तयावृता दाहयेदस्थिसंख्यानि ततः प्रभृति सूतकं॥
हेमाद्रौ षट्त्रिंशन्मते॥ कुर्याद्दर्भमयं प्रेतं दर्भैस्त्रिशतषष्टिभिः। पालाशीभिः शमिद्भिर्वा सं
ख्या चैवं तु कीर्तिता। भविष्ये। चत्वारिंशच्छिरःस्थाने ग्रीवायां च दशैव तु। बाह्वोश्चैव श
तं दद्याद्विंशतिं च तथोरसि। उदरे विंशतिं दद्यात्त्रिंशतं कटिदेशयोः। ऊर्वोश्चैव शतं दद्या
त्त्रिंशतं जानुजंघयोः। पादांगुलीषु दश वै एषा च प्रेतकल्पना। मदनरत्ने यत्तपार्श्वैः॥ शि
रस्यशीत्यर्धं दद्यात् ग्रीवायां तु दशैव तु बाह्वोश्चैव शतं दद्यात् दश चैवांगुलीषु च॥ उरसि

स्वरूपं प्रेतं तर्पयामीति पुरुषसूक्तेन प्रत्यृचं तर्पयित्वा एकशः पंचब्रह्मादिभ्यो दद्यात्। मंत्रस्तु॥ ब्र
ह्मविष्णुमहादेवाय यमश्चैव सकिंकरः। बलिं गृहीत्वा कुर्वंतु प्रेतस्य च शुभां गतिमिति। मिताक्षरा
यां तु होमबल्यादिनोक्तः। ततः प्रतिदैवतं त्रिविधं फलं शाकं मधुघृतगुडानि च निवेद्य पिंड
मभ्यर्च्य नद्यां क्षिप्त्वा रात्रौ नवसप्तपंच वा विप्रान्निमंत्र्योपोषितेन जागरणं कृत्वा श्वोभूते पु
नर्विष्णुयमं संपूज्यैकोद्दिष्टविधिना श्राद्धं पंचकं करिष्य इत्युक्त्वा ब्रह्मविष्णुशिवयमप्रेतान्स्मरन्
विप्रानुपविश्य प्रेतस्थाने चैकं विष्णुं स्मरन्नावाहनार्घ्ययुतं तृप्तिप्रश्नांतं कृत्वोल्लेखनादि कृ
त्वान्नशेषेण ब्रह्मणे विष्णवे शिवाय यमाय सपरिवाराय चतुरः पिंडान्दत्त्वा प्रेतनामगोत्रे स्मृ
त्वा विष्णुनाम्ना पंचमं दत्त्वाभ्यर्च्याचांतेभ्यो दक्षिणां दत्त्वैकं प्रेतं स्मृत्वा विप्रायतः। संतोष्य विप्रैः
प्रेताय दत्तं तिलोदकमुपतिष्ठतामिति। सतिलमुदकं दापयित्वा भुंजीतेति। अत्र विशेषांतरं भट्टकृ
तांत्येष्टिपद्धतौ ज्ञेयं। सर्पहते तु वर्षपर्यंतं पूर्वेद्युरेकभक्तं पूर्वं शुक्लपंचम्यामुपवासं नक्तं वा कृत्वा पि
ष्टमयं नागमनंतं वासुकिं शंखपद्मकंबलकर्कोटकाश्वतरधृतराष्ट्रशंखपालकालियतक्षक
कपिलेति नामभिः प्रतिमासं संपूज्य पायसेन विप्रान्संभोज्य वत्सरांते हैमं नागं गां च सवत्सां द
त्त्वा नारायणबलिं कुर्यात्। मूलं तु हेमाद्रौ ज्ञेयं। बौधायनसूत्रे सर्पहतानां नमोस्तु सर्पेभ्य इति ति
स्र आहुतीर्हुत्वोदके मृतानां समुद्राय वरुणायेति हुत्वेति। क्रियां कुर्यादिति शेषः॥ व्यासः॥ सौव
र्णभारनिष्पन्नं नागं कृत्वा तथैव गां। व्यासाय दत्त्वा विधिवत्पितुरानृण्यमाप्नुयात्। हेमाद्रौ भ
विष्ये। पंचम्यां पन्नगं हैमं स्वर्णेनैकेन कारयेत्। क्षीराज्यपात्रमध्यस्थं पूज्य विप्राय दापयेत्। प्रा
यश्चित्तमिदं प्रोक्तं नागदष्टस्य शंभुनेति। अपरार्के स्मृत्यंतरे॥ तदेव शुध्यंति ये तो नारायणबलौ कृ
ते। यो ददाति क्रियापिंडं तस्मै प्रेतापवेशनः तस्यैवाशौचमुद्दिष्टं त्र्यहमेव न संशयः। विष्णुश्राद्ध
समाप्तौ तु त्रयोदश्यादि त्र्यहं अशौचं पिंडदः कुर्यान्न तु तद्बंधुगोत्रजाः। यस्य वै मृत्युकाले तु व्यु
च्छिन्ना संततिर्भवेत् स वसेन्नरके नित्यं पंकमग्नः करीषवदित्युपक्रम्य। बलिं नारायणं कुर्यात्त
स्योद्देशेन भक्तिमानिति गारुडोक्तेः पुत्रस्यापि पित्र्याद्यैः कार्य इत्युक्तं देवयाज्ञिकेन॥

॥ अथ विधानाशौचाभावः॥

॥ यथायतिप्रमृतादिषु त्र
याणामाश्रमाणां च कुर्याद्दाहादिकाः क्रियाः। यतेः किंचिन्न कर्तव्यं न चान्येषां करोति स इति
श्राद्धान्॥ उशनाः॥ एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा। अहन्येकादशे प्राप्ते पार्वणं तु
विधीयते। सपिंडीकरणं तेषां न कर्तव्यं सुतादिभिः। त्रिदंडग्रहणादेव प्रेतत्वं नैव जायते। त
त्संस्कारं वक्ष्यामः दत्तात्रेयः॥ एकोद्दिष्टं जलं पिंडमाशौचं प्रेतसत्क्रियां। न कुर्याद्वार्षिकादन्यत्
ब्रह्मीभूताय भिक्षवे। वार्षिकाद्वा क्रमाद्विमासिकादिनिषेधो न तु दर्शादेः। संन्यासिनोप्या
ब्दिकादि पुत्रः कुर्याद्यथाविधीति। वायवीयोक्तेः॥ पृथ्वीचंद्रोदये प्रजापतिः॥ अहन्येकाद
शे प्राप्ते पार्वणं तु विधीयते। सपिंडीकरणं तस्य न कर्तव्यं सुतादिभिः। एषु पिंडनादि नि
षेधानुवादेन पार्वणोक्तेः। तत्स्थानापन्नत्वं पार्वणस्य गम्यते॥ नागिरणोरेतिरूपादेरंकृ
त्वोद्देशमितिवत्। इदं वार्षिकादिविधानं च त्रिदंडिपरं। एकदंडीपरमहंसादीनां तु न किमपि
कार्यं। पूर्वोक्तोशनोवाक्ये। त्रिदंडीग्रहणादिति शूलपाण्यादयो गौडाः॥ त्रिदंडिशब्देन म

त्रिंशतंदद्यात्त्रिंशतंजठरोदरे।द्वादशार्धंवृषणयोरष्टार्धंशिश्नएवतु।ऊर्वोरेकशतंदद्यात्त्रिंशतं
जंघयोर्द्वयोः।पादांगुलीषुदद्यात्एतत्प्रेतस्यकल्पनं।मस्तकेनारिकेलंतुअलाबुंतालुकेत
था।पंचरत्नंमुखेन्यस्यजिह्वायांकदलीफलं।चक्षुषोस्तुकपर्दौद्वौनासिकायांतुकालकं।क
र्णयोर्भल्लपत्राणिकेशेवटप्ररोहकाः।नालकंकमलानांतुअंत्रस्थानेविनिर्दिशेत्।मृत्तिकांतु
वसार्थांतुहरितालकगंधकौ।शुक्रेतुपारदंदद्यात्पुरीषेपित्तलंतथा।संधीषुतिलपिष्टंतुमां
संस्याद्यवपिष्टकं।मधुस्याल्लोहितस्थानेत्वचस्थानेमृगत्वचः।स्तनयोर्गुंजकेदेयेनासापुटे
तपत्रकं।कमलंनाभिदेशेस्यात्वृंताकंवृषणाश्रिते।लिंगेचरक्तमूलंतुपरिधानंदुकूलकं
गोमूत्रंगोमयंगंधंसर्वौषध्यादिसर्वतइति।क्रियानुबंधेगारुडेप्येवमुक्त्वान्यदपि।घृतेनाभ्य
ंगंदेयंस्यात्लोपनेचत्रपुस्मृतं।मौक्तिकंस्तनयोर्मूर्ध्निकुंकुमेनविलेपनं।सिंदूरंनेत्रकोणेषुतां
बूलाद्युपहारकैः।सर्वौषधियुतंकृत्वाशृंगारैवयथोदितं।इदंनिरग्नेरपि।तत्रैववृद्धमनुः
प्रोषितस्यतथाकालोगतश्चेद्द्वादशाब्दिकः।प्राप्तेत्रयोदशेवर्षेप्रेतकर्माणिकारयेत्।बृहस्प
तिः।यस्यनश्रूयतेवार्त्तायावद्द्वादशवत्सरान्।कुशपुत्रकदाहेनतस्यस्यादवधारणा।भ
विष्ये।पितरिप्रोषितेयस्यनवार्त्तानैवचागमः।ऊर्ध्वंपंचदशाद्वर्षात्कृत्वातत्प्रतिरूपकं।कु
र्यात्तस्यतुसंस्कारंयथोक्तविधिनाततः।तदादीन्येवसर्वाणिप्रेतकार्याणिकारयेत्।द्वादश
वत्प्रतिक्षापितृभिन्नविषयेतिमदनरत्नेउक्तं।गृह्यकारिकायांतु।तस्यपूर्ववयस्कस्यविंशत्या
ब्दैततःक्रिया।ऊर्ध्वंपंचदशाद्वापिमध्यमेवयसिस्मृताः।द्वादशाद्वत्सरादूर्ध्वमुत्तरेवयसिस्मृ
ता।चांद्रायणत्रयंकृत्वात्रिंशत्कृच्छ्राणिवापुनः।कुशैःप्रतिकृतिंदग्ध्वाकार्याशौचादिका
क्रियाइत्युक्तंपराशरः।देशांतरगतोनष्टस्तिथिर्नज्ञायतेयदि।कृष्णाष्टमीत्वमावास्याकृष्णा
चैकादशीतथा।उदकंपिंडदानंचतत्रश्राद्धंचकारयेत्।इदंमासज्ञाने।तत्राहिताग्नेःशौ
चं।अनाहिताग्नेस्तुत्रिरात्रं।अनाहिताग्नेर्देहस्तुदाह्योगृह्याग्निनास्वयं।तदलाभेप
लाशानांवृंतैःकार्यःपुमानपि।वेष्टितव्यस्तथापत्नात्कृष्णसारस्यचर्मणा।ऊर्णासूत्रेण
बध्वातुप्रलेपस्त्वौयवैस्तथा।सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्चतथाग्निना।असौस्वर्गायलोका
यस्वाहेत्युक्त्वासबांधवैः।एवंपर्णशरंदग्ध्वात्रिरात्रमशुचिर्भवेदितिब्राह्मोक्तेः।इदंत्रिरात्रं
नदशाहमध्येदाहेतत्रशेषिणैवकालशुद्ध्यादित्युक्तेः।किंतुतदूर्ध्वं।तत्रपत्नीपुत्रयोःपूर्वमगृ
हीताशौचयोर्दशाहाद्येव।गृहीताशौचयोस्तुत्रिरात्रं।पत्नीमृतौभर्तुश्चैवं।सपत्न्योश्चैव
मितिस्मृत्यर्थसारे।अन्यसपिंडानांतुसर्वत्रपर्णशरदाहेत्रिरात्रं।तदाहांगिराः।देशांतरमृ
तंश्रुत्वानाशौचंचेत्कथंचन।कालात्ययेपिकुर्वीतदाहकालेदिनत्रयमितिस्मृत्यर्थसारेतु।
गृहीताशौचानांस्नानमात्रमुक्तं।वृद्धचपरिशिष्टेपि। ।अथातीतसंस्कारः
सचेदंतर्दशाहंस्यात्तत्रैवसर्वंसमाप्येदूर्ध्वमाहिताग्नेर्दाहात्स्वेमाशौचंकुर्यात्क्रमेणतथा
कालमन्येषुपत्नीपुत्रयोःपूर्वमगृहीताशौचयोःकर्मांगेत्रिरात्रमिति।षडशीतावप्येवं।वि
श्वादर्शेतु।प्रतिकृतिदहनेत्वग्निदेशात्त्रिरात्रमित्युक्तं।द्वादशवर्षादिप्रतीक्ष्योत्तरंदाहेतुपु

त्रादीनां सर्वेषां त्रिरात्रमेवेति कल्पतरुदिवोदासादयः॥ ॥अथ प्रेतसंस्कारे कालः॥
हेमाद्रौ गार्ग्यः॥ अन्त्यस्य शवसंस्कारे दिनं नैव विशोधयेत्। अशौचमध्ये संस्कारे दिनं शोध्यं न तु सं-
भवे। अशौचविनिवृत्तौ चेत्पुनः संक्रियते मृतः। संशोध्यैव दिनं ग्राह्यं पूर्वं संवत्सराद्यदि। प्रेतका-
र्याणि कुर्वीत श्रेष्ठं तत्रोत्तरायणम्। कृष्णपक्षश्च तत्रापि वर्ज्यमेव तु दिनत्रयं। वाराहे॥ चतुर्थाष्टमगे
चंद्रे द्वादशे च विवर्जयेत्। प्रेतकृत्यं व्यतीपाते वैधृतौ परिघे तथा। करणे विष्टिसंज्ञे च शनैश्चर-
दिने तथा। त्रयोदश्यां विशेषेण जन्मतारात्रये तथा। जन्मदशमैकोनविंशति॥ जन्मतारात्र-
यं॥ भारते॥ नक्षत्रे तु न कुर्वीत यस्मिन्जातो भवेन्नरः। न प्रोष्ठपदयोः कार्यं तथाग्नेये च भार-
त॥ दारुणेषु च सर्वेषु प्रत्यरे च विवर्जयेत्। कश्यपः। भरण्यार्द्रामघाश्लेषामूलं त्रिचरणानि च।
प्रेतकृत्ये तिदुष्टानि धनिष्ठाद्यं च पंचकं फाल्गुनीद्वितयं रोहिण्यनुराधा पुनर्वसुः। आषाढे द्वि-
शाखा च भानि द्विचरणानि च। एतानि किंचिद्दुष्टानि संभवे सति वर्जयेत्॥ ज्योतिर्नारदः॥ च-
तुर्दशीं तिथिं नंदां भद्रां शुक्रारवासरौ। सितेज्ययोरस्तमयं व्यंघ्रिभं विषमांघ्रिभं॥ शुक्लपक्षं
च संत्यज्य पुनर्दहनमुत्तमं। वसूत्तराद्वैतः पंचनक्षत्रेषु त्रिजन्मसु। पौस्नत्रस्रसर्पयोश्चैव दहनात्
कुलनाशनं॥ अस्यापवादमाह। तत्रैव वैजवापः॥ प्रेतस्य साक्षाद्दग्धस्य पात्रेत्वेकादशेह-
नि। नक्षत्रतिथिवारादि शोधनीयं न किंचन॥ युगमन्वादिसंक्रांतिदर्शेष्वेतत्क्रिया यदि। दे-
वादपतिता तत्र नक्षत्रादि न शोधयेत्॥ विश्वप्रकाशेऽपि॥ गुरुभार्गवयोर्मौढ्ये पौषमासे म-
लिम्लुचे। नातीतः पितृमेधः स्याज्जयां गोदावरीं विना॥ दानमपि तत्रैवोक्तं॥ भद्रायां भूमिदा-
नं स्यात्त्रिपादर्क्षे हिरण्यदः। वारेषु तत्र दुर्गे तु वासोदानं विधीयते। धनिष्ठापंचकमृते पंच
रत्नानि दापयेत्। एकाशीतिपलं कांस्यं तदर्धं वा तदर्धकम्॥ नवषट्त्रिपलं वापि दद्याद्वि-
भवशक्तितः इत्यलं प्रसंगेन॥ हेमाद्रौ वृद्धमनुः। अमृतं मृतमाकर्ण्य कृतं यस्यौर्ध्वदेहिकं।
प्रायश्चित्तमसौ स्नात्वा कृत्वाग्नीनादधीत च। जीवन्यदि समागच्छेद्घृतकुंभे निमज्ज्य तं। उ-
द्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत्॥ द्वादशाहं व्रतचर्या त्रिरात्रमथवास्य तु। स्नात्वोद्व-
हेत्तां भार्यां अन्यां वा तदभावतः। अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत्। अथैंद्राग्नेन प-
शुना गिरिं गत्वा च तत्र तु। इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्ततः। अनाहिताग्नेस्तु चरुः
श्रुतवान्नामात्रश्चवलोऽस्याश्वलायनः। सुरभयस्त्व यस्मिन्जीवे मृतशब्द इति। यस्य तु जीवत
एव मृतिवार्तां श्रुत्वा स्त्रिया सहगमनं कृतं तदा तद्देहमेव भर्तृमरणज्ञानस्यैव निमित्तत्वा-
त्प्रमाणत्वस्य गौरवेणायुक्तत्वाच्चेति केचित्। तन्न॥ मरणज्ञानस्य निमित्तत्वे अतीताना-
गतयोरपि तथात्वापत्तेः। भर्तुर्वैधदाहाभावेन तस्याः सहगमनाभावाच्च। तस्मादशौच-
वत्। ज्ञानमरणस्यैव निमित्तत्वं। न चात्र तदस्ति। परं काम्यं मरणमस्तु। अत आत्महनन-
दोषोऽस्तीति तत्पादाः। तथा सर्पसंस्कारः कृते त्रिरात्रमाशौचं। तद्विधिं चाह शौनकः॥
अथ वक्ष्यामि सर्पस्य संस्कारविधिमुत्तमं। सिनीवाल्यां पौर्णमास्यां पंचम्यां वापि कार-
येत्॥ कृते सर्पवधे विप्रः पूर्वजन्मनि वा यदि। वधं प्रख्यापयेमापी चरेत्कृच्छ्रांश्चतुर्दे

विंशतिं दद्यात्त्रिंशतं जठरोदरे। द्वादशार्धं वृषणयोरष्टार्धं शिश्न एव तु। ऊर्वोश्चैकशतं दद्यात्त्रिंशतं
जंघयोर्द्वयोः। पादांगुलीषु दश दद्यादेतत्प्रेतस्य कल्पनं। मस्तके नारिकेलं तु अलाबुं तालुके त
था। पंचरत्नं मुखे न्यस्य जिह्वायां कदलीफलं। चक्षुषोस्तु कपर्दौ द्वौ नासिकायां तु कालकं। क
र्णयोर्बल्लपत्राणि केशे वटप्ररोहकाः। नालकं कमलानां तु अंत्रस्थाने विनिर्दिशेत्। मृत्तिकां तु
वसास्थाने हरितालकगंधकौ शुक्रे तु पारदं दद्यात्पुरीषे पित्तलं तथा। संधीषु तिलपिष्टं तु मां
सस्थाने यवपिष्टकं मधु स्याल्लोहितस्थाने त्वचस्थाने मृगत्वचः। स्तनयोर्गुंजके देये नाशापांश
तपत्रकं। कमलं नाभिदेशे स्याद्वृंताकं वृषणाश्रिते। लिंगे च रक्तमूलं तु परिधानं दुकूलकं
गोमूत्रं गोमयं गंधं सर्वौषध्यादि सर्वतः इति। क्रियानुबंधे गारुडेप्येवमुक्त्वान्यदपि। घृतं नाभ्या
मदेयं स्यात्कौपीने च त्रपु स्मृतं। मौक्तिकं स्तनयोर्मूर्ध्नि कुंकुमेन विलेपनं। सिंदूरं नेत्रकोणेषु तां
बूलाद्युपहारकैः। सर्वौषधियुतं कृत्वा पूजां चैव यथोदितां। इदं निरग्नेरपि॥ तत्रैव वृद्धमनुः
प्रोषितस्य तथा कालो गतश्चेद्द्वादशाब्दिकः। प्राप्ते त्रयोदशे वर्षे प्रेतकर्माणि कारयेत्। बृहस्प
तिः॥ यस्य न श्रूयते वार्ता यावद्द्वादशवत्सरान्। कुशपुत्रकदाहेन तस्य स्यादवधारणा॥ भ
विष्ये॥ पितरि प्रोषिते यस्य न वार्त्ता नैव चागमः। ऊर्ध्वं पंचदशाद्वर्षात्कृत्वा तत्प्रतिरूपकं। कु
र्यात्तस्य तु संस्कारं यथोक्तविधिना ततः। तदादीन्येव सर्वाणि प्रेतकार्याणि कारयेत्। द्वादश
वत्प्रतीक्षा पितृभिन्नविषये इति मदनरत्ने उक्तं। गल्लकारिकायां तु॥ तस्य पूर्ववयस्कस्य विंशत्य
ब्दे ततः क्रिया॥ ऊर्ध्वं पंचदशाब्दात्तु मध्यमे वयसि स्मृता। द्वादशाद्वत्सरादूर्ध्वमुत्तरे वयसि स्मृ
ता। चांद्रायणत्रयं कृत्वा त्रिंशत्कृच्छ्राणि वा सुतः। कुशैः प्रतिकृतिं दग्ध्वा कार्या शौचादिका
क्रिया इत्युक्तं पराशरः। देशांतरगतो नष्टस्तिथिर्न ज्ञायते यदि कृष्णाष्टमी ह्यमावास्या कृष्णा
चैकादशी तथा। उदकं पिंडदानं च तत्र श्राद्धं च कारयेत्॥ इदं मासज्ञाने॥ तत्राहिताग्नेः पूर्ण
शौचं॥ अनाहिताग्नेस्तु त्रिरात्रं। अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना स्वयं। तदलाभे प
लाशानां वृन्तैः कार्यः पुमानपि। वेष्टितव्यस्तथा पत्नात्कृष्णसारस्य चर्मणा। ऊर्णासूत्रेण
बध्वा तु प्रलेप्तव्यो यवैस्तथा। सुपिष्टैर्जलसंमिश्रैर्दग्धव्यश्च तथाग्निना। असौ स्वर्गाय लोका
य स्वाहेत्युक्त्वा स बांधवैः। एवं पर्णशवं दग्ध्वा त्रिरात्रमशुचिर्भवेदिति ब्राह्मोक्तेः। इदं त्रिरात्रं
न दशाहमध्ये दाहे तत्र शेषितेकालशधेस्यादित्युक्तेः। किंतु तदूर्ध्वं। तत्र पत्नीपुत्रयोः पूर्वमग
हीताशौचयोर्दशाहाद्येव। गृहीताशौचयोस्तु त्रिरात्रं। पत्नीमृतौ भर्तुश्चैवं। सपत्न्योश्चैव
मिति स्मृत्यर्थसारे। अन्यसपिंडानां तु सर्वत्र पर्णशरदाहे त्रिरात्रं॥ तदाहांगिराः॥ देशांतरमृ
ते श्रुत्वा नाशौचं चेत्कथंचन। कालात्ययेपि कुर्वीत दाहकाले दिनत्रयमिति स्मृत्यर्थसारे तु॥
गृहीताशौचानां स्नानमात्रमुक्तं। वृद्धपराशरेपि॥ ॥अथातीतसंस्कारः
सर्वेदं तद्देशाहं स्यात्तत्रैव सर्वं समापयेदूर्ध्वमाहिताग्नेर्दाहात्सर्वमाशौचं कुर्यात्क्रमेव यथा
कालमन्येषु पत्नीपुत्रयोः पूर्वमगृहीताशौचयोः कर्मांगं त्रिरात्रमिति॥ षडशीतावप्येवं। वि
श्वादर्शे तु। प्रतिकृतिदहने त्वप्रिदेशात्त्रिरात्रमित्युक्तं। द्वादशवर्षादिप्रतीक्ष्योत्तरं दाहे तु प

ऋत्वादीनां सर्वेषां त्रिरात्रमेवेति कल्पतरुदिवोदासादयः॥ ॥अथ प्रेतसंस्कारे कालः॥
हेमाद्रौ गार्ग्यः॥ प्रत्यक्षशवसंस्कारे दिनं नैव विशोधयेत्। अशौचमध्ये संस्कारे दिनं शोध्यं नृसं
भवे। आशौचविनिवृत्तौ चेत्पुनः संस्क्रियते मृतः। संशोध्यैव दिनं ग्राह्यमूर्ध्वं संवत्सराद्यदि। प्रेतका
र्याणि कुर्वीत श्रेष्ठं नक्षत्रात्तरायणम्। कृष्णपक्षश्च नन्दा अपि वर्ज्यमेतत्तु दिनत्रयं। वाराहे॥ चतुर्थाष्टमगे
चंद्रे द्वादशे च विवर्जयेत्। प्रेतकृत्यं व्यतीपाते वैधृतौ परिघे तथा। करणे विष्टिसंज्ञे च शनैश्चर
दिने तथा। त्रयोदश्यां विशेषेण जन्मताराऽत्रये तथा। जन्मदशमैकोनविंशति॥ जन्मताराऽत्र
ये॥ भारते॥ नक्षत्रे तु न कुर्वीत यस्मिन् जातो भवेन्नरः। न प्रौष्ठपदयोः कार्यं तथाग्नेये च भार
त॥ दारुणेषु च सर्वेषु प्रत्यरे च विवर्जयेत्। कश्यपः। भरण्यार्द्रामघाश्लेषामूलं त्रिचरणानि च
येन कृत्येति दुष्टानि धनिष्ठार्धं च पंचकं फाल्गुनीद्वितयं रोहिण्यनुराधापुनर्वसू। आषाढे द्वि
शाखा च भानि द्विचरणानि च। एतानि किंचिद्दुष्टानि संभवे सति वर्जयेत्॥ ज्योतिर्नारदः॥ च
तुर्दशीं तिथिं नंदां भद्रां शुक्रारवासरौ सितेज्ययोरस्तमयं चैव द्विभं विषमांघ्रिभं॥ शुक्लपक्षं
चैत्रपौषपुनर्दहनमुत्तमं। वसूत्तरार्धतः पंचनक्षत्रेषु त्रिजन्मसु। पौष्णब्राह्मेशपोश्चैव दहनात्
कुलनाशनं॥ अस्यापवादमाह। तत्रैव वैजवापः॥ प्रेतस्य साक्षाद्दग्धस्य शावान्तेकादशेऽह
नि। नक्षत्रतिथिवारादि शोधनीयं न किंचन॥ युगमन्वादिसंक्रांतिदर्शेष्वेतत्क्रिया यदि दै
वादापतिता तत्र नक्षत्रादि न शोधयेत्॥ विश्वप्रकाशेऽपि॥ गुरुभार्गवयोर्मौढ्ये पौषमासे म
लिम्लुचे नातीतः पितृमेधः स्यात्कन्यां गोदावरीं विना॥ दानमपि तत्रैवोक्तं॥ भद्रायां भूमिदा
नं स्यात्त्रिपादर्क्षे हिरण्यदः। चोरेषु नक्षत्रेषु गां तु वासोदानं विधीयते। धनिष्ठापंचके प्रेते पंच
रत्नानि दापयेत्। एकाशीतिपलं कांस्यं तदर्धं वा तदर्धकम्॥ नवषट्त्रिपलं वापि दद्याद्वि
भवशक्तितः स्थलेऽप्रसंगेन॥ हेमाद्रौ वृद्धमनुः। अमृतं मृतमाकर्ण्य कृतं यस्यौर्ध्वदेहिकं
प्रायश्चित्तमसौ स्नात्वा कृत्वाग्नीन्नादधीत च। जीवन्यदि स आगच्छेत्तदा घृतकुंभे निमज्ज्य तं। उ
द्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत्॥ द्वादशाहं व्रतचर्या त्रिरात्रमथवाऽस्य तु। स्नात्वोद्व
हेत्तां भार्यामन्यां वा तदभावतः। अग्नीनाधाय विधिवद्व्रात्यस्तोमेन वा यजेत्। अथैन्द्राग्नेन प
शुना गिरिं गत्वा च तत्र तु। इष्टिमायुष्मतीं कुर्यादीप्सितांश्च क्रतूंस्ततः। अनाहिताग्नेस्तु चरुः
मृतवार्तामात्रश्रवणेऽस्याप्यवादः। सुरभयस्त्वयस्मिन् जीवेन्मृत शब्द इति। यस्य तु जीवत
एव मृतिवार्तां श्रुत्वा स्त्रिया सहगमनं कृतं तदा तद्दैधमेव। भर्तृमरणज्ञानस्यैव निमित्तत्वा
त्समारोपस्य गौरवेणायुक्तत्वाच्चेति केचित्। तन्न॥ मरणज्ञानस्य निमित्तत्वे अतीतानाग
तयोरपि तथात्वापत्तेः। भर्तुर्वैधदाहाभावेन तस्याः सहगमनाभावाच्च। तस्माद्दशौचव
त्। ज्ञानमरणस्यैव निमित्तत्वं। न चात्र तदस्ति। परं काम्यमरणमस्तु। अत आत्महनन
दोषोऽस्तीति मातापितृपादाः। तथा सर्पसंस्कारं कृत्वा त्रिरात्रमाशौचं। तद्विधिं चाह शौनकः॥
अथ वक्ष्यामि सर्पस्य संस्कारविधिमुत्तमं। सिनीवाल्यां पौर्णमास्यां पंचम्यां वापि कार
येत्॥ कृतसर्पवधो विप्रः पूर्वजन्मनि वा यदि। वधं प्रख्यापयेत्पापी चरेत्कृच्छ्रांस्त्वनुदे

श विमायलोहदंडंचतन्मूल्यंवापिदापयेत्। याज्ञवल्क्योपि॥ उरगेआयसोदंड इति। मूल्यमाह॥
निष्कत्रयंद्विनिष्कंवानिष्कमेकंकनीयसं अनुमत्यादिकंतेषांनिष्कमर्द्धंतदर्द्धकं। इदंस्वर्णरू
प्ययोः शक्त्याज्ञेयं। संस्कारमाह। भविष्ये। गोधूमतिलपिष्टेनवापुनः। कृत्वासर्पाकृतिंशू
र्पेनिधायप्रार्थयेद्द्विजान्॥ एहिपूर्वंमृतःसर्पअस्मिन्पिष्टेसमाविश। संस्कारार्थमहंभक्त्याप्रा
र्थयामिसमाहितः। वस्त्रोपवीतगंधाद्यैःसंपूज्यवहेद्द्विजान्॥ कुर्यात्संस्कारसंकल्पंप्राणाया
मपुरःसरं। यज्ञोपवीतिनाकार्यंसर्पसंस्कारकर्मसु। लौकिकाग्निंप्रतिष्ठाप्यसमिदाधानमा
चरेत्। ततोग्नेरग्निदिग्भागेभूमिंसंप्रोक्ष्यवारिभिः। चितिंकृत्वाथसंस्तीर्यकुशैराग्नेयकाष्ठ
कैः। पर्युक्ष्याग्निंपरिस्तीर्यपरिषिच्यसमर्चयेत् कृत्वेध्माधानमाधारौचक्षुषीचयथाविधिः
सर्पंगृहीत्वायत्नेनचितिमारोपयेत्सुधीः। स्रुवेणजुहुयादाज्यमग्नौव्याहृतिभिस्त्रिभिः। सर्पा
स्येजुहुयादाज्यंव्याहृत्याचसमग्रया। आज्यशेषंस्रुवेणैवसर्पदेहेनिषेचयेत्। चमसस्थैर्जलैः
सर्पंव्याहृत्याभ्युक्ष्यपाणिना। अग्नेरक्षाणइत्यनयासर्पायाग्निंप्रदापयेत्॥ उपतिष्ठेत्तमा
नेननमोस्तुसर्पमंत्रतः। ज्ञानतोज्ञानतोवापिकृतःसर्पवधोमया॥ पूर्वजन्मनिवासर्पतत्सर्वंक्ष
न्तुमर्हसि। क्षीराज्येनततश्चाग्निंप्रोक्ष्यव्याहृतिभिर्जलैः। नास्थिसंचयनंकुर्यात्स्नात्वाच
स्वगृहंव्रजेत्। ब्रह्मचर्यादिकंकार्यंत्रिरात्राशौचमिष्यते। सचैलंतुचतुर्थेह्निस्नात्वाविप्रान्
समर्चयेत्। सर्पानंतस्तथाशेषःकपिलोनागएवच। कालिकःशंखपालश्चभूधरश्चेतिनाम
भिः गंधपुष्पासनैर्धूपदीपाद्यैरर्चयेद्द्विजान्। घृतपायसभक्ष्यैश्चद्विजानष्टौचभोजयेत्। एवं
कृतेविधानेनसर्पसंस्कारकर्मणि। सर्पहिंसाकृतात्पापान्मुच्यतेनात्रसंशयइति॥

॥इतिसर्पसंस्कारः॥ ॥क्वचित्तुजीवतोप्यंत्यकर्माशौचंकार्यम् यथाभार्यश्चिता
निःक्षोःपतितस्यघटस्फोटे॥ पतितस्योदककार्यंसपिंडैर्बांधवैःसह। निंदितेहनिसायाह्ने
ज्ञात्यृत्विग्गुरुसन्निधौ। दासीघटमपांपूर्णंपर्यस्येत्प्रेतवत्तदा। अहोरात्रमुपासीरन्नाशौचंबा
धवैःसहेतिमनूक्तेः। निंदितेरिक्तादौ। अपरार्केवसिष्ठोपि॥ वेदविप्लावकःशूद्रयाजकोन्तम
वर्णावर्गपतितास्तेषापात्रनिनयनमपात्रसंकरादकार्यं। पात्रमादायसोऽसवर्णपुत्रोवाबंधु
रसहस्रोवागुणहीनःसव्येनपादेनप्रवृत्ताग्रान्दर्भान्लोहितान्वोपस्तीर्यपूर्णंपात्रमस्मै
निनयंतिनेतास्त्वास्यप्रकीर्णकेशाज्ञातयोन्वालभेरन्नपसव्यंकृत्वागृहेषुस्वैरमापद्येरन्नत
ऊर्ध्वंतेनतंधर्मेणपश्यत्त्यधर्माणांधर्मपंनरति। उत्तमवर्णाब्राह्मणादयस्तेषांवर्गःसमूहस्त
स्मात्पतिताब्रह्महादयः अपात्रशंकरः। कुत्सितपात्रसमूहः। तस्मात्पाश्चात्यायामाःस्वैरम
येच्छंधर्मादिकार्यंकुर्युः। असाद्वचनसामर्थ्यात्पात्रनिनयनात् प्राक्पतितज्ञातीनांधर्म
कार्येष्वधिकारोवास्तीत्यपरार्कः॥ तस्यविद्यागुरूनयोनिसंबंधांश्चसन्निपात्यसर्वाण्युदका
दीनिप्रेतकार्याणिकुर्युः। पात्रंचास्यविपर्यस्येयुर्दासःकर्मकरोवावकरादमेध्यं। पात्रमा
नीयदासीघटात् पूरयित्वादक्षिणामुखः। पदाविपर्यस्येदमुमनुदकंकरोमीतिनामग्राहंसर्वे
न्वालभेरन्। प्राचीनावीतिनोमुक्तशिखाविद्यागुरवोयोनिसंबंधाश्चवीक्षेरन्। अपउपस्

त्राणमत्र विशेषस्तु इति गौतमोक्तेश्च। उदकादिरुक्तेर्दाहनिवृत्तिः अत्र कार्या एव एकादशाहश्राद्धं
नि। दास्याहृतो वृषघटो दासीघटः। तेनोदकेनामेध्यं पात्रं पूरयित्वा दासादिर्युक्तं। वामपादेन कु
र्यादिति हरदत्तः अत्र नामग्राहवचनमुदकादिपरं न कार्यं तद्वर्जनार्थं तेन तत्तूष्णीं भवति॥ एत
प्रायश्चित्तानिच्छोः तस्य गुरोर्बांधवानां राज्ञश्च समक्षं दोषानभिख्याप्य तमनुभाष्य पुनः पुन
राचारं लभस्वेति संवदेयुरेव। मय्यनवस्थितमतिः स्यात्ततो ऽस्य पात्रं विपर्यस्येदिति शंखोक्तेः। जीवं
मेवोद्दिश्य पिंडोदकश्राद्धानि नान्यादृश्यानि इत्यपरार्कः। कृतप्रायश्चित्तस्य घटस्फोटे कृतेपि संग्र
हविधिमाह गौतमः॥ यस्तु प्रायश्चित्तेन शुद्ध्येत् तस्मिन् शुद्धे शातकुंभमयं पात्रं पुण्यतमाद्ध्रदात्पूरयित्वा
स्रवंतीभ्यो वा तत एनमुपस्पर्शयेयुः अथास्मै तत्पात्रं दद्युस्तत्संप्रतिगृह्य जपेच्छांता द्यौः शांता पृथिवी
शांतं शिवमंतरिक्षं यो रोचनस्तमिह गृह्णामीत्येतैर्यजुर्भिः पावमानीभिस्तरत्समंदीभिः कूष्मां
डीभिश्चाज्यं जुहुयाद्धिरण्यं दद्याद्गां वा आचार्याय यस्य तु प्राणांतिकं प्रायश्चित्तं स मृतः शुध्येत। स
र्वाण्येव तस्मिन्नुदकादीनि प्रेतकर्माणि कुर्युरेतदेव शांत्युदकं सर्वेषूपपातकेष्विति। घटस्फो
टोत्तरं प्राणांतिकप्रायश्चित्ते कृते तु मृत एव शुध्येन्न तत्र संग्रहविधिः। अतस्तेन विनापि प्रेतकर्म
कुर्यादित्यर्थः। उपपातकेष्वपि घटस्फोटे कृते एवं कार्यमित्यर्थः॥ याज्ञवल्क्यः॥ चरितव्रत आ
याते निनयेरन्नवं घटं जुगुप्सेरन्न चाप्येनं संवसेयुश्च सर्वशः॥ कृतघटस्फोटस्यैवायं परिग्रहवि
धिरिति मिताक्षरायामपरार्के च। अन्यथा प्रायश्चित्तमात्रेणैतत्प्रसंगात्। मनुरपि घटस्फोटमुक्त्वा
निवृत्ते तस्मिन्न स्नात्वा संभाषणासहासने इत्युक्त्वा। प्रायश्चित्ते तु चरिते पूर्णकुंभमपां नवं तेनैव सा
र्धं प्रास्येयुः स्नात्वा पुण्ये जलाशये इति तच्चकर्माप्युक्तं॥ अपरार्के वसिष्ठोपि। पतितानां चरित
व्रतानां प्रत्युद्धारोप्युदाहरंति॥ अग्रेभ्युद्धरतां गच्छेत् क्रीडन्निव हसन्निव। पश्चात्पातयतां
गच्छेच्छोचन्निव रुदन्निवेत्याचार्यमातृपितृहंतारस्तत्प्रसादादपगतपापा एषां तेषां सत्पासन्निः
पूर्णाहुत्यामवृत्तो हो काञ्चनपात्रं माहेयं वाद्भिः पूरयित्वा पोहिष्ठीयाभिरेनमद्भिरभिषिंचेयुः सर्वए
वाभिषिक्तस्य प्रत्युद्धारः पुत्रजन्मना व्याख्यात इति। प्रत्युद्धारः परिग्रहः। तत्रोद्धरतां हसन्निवाग्रे
सरः स्यात्। पातयतां घटस्फोटं कुर्वतां शोचन्निव पश्चाद्गच्छेत्॥ मात्रापित्रादिहंतॄणां परिग्रहो
न कार्यः। तत्प्रसादे सति चीर्णव्रतानां कार्यः॥ अरज्ञे निर्धारः॥ पुत्रजन्मनेत्यभिषेकोत्तरं। जातक
र्मादयः संस्काराः पुत्रजन्मवत्कार्या इत्यपरार्कमाधवौ॥ अत एव विज्ञानेश्वरः॥ घटेऽपवर्जि
ते ज्ञातिमध्यस्थो यवसं गवां प्रदद्यात्प्रथमं गोभिः संस्कृतस्य हि सन्निधेत्य त्वं गवां भक्षणाभा
वे पुनर्व्रतं चरेदित्येतन्न कृतेस्य चरितव्रतविधौ विशेषायमिति वदन् घटस्फोटोत्तरं परिग्रहवि
धिपुनः संस्कारो भवतीति सिद्धं॥ तथा जीवच्छ्राद्धं कृते हेमाद्रौ बोधायनः॥ तत्राशौचं दशाहं स्या
दिप्सलं ततस्ततः। एवं सापवादे आशौचे उक्ते प्रतिशाखं भिन्ने प्येतत्प्रकरणे साधारणं किंचिदुच्यते
तत्राधिकारिणः प्रागुक्ताः। सर्वाभावे धर्मपुत्रो वा कार्यः। अपुत्रेण सुतः कार्यो यादृक् तादृक् प्रय
त्नतः। पिंडोदकक्रियाहेतोर्नामसंकीर्तनाय वै इति मात्स्योक्तेः चनात्। गृह्यपरिशिष्टे कर्तृदेशविध
येविशेषो मैत्रायणीयगृह्यपरिशिष्टे स्वगृहे विधेः। उत्पित्रा या माता रेमतः। केचापि तन्त्र चारथ

मग्निपिंडोदकादिकं पुनः संचयनात्प्राक्चेत्कृतं तदूर्ध्वं तस्याचरेत्। स्वगृहे तत्र वा सर्वं प्रेतकार्यं सपिंड
नं॥ तथा॥ भयस्थानेऽथवा मार्गे मृतस्तत्र च संस्कृतः। न तिष्ठति जनः पिंडं तत्र तत्र च वर्तयेत्। मंत्रेण दा
होऽस्थिसंचयनं च संस्कारस्तस्मिन्कृते तत्र च। भयादिनास्यानुमशक्तौ यत्र यत्र प्रेतकार्यं कृतं चे
त्तत्र तत्रैव पिंडोदकदानादि सपिंडनांतं समापयेदिति श्राद्धसंकल्पः। तदेवं परिशिष्टयोर्विरोधे यथा
चारमापद्नापदादिभेदेन व्यवस्था ज्ञेया। केचित्तस्यापवादत्वमाहुः। असगोत्रः सगोत्रो वा यदि
स्त्री यदि वा पुमान्। प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत्। दद्यात्पिंडमिति शेषः॥ भविष्ये॥ प
त्राधेदीयते पिंडस्तेन सर्वं समापयेत्॥ ब्राह्मेपि॥ प्रथमेऽहनि यो दद्यात्प्रेतायान्नं समाहितः। अन्नं न
वसु चान्येषु स एव प्रददात्यपि॥ विज्ञानेश्वरादयस्तु॥ केचित्तु अग्निं दद्यादिति व्याचक्षते। सगोत्रो
वासगोत्रो वा योऽग्निं दद्यात्सखे नरः। सोऽपि कुर्यान्नवश्राद्धं शुध्येत्तु दशमेऽहनीति। दिवोदासीयव
चनाच्च। तत्रैव॥ दृष्ट्वा स्थानस्थमासन्नमर्धोन्मीलितलोचनं। भूमिस्थं पितरं पुत्रो यद्दिद्रांतं प्र
दापयेत्। तद्धि शिष्टं गयाश्राद्धादश्वमेधशतादपि॥ तानि यथा॥ मोक्षदे हि हृषीकेश मोक्षदे
हि जनार्दन मोक्षधेनुप्रदानेन मुकुंद प्रीयतां मम इति मोक्षधेनुमंत्रः। ऐहिकामुष्मिकं यच्च सप्तज
न्मार्जितं ऋणम् तत्सर्वं शुद्धिमायातु गामेतां ददतो मम इति। ऋणधेनोः॥ आजन्मोपार्जितं पा
पं मनोवाक्कायकर्मभिः। तत्सर्वं शुद्धिमायातु गोप्रदानेन केशव इति पापधेनोः॥ भारते॥ शुक्ल
पक्षे दिवा भूमौ गंगायां चोत्तरायणे। धन्यास्तात मरिष्यंति हृदयस्थे जनार्दने। हेमाद्रौ वाराहे॥
व्यतीपातेऽथ संक्रांतिस्तथैव ग्रहणे रवेः। पुण्यकालास्तदा सर्वे यदा मृत्युरुपस्थितः॥ व्यासः॥
आसन्नमृत्युना देया गौः सवत्सा तु पूर्ववत्। तदभावे तु गौरेव नरकोत्तारणाय वै। तदा यदि न श
क्नोति दातुं वैतरणीं तु गां। शक्तोऽन्यो रुक्तदा दत्त्वा दद्याच्छ्रेयो मृतस्य तु। मदनरत्ने जातूकर्ण्यः॥
उत्क्रांत्यादीनि दानानि दश दद्यान्मृतस्य तु। गोभूतिलहिरण्याज्यवासोधान्यगुडानि च। रू
प्यं लवणमित्याहुर्दश दानान्यनुक्रमात्। एतानि दश दानानि नरेणां मृत्युजन्मनोः कुर्या
दभ्युदयार्थं तु प्रेतेऽपि हि परत्र वै॥ ब्राह्मे॥ ताम्रपात्रं तिलैः पूर्णं प्रस्थमात्रं द्विजातये। सहिरण्यं च
यो दद्यात्कृष्टा वित्तानुसारतः। सर्वपापविशुद्धात्मा लभते गतिमुत्तमां। उत्क्रांतिवैतरण्यौ च
दश दानानि चैव हि। प्रेते पितृत्वात्प्रेतं शवधर्मेणादहयेत्। तत्रैव परिशिष्टे। म्रियमाणस्य क
र्णे तु पुण्यमंत्रान्जपेत्ततः। क्रियानिबंधे गारुडे त्वष्टौ दानान्युक्तानि। तुलसीसन्निधौ कृत्वा शाल
ग्रामशिलां तथा तिललोहं हिरण्यं च कार्पासं लवणं तथा॥ सप्तधान्यं क्षितिर्गावो एकैकं पा
वनं स्मृतमिति। दशदानवैतरणीधेनुत्क्रांतिधेनुदानादि मदनरत्नेऽपि हेमाद्रौ ज्ञेयं। कर्त्रा
न्तकर्माधिकारार्थं त्रीन्कृच्छ्रान्कुर्यादिति तत्रैवोक्तं। अत्र देवयाज्ञिकेन मुमूर्षोर्मधुपर्कदा
नमुक्तं। तदुक्तं वाराहे। दृष्ट्वा तु विह्वलं सेनं यममार्गानुसारिणं। प्रयाणकाले तु नरं मंत्रेण वि
धिपूर्वकं॥ मधुपर्कं त्वरन्गृह्यस्थं मंत्रमुदाहरेत्। गृहाण चेमं मधुपर्कमाद्यं संसारनाशनक
रं त्वमृतेन तुल्यं। नारायणेन रचितं भगवत्प्रियाणां दाहेऽव शांतिकरणं सुरलोकपूज्यं। अनेनै
व तु मंत्रेण दद्याच्च मधुपर्ककं। नरस्य मृत्युकाले तु परलोकसुखावहं॥ ॥अथ दुर्मरणे रि

दासीये॥ चांडालादिमृतेविप्रेत्वनग्निकेमृतेपिवा कृच्छ्रानिकृच्छ्रंचांद्रैस्तुशुद्धिस्तत्रप्रकीर्तिता
वेजानीयेजावालिः॥ शूद्रेणदग्धोयोविप्रोनलभेच्छाश्वतींगतिं। प्रायश्चित्तंप्रकुर्वीतब्राह्मणः
पशुद्धये। चांद्रायणंपराकंचप्राजापत्यंविशोधनं रत्नकारिकायां॥ उदक्यासूतिकावापिय
देप्रेतंस्पृशंतिहि तस्यैवविधिरादिष्टोवात्स्येनैवमहात्मना। एषःसूतिकोक्तः। मदनरत्नेसत्यं
रे॥ ऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टेतथैवच। दुस्पर्शस्पर्शनेचैवखड्गादिमरणेपिच। श्वा
नक्वादसंस्पर्शेकृमिकीटाद्यवेपिवा। एतद्दोषानुसारेणप्रायश्चित्तंसमाचरेत्॥ कृच्छ्रांस्त्रिप
पंचदशांश्चाब्दत्रयमथापिवा। शुध्येत्तदानींसंपाद्यच्छ्वधर्मेणदाहयेत्॥ रत्नकारिकायां
विद्वापांमरणेचैवत्रीन्स्त्रीनकृच्छ्रान्प्रकल्पयेत्। सप्तात्यजेनसुसंस्पृष्टोमृतोदेवानकथंचन॥
एकत्रिंशताकृच्छ्रैःशुद्धिरुक्तामनीषिभिः। कुणपत्वंदग्धेनुचितास्पर्शान्सजादिभिः। तत्स्प
र्शनेदूषणंचत्रिभिःकृच्छ्रैर्विशुध्यति धर्मप्रदीपेतु॥ चांडालसूतिकोदक्यास्पृष्टेप्रेतेतथैवच
तत्पापविशुद्ध्यर्थंकृच्छ्रान्पंचदशाचरेत्इत्युक्तं॥ मनुः॥ असवर्णात्वाहुतिःसास्यान्नपू
संपर्कदूषिता॥ अत्रापिकृच्छ्रत्रयं। अस्पर्शस्पर्शनेचैवमुक्तेः॥ तत्रैवकर्मप्रदीपे। रात्रौवाग
वेणेवाग्निसंस्थेद्विजातयः। दाहंकृत्वास्थ्यन्यायहोपिंडोनिर्वपेत्सुतः॥ रजस्वलागर्भिण्या
दीमृतौतुवस्त्राद्यः निर्णयामृतेमदनपारिजातेचयमः। संध्यायांवातथारात्रौदाहःपार्थिव
योमेच नवश्राद्धंचनोकुर्यान्कृतंनिष्फलतांव्रजेत्। एतद्दिनमृतस्य॥ दिनमृतस्यानस्यादि
नारात्रिदाहनिषेधार्थमिति। अन्येपिपठंतीमश्लाः रात्रिनिषेधार्थं। पत्नुस्कांदे। यदिरात्रौदहे
त्तस्यसमाप्तिदेहनस्यतु। परेहनुदिनेसूर्यंकार्यातस्योदकक्रिया। दग्धस्यतुनदेकार्यारात्रौ
जातूदकक्रियेति। तन्निर्मूलं॥ रात्रिमृतस्यतुतत्रैवसंग्रहे॥ रात्रौदग्ध्वातुपिंडांश्चकृत्वावपन
वर्जितं वपनंनेष्यतेरात्रौश्वस्तनीवपनक्रियेति॥ वपनंतुप्रागुक्तः॥ तच्चसर्वैःपुत्रैःकार्यं। ग
याभास्करक्षेत्रेमातापित्रोर्गुरोर्मृते। आधानेसोमयागेचवपनंसप्तसुस्मृतमितिमिता
क्षरायांस्मृतेः। मरणाख्यानंगित्वान्नैमित्तिकमिदं। तदेवंसंग्रहवचनेनपरेद्युरुच्यतेती
थैवत्। तेनकस्यचिद्दाहागत्वोक्तिश्चिंत्या। मदनरत्नेगालवः॥ प्रथमेहनिकर्तव्यंपवनंचानु
भाविना। प्रेतस्यकेशश्मश्र्वादिवापयित्वाप्रदाहयेत्। आशौचांतेतुपुनःकार्यं। विधिवला
ते॥ मदनपारिजातेप्येवं। तेनसर्वस्यास्यनिर्मूलत्वोक्तिरेव। स्मृतिरत्नावल्यां॥ चांद्रत्रयंकु
र्वीतकृच्छ्रान्कृत्वादहेत्सुतः॥ मदनरत्नेगिराः। ऊर्ध्वोच्छिष्टाधरोच्छिष्टेयंतरिक्षमृतेपि
च। कृच्छ्रत्रयंप्रकुर्वीतआशौचेमरणेपिच॥ ॥अथसाग्नेर्विशेषः॥ कारिकायां॥
कृष्णपक्षेप्रमीयेतयद्यग्निमानराहुतीः॥ शेषास्तुजुहुयाद्दर्शपर्यंताःपक्षहोमवत्। प्रतिप
त्प्रमानहोमांताइत्यर्थः। यथाहिताग्निरपरपक्षेम्रियेताहुतिभिरेनंपूर्वपक्षंहरेयुरित्याश्वला
यनोक्तेः। तदानीमेवजुहुयात्। प्रातःकालाहुतीरपि। सकृद्गृहीतमंत्रंचभिन्नतंत्रंचहोमयोः
दर्शंचापिप्रकुर्वीतस्थालीपाकंतदेवतु। छंदोगपरिशिष्टे। हुतायांसायमाहुत्यांदुर्बलेचेद्गृ
हीभवेत्॥ प्रातर्होमस्तदैवस्याज्जीवेच्चेत्स्वपुनर्नवा। इदंतुकृष्णपक्षपरं॥ दुर्बलोमुमूर्षुः॥ त्रि

मग्निपिंडोदकादिकंपुनःसंचयनात्प्राक्चेत्कृतंदूर्ध्वंतत्राचरेत्।स्वगृहेतत्रगामध्यंशेनकार्येसपिंड
ने॥ तथा॥ भयस्थानेथवामार्गेमृतस्तत्रचसंस्कृतः नतिष्ठतिजनःपिंडंजनेतत्रचवर्त्तयेत्।मंत्रेणदा
होस्थिसंचयनंचसंस्कारस्तस्मिन्कृतेततश्च।भयादिनास्थानुमशक्तोमध्यपत्नेनकार्यंकृच्छ्रं
ततस्तत्रैवपिंडोदकदानादिसपिंडनांतंसमापयेदितिश्राद्धसंकल्पः। तदेवंपरिशिष्टयोर्विरोधेयथा
चारमापदनापदादिभेदेनव्यवस्थाज्ञेया। केचित्तुसापवादत्वमाहुः। असगोत्रःसगोत्रोवायदि
स्त्रीयदिवापुमान्। प्रथमेहनियोदद्यात्सदशाहंसमापयेत्। दद्यात्पिंडमितिशेषः। भविष्ये॥ प
त्राघेदीयतेपिंडस्तत्सर्वंसमापयेत्॥ ब्राह्मेपि॥ प्रथमेहनियोदद्यात्सोतायान्तसमाहितः। अन्नंन
वसुचान्येषुसएवप्रदद्यादपि॥ विज्ञानेश्वरस्तु॥ केचित्तुअग्निंदद्यादितिव्याचक्षते। सगोत्रो
वासगोत्रोवायोग्निंदद्यात्सखेनरः। सोपिकुर्यान्नवश्राद्धंशुध्येत्तुदशमेहनीति। दिवोदासीयेव
चनाच्च। तत्रैव॥ दृष्ट्वास्थानस्थमासन्नमर्धोन्मीलितलोचनं। भूमिस्थंपितरंपुत्रोयद्धिदानंप्र
दापयेत्। तद्विशिष्टंगयाश्राद्धादश्वमेधशतादपि॥ तानियथा॥ मोक्षदेहिहृषीकेशमोक्षंदे
हिजनार्दन मोक्षधेनुप्रदानेनमुकुंदप्रीयतांममेतिमोक्षधेनुमंत्रः। ऐहिकामुष्मिकंयच्च सप्तज
न्मार्जितंऋणम् तत्सर्वंशुद्धिमायातुगामेतांददतोममेति। ऋणधेनोः॥ आजन्मोपार्जितंपा
पंमनोवाक्कायकर्मभिः। तत्सर्वंशुद्धिमायातुगोप्रदानेनकेशवेति पापधेनौ भारते॥ शुक्ल
पक्षेदिवाभूमौगंगायांचोत्तरायणे। धन्यास्तातमरिष्यंतिहृदयस्थेजनार्दने। हेमाद्रौवाराहे॥
व्यतीपातेथसंक्रांतिस्तथैवग्रहणेरवेः। पुण्यकालास्तदासर्वेयदामृत्युरुपस्थितः॥ व्यासः॥
आसन्नमृत्युनादेयागौःसवत्सानुपूर्ववत् तदभावेतुगौरेवनरकोत्तारणायवै। तदायदिनश
क्नोतिदातुंवैतरणींतुगां। शक्तोन्योरुग्णवद्दत्वाद्याच्छ्रेयोमृतस्यतु। मदनरत्नेजातूकर्ण्यः॥
उत्क्रांत्यादीनिदानानिदशदद्यान्मृतस्यतु। गोभूतिलहिरण्याज्यंवासोधान्यगुडानिच। रू
प्यंलवणमित्याहुर्दशदानान्यनुक्रमात्। एतानिदशदानानितरणांमृत्युजन्मनोः कुर्या
दस्युदयार्थंतुप्रेतेपिहिपरत्रवै॥ ब्राह्मे॥ ताम्रपात्रंतिलैःपूर्णंप्रस्थमात्रंद्विजायतु। सहिरण्यंच
योदद्यात्कृच्छ्रंवावित्तानुसारतः। सर्वपापविशुद्धात्मालभतेगतिमुत्तमां। उत्क्रांतिवैतरण्योश्च
दशदानानिचैवहि। प्रेतेपिकल्पानेप्रेतंशवधर्मेणलंघयेत्। तत्रैवपरिशिष्टे। म्रियमाणस्यक
र्णेतुपुण्यमंत्रान्जपेत्ततः। क्रियानिबंधेगारुडेत्वष्टौदानान्युक्तानि। तुलसीसन्निधौकृत्वाशाल
ग्रामशिलांतथा तिलाल्लोहंहिरण्यंचकार्पासंलवणंतथा॥ सप्तधान्यंक्षितिंगावोएकैकंपा
वनंस्मृतमिति। दशदानवैतरणीधेनुक्रांतानिधेनुदानादिमदनरत्नादौज्ञेयं। कर्त्ता
त्वकर्माधिकारार्थंत्रीन्कृच्छ्रानकुर्यादितितत्रैवोक्तं। अत्रदेवयाज्ञिकेनमुमूर्षोर्मधुपर्कदा
नमुक्तं। तदुक्तंवाराहे। दृष्ट्वातुविह्वलंप्रेतंयममार्गानुसारिणं। प्रयाणकालेतुनरोमंत्रेणवि
धिपूर्वकं॥ मधुपर्कंत्वरन्गृह्यइमंमंत्रमुदाहरेत्। गृहाणचेमंमधुपर्कमाद्यंसंसारनाशनक
रंत्वमृतेनतुल्यं। नारायणेनरचितंभगवत्प्रियाणांसहैवशांतिकरणंसुरलोकपूज्यं। अनेनै
वमंत्रेणदद्याच्चमधुपर्ककं। नरस्यमृत्युकालेतुपरलोकसुखावहं॥ ॥अथदुर्मरणेरि

पत्नीं मनस्विनीं। इज्यैव बहुविधैर्यज्ञैः सह मातृभिरच्युत इत्यादीनि तानि पूर्वाग्निष्वेवाग्निहोत्रादि
पराणि। न त्वपत्नीकस्याधानार्थानि। क्रतुविधीनामाधानाप्रयोजकत्वात्। अपत्नीकस्याधा
नाप्रवृत्तिरिति मानवपरिशिष्टाच्च। सोमो न भवत्येव। अपत्नीकोऽप्यसोमप इति श्रुतेः। यत्तु भार
द्वाजापस्तंबसूत्रं॥ दारकर्मणि यद्यशक्त आत्मार्थमग्न्याधेयमिति। अस्यार्थः॥ पुनर्विवाहा
शक्तौ यदग्न्याधेयं पूर्वं कृतमस्ति तदात्मार्थमेवान पत्न्यै दद्यादिति। ब्राह्मणभाष्यापरकौश
केणमांडारादिनत्वमप्येवम्। त्रिकांडमंडनस्तु पक्षद्वयमाह। अन्येऽप्यपत्नीकस्याधानमाहुस्त
दाशापनविप्रः। वृद्धयाज्ञवल्क्यः॥ आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः। अनाहि
ताग्निरेकेन लौकिकेनापरो जनः॥ मनुः॥ एवंवृत्तां सवर्णां स्त्रीं द्विजातिः पूर्वमारिणीं॥ दा
हयेदग्निहोत्रेण यज्ञपात्रैश्च धर्मवित्। कारिकायाम्॥ पत्नीमपि दहेदेवं भर्तुः पूर्वं मृताय
दि। अनग्निकां दहेदेवं कापालेन हविर्भुजा॥ छंदोगपरिशिष्टे॥ अनयैवावृता नारी दग्ध
व्या व्यवस्थिता। अग्निप्रदानमंत्रोऽस्या न प्रयोज्य इति स्थितिः॥ इदं छंदोगानामेव। तथा।
ग्निनैव दहेद्भार्यां स्वतंत्रां पतितां न चेत्। तदुत्तरेण पात्राणि दाहयेत्पृथगंतिके। इदमपि तेषामे
॥ आशौचप्रकाशे क्रतुः॥ विधुरं विधवां चैव कपालस्याग्निना दहेत्। ब्रह्मचारियतिं चैव द
दुत्तपनाग्निना। तुषाग्निना च दग्धव्याः कन्यका बाल एव च। अग्निवर्णं कपालं तु कृत्वा तत्र वि
निःक्षिपेत्। करीषादि ततो वह्निर्ज्ञातोऽयं सकपालजः। अनुपनीते यद्यपि जातारण्यग्निः कै
श्चिदुक्तस्तथापि तस्य कैश्चिन्निषिद्धत्वात्तैरयमेव ज्ञेयः। स्मृत्यंतरे॥ गृहस्थो ब्रह्मचारी च विधुरो वि
धवाः स्त्रियः। औपासनश्रौतपनस्तुषाग्निश्च कपालजः॥ उत्तपनस्तु॥ दर्भाग्नेरग्निं तु प्रज्वाल्य
तं दर्भैस्तु संयुतः। पुनर्दर्भैर्नीयोऽग्निरेष उत्तपनः स्मृतः॥ यमः॥ यस्यानयति शूद्रोऽग्निं तृणं का
ष्ठहवींषि च। प्रेतत्वं च सदा तस्य स चाधर्मेण लिप्यते॥ देवलः॥ चांडालाग्निरमेध्याग्निः सूतिका
ग्निश्च कर्हिचित्। पतिताग्निश्चिताग्निश्च न शिष्टग्रहणोचिताः॥ पश्चिमोत्तरपूर्वैस्तु यथासं
ख्यं द्विजातयः॥ दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत्। अनुप्रातिलोम्येन क्रमः। पूर्वमुखस्तु
नेतव्यो ब्राह्मणो बांधवैर्गृहात्। उत्तराभिमुखो राजा वैश्यः पश्चान्मुखस्तथा। दक्षिणाभिमु
खः शूद्रो निर्हर्तव्यः स्वबांधवैरित्यादिपुराणादित्यपरार्के॥ तेन त्रिंशच्छ्लोक्युक्तोऽनुलोमक्र
मो हेयः॥ आश्वलायनः॥ ज्येष्ठप्रथमाः कनिष्ठजघन्या गच्छेयुः॥ अथाधानोत्तरं द्वितीय
विवाहे कृते यजमानमरणे श्रौतस्मार्ताग्न्योः संसर्गः॥ बौधायनसूत्रे॥ अथ यद्याहिता
ग्निर्द्वैभार्यो विदेनमाक्रसंयोगात्म्रियेतौपासनं संपरिस्तीर्याज्यं विलाप्य चतुर्गृहीतं गृही
त्वा समिद्वत्यग्नौ जुहोति प्रामितं संकल्पे थामितिमिद्राहुती व्याहृतीश्च हुत्वा पृथेत्तमग्निं
मयं ते योनिरृत्विय इति॥ समिधि समारोप्य गार्हपत्ये समिद्यमभ्यादधाति भवतं नः समनसा
विति गार्हपत्य आज्यं विलाप्य चतुर्गृहीतं गार्हपत्ये जुहोत्यग्नावग्निश्चरति प्रविष्ट इत्यपरं च
तुर्गृहीत्वा चितिः स्रुगिति संग्रहमग्नौ जुहोत्यथ गार्हपत्ये स्रुवाहुतीर्जुहोति ब्राह्मण एकहोते
ति दशभिरथ प्राचीनावीत्यन्वाहार्यवचने जुहोति ये समानाः समनसा जीवा इति द्वाभ्यामथ तत्रैव

[illegible] एकैकस्य दहनेन पृथक्। पुरेणु [illegible] समीपेन पतिर्यदि। प्रेतस्याग्ना [illegible] तक्रिया विच्छिन्नश्रौताग्ने [illegible] नेरणी सन्निधाप्यारणीमंथ [illegible] हितापस्वर्गं लोकमिमंप्रेतं नयन्त्विति मंत्रः॥ अरणीमपावकं तु सौंहाद्दर्शपात्रसंपदा। नष्टां हुत्वा ततः कुर्यात्प्रेतमारयादि तिक्रिया। नष्टेष्वग्निषु यथारण्योर्नाशे स्वामी म्रियेत चेत्। आहरेदरणीं हृद्मनोज्योतिर्वेतान तः यज्ञपार्श्वे॥ यजमाने विताहरे पात्रन्यासे कृते सति। वर्षाद्यभिहते वन्हौ कथं कुर्वंति याज्ञि काः। तदर्द्धं दग्धकाष्ठेन मंथनं तत्र कारयेत्। तदलाभतो न्येन दग्धशेषेण वा पुनः हुत्वा ज्यं लौकिके वन्हौ दग्धशेषं दहेत्तु वा। अत्राग्निषु सत्सु परोक्षे शरीरे शरीरोत्पत्तिः। शरीरे वा सति प्रेताधानेनाग्न्युत्पत्तिः। उभयाभावे तु प्रेताधानेऽनधिकारात् दाहादिसंस्कारलोपः॥ उदकदा नाद्येव कार्यमित्येके शबीकारशतद्यीप्रमुखाः॥ तन्न॥ निषेकाद्याः श्मशानांता यस्यावे मंत्र तः क्रियाइति विरोधात्। क्रियालोपगतायेचेति निषेधात्तदभावे पलाशवृन्तैः कार्यः पुमानपी त्यभावे विधानस्याग्न्यभावेपि साम्यात्॥ तेन मातापितृहुन्यभावेपि स्विष्टकृद्ध्यांतरेण कर्यत्वात् नाताधाने। तद्दाहोपि भवत्येव प्रतिकृतेरग्नीनां च प्रेताधान प्रयोजकत्वात्स्मृतेः॥ पत्न्या अपि एवं॥ दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिरिति याज्ञवल्क्योक्तेः। यत्तु। द्वितीयां चैवयो भार्यां दहेद्वैतानिकाग्निभिः। जीवन्त्यां प्रथमायां तु सुरापानसमं स्मृतमिति। तदाधाने महान् विकृतावियमिति विज्ञानेश्वरः॥ मदनरत्ने ब्राह्मेपि। आहिताग्नेश्च दपत्नी पत्ला दौश्रि यते भुवि। तस्य देहः सपिंडैश्च दग्धव्यस्त्रिभिरग्निभिः। पश्चान्मृतस्य देहस्तु दग्धव्यो लौकि काग्निना। अनाहिताग्नि देहस्तु दाह्यो गृह्याग्निना द्विजैः। त्रिकांडमंडनस्तु विकल्पमाह। जे ष्ठायां विद्यमानायां द्वितीयापेत्नयोषिते। कामं तु निर्मथ्याग्निहोत्रेणानकथं चित्प्रयत्नतः। स्त्री मात्रं न विशेषेण दग्धान्यं वैदिकाग्निभिः। विवाह्यादक्षतेयद्वाधानमेवाग्नि वेदवृद्धिः। अते दतत्त्वं॥ साग्नेः पत्नी मृतौ होमश्चौ पुनर्विवाहेच्छायाः पूर्वाग्निभिर्देहे द्विस्तेकः पक्षः। भार्या पूर्वमारिण्यैर्दत्वाग्नीनंत्य कर्मणि। पुनर्दारक्रियां कुर्यात्पुनराधानमेव चेति मनूक्तेः। दाह यित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिरिति याज्ञवल्क्योक्तेश्च। पुनर्विवाहाशक्तो निर्मथ्यान ग्नौ दग्धा पूर्वाग्निष्वेवाग्निहोत्राद्यादिकार्यमित्यन्यः॥ आहार्येणानाहिताग्निपत्नीं चेत्याश्व लायनोक्तेः॥ भरद्वाजोपि॥ निर्मथ्येन पत्नीमिति॥ पूर्वाग्न्येकदेशेन दहेदिति यज्ञपार्श्वे देव याज्ञिकादयः॥ यानि च॥ तस्मादपत्नीकोप्यग्निहोत्रमाहरेदिति श्रुतिः॥ विष्णुः॥ छंदोगप रिशिष्टे च। मृतायामपि भार्यायां वैदिकाग्निं न हि त्यजेत्। उपाधिनापि तत्कर्म यावज्जीवं समा चरेत्। उपाधिर्हेमकुशपत्न्यादिः। अन्येकुशमयीं पत्नीं कृत्वा तु गृहमेधिनः। अग्निहोत्रमुपा सते यावज्जीवमनुव्रतास्त्यपराके स्मृत्यंतरात्। कामाप्नोपि॥ रामोपि कृत्वा सौवर्णीं सीतां

जुहूंचदक्षिणेहस्तेवामेतूपभृतंन्यसेत्। श्रोत्रेनतुस्रुवंस्थात्पृष्ठेचमुसलंन्यसेत्। उरसिक्षिप्यद
षदंतंडुलाज्यतिलान्मुखे। श्रोत्रेचप्रोक्षणींदद्यादाज्यस्थालींचचक्षुषोः। कर्णनेत्रमुखेघ्राणे
हिरण्यशकलंन्यसेत्। अग्निहोत्रोपकरणमशेषंतत्रनिक्षिपेत्। प्रचेताः॥ स्नानंप्रेतस्यपुत्रा
धैर्वस्त्राद्यैःपूजनंततः। नग्नदेहंदहेन्नैवकिंचिद्देयंपरित्यजेत्॥ यमः॥ प्रेतंदहेच्छुभैर्गंधैःस्ना
पितंस्रग्विभूषितं॥ आश्वलायनसूत्रे संस्थितेनालकारान्कुर्वंतिकेशश्मश्रुलोमनखा
निवापयंतिनलदेनानुलिंपंतिनलदमालांप्रतिमुंचंतीति। माधवीयेब्राह्मे। हरिणोपिनदग्
धोनग्नःकस्यांचिदापदि॥ तथा॥ निःशेषस्तुनदग्धव्यःशेषंकिंचित्त्यजेन्नरः। दाहकालेभि
नाशेत्। मदनरत्नेपद्मपार्श्वे॥ यजमानःमृतेक्वापिचितादौवाप्रवेशितः। वर्षायग्निहतेनोनु
कथंप्रेतविकल्पना। शेषंदग्ध्वाप्रदग्धेतुनिर्मथ्यैवानुकारयेत्॥ क्रियानिबंधे॥ उद्धारण
विच्छिन्नांसिंचेत्कर्त्रीमदक्षिणां। स्कंधासिक्तकुंभेनपादतःपरितश्चितः॥

॥अथपत्नीशरादिदाहेनाग्निनाशेपश्चाद्देहलाभेमदनरत्नेब्राह्मे॥ अदैवयो
र्ग्येपात्रन्यासेकृतेसति। गतेथस्मिन्पुनर्देहोपघूर्ण्यलभतेक्वचित्। तदाहंदग्धकाष्ठेरिना
नेमथ्यतद्देहंयथार्थंदग्धकाष्ठंतुनलभ्यतेनदाहदस्थिखंडंतुनिःसप्तवृंपयहाजले॥ दप
रकरामृतोविशेषमाहआपस्तंबः॥ तथैवभ्रूसहैवपितृमेधोद्विवचनलिंगान्मंत्रान्संधा
नि। पितृमेधोदाहांतकर्म। दाहांतमेवतंत्रत्वमितिबोधायनोक्तेः॥ अस्थिसंचयनमपिए
।उदकपिंडदानादिपृथगेवसहगमनेप्येवं॥ तदाहमदनरत्ने॥ भाष्यार्थसंग्रहकारः॥ ए
कालमृतौभार्याभर्त्तारौचयदिवेहयोः। तंत्रेणदहनंकुर्यात्पिंडश्राद्धंपृथक्पृथक्। एककाले
तौजायापत्नीयदितदापितुः। विभज्याग्निंक्रियांकुर्यादितियत्तदसांप्रतं। दाहांतमेकतंत्रत्व
मित्याश्रिकसंमतं। मृतंपतिमनुव्रज्ययानारीज्वलनंगता। अस्थिसंचयनंतेस्याभर्तुःसं
गेरेवहि। कीकसानांतुसंस्कारेण्यायसिद्धोपिनोमतः एककालमृतेप्येवंकीकसानांवि
ःस्मृतः। नवश्राद्धसपिंडांतंभिन्नकालमृतोयथा। कपर्दिकारिकापि॥ मृतेभर्तरिदाह
कपत्नीम्रियतेयदि। पत्न्यावाभर्तृप्रमीतायांदाहदर्वीक्पतिर्मृतः। तत्रतंत्रेणदाहःस्या
त्तेषुद्विवसूत्तते। कीकसानांतुसंस्कारःपृथगेवतयोर्भवेत्। एकाहमृतयोर्युगपच्चश्राद्ध
कंतयोः॥ मृतंपतिमनुव्रज्यपत्नीचेद्दहनंगता। तत्रापिदाहतंत्रेणपृथगस्थिक्रियाभवे
अस्थिसंचयनंपृथक्विकल्पः॥ सहगमनेसर्वत्रपाकैक्यमाहप्रचेताः॥ एकचितांस
मारूढौदंपतीयदि। तंत्रेणश्रपणंकुर्यात्पृथक्पिंडंसमावपेत्॥ ॥अथोर

ने॥ वसिष्ठः॥ शारीरमग्नौसंयोज्यानवेक्षमाणाअपोभ्युपयंतिसव्योत्तराभ्यांपा
णिभ्यामुदकक्रियांकुर्वंत्ययुग्माः॥ आपस्तंबः॥ मातुश्चयोनिसंबंधेभ्यःपितृश्चासप्तमात्पु
रुषाद्यावत्तांवासंबंधोज्ञायतेतेषांप्रेतेषूदकक्रियेति। गर्भान्परिहाप्याऽपरिवत्सरात्। वर्षान
न्विनेत्यर्थः। याज्ञवल्क्यः॥ सप्तमाद्दशमाद्वापिज्ञातयोभ्युपयंत्यपः। अपनःशोशुचद
नपितृदिङ्मुखाः। सकृत्प्रसिंचंत्युदकंनामगोत्रेणवाग्यताः। सप्तमाद्दशमाद्वादिवसा

स्रुवाहुतिं जुहोत्यग्नये कव्यवाहनाय स्विष्टकृते स्वधा नमः स्वाहेत्यथ यज्ञोपवीती द्वादशगृहीतेन
स्रुवं पूरयित्वा पुरुषसूक्तेनाहवनीये जुहोत्यथ स्रुवाहुतीर्जुहोत्यग्नये विविचये स्वाहाग्नये व्रतप
तयेग्ने पवमानायाग्नये पावकायाग्नये शुचये स्वाहा॥ अग्नये पथिकृते स्वाहा अग्नये तनुप
नपे वैश्वानरायेत्यथ चतुर्गृहीतं जुहोति मनो ज्योतिरित्यत ऊर्ध्वं पैतृकं कर्म प्रतिपद्यते। आहि
ताग्नौ विदेशमृते पथिकृती इष्टिर्मृताग्निहोत्रेण दाहः पात्रयोजनं च कल्पसूत्रादिभ्यः पि
तामहकृतपद्धतौ ज्ञेयमिति। बह्वृचानां त्वेषु परस्य ते। साग्निरग्निवत्त्वं मदनरत्ने छन्दोगपरिशि
ष्टे च। दुर्बलं स्नापयित्वा तु शुद्धचैलाभिसंवृतं। दक्षिणाशिरसं भूमौ बर्हिष्मत्यां निवेशयेत्।
घृतेनाभ्यक्तमाप्लाव्य शुद्धवस्त्रोपवीतिनं। चंदनोक्षितसर्वांगं सुमनोभिर्विभूषयेत्। हिरण्य
शकलान्यस्य क्षिप्त्वा छिद्रेषु सप्तसु। मुखेष्वथापिधायैनं निर्हरेयुः सुतादयः। आमपात्रेऽन्न
मादाय प्रेतमग्निपुरःसरं। एकोनुगच्छेत्तस्यार्धमर्धपथ्युत्सृजेद्भुवि। ऊर्ध्वमादहनं कार्यमा
सीनो दक्षिणामुखः। सव्यं जान्वाच्य शनकैः सतिलं पिंडदानवत्॥ अथ पुत्रादिराप्लुत्य
कुर्याद्दारुचयं महत्। ततोग्निं निपात्यैनं दक्षिणाशिरसं मुखे। आज्यपूर्णां स्रुवं दद्याद्दक्षि
णाग्रां नासिके स्रुवं पादयोरधरां प्राचीमरणीमुरसि न्यसेत्। पार्श्वयोः शूर्पचमसौ सव्यदक्षिण
योः क्रमात्। मुसले तु न्यसेत्पुंजं श्रोण्योरुलूखलं। चात्वाली कमंत्रेण त्वमग्ने ह्ययविधि
अपसव्येन कृत्वेत ध्यायन्नापि तदिङ्मुखः। अथाग्निं सव्यमारभ्य दद्याद्दक्षिणतः शनैः
अस्मात्त्वमधिजातोसि त्वदयं जायतां पुनः। असौ स्वर्गाय लोकाय स्वाहेति परिकीर्तयन्।
तथा॥ एवमेवाहिताग्नेश्च पात्रन्यासादिकं भवेत्। कृष्णाजिनादिकं चात्र विशेषो ह्युपो
दितः। तत्रैव। अनयैव दिशा नारी दग्धव्या या व्यवस्थिता। अग्निप्रदानमंत्रोस्या न प्रयो
ज्य इति स्थितिः। इदं छन्दोगानामेव। पात्रन्यासोक्तेरुत्तानदेहत्त्वं साग्निकपरं। निरग्निस्तु
पुमानधोमुखः स्त्री तूत्तानादाह्याः। सगोत्रजैर्गृहीत्वा तु चितामारोप्यते शवः। अधोमु
खो दक्षिणादिक्चरणस्तु पुमानिति। उत्तानदेहा नारी तु सपिंडैरपि बंधुभिरित्यादिपुरा
णादिति शुद्धितत्त्वहारलतादयः। उत्तरसिरस्त्वं सामगेतरपरं। वाराहे त्वग्निदाने मं
त्रः। कृत्वा तु दुष्कृतं कर्म जानता वाप्यजानता। मृत्युकालवशं प्राप्य नरं पंचत्वमागतं। धर्मा
धर्मसमायुक्तं लोभमोहसमावृतं दहेयं सर्वगात्राणि दिव्यान् लोकान् स गच्छतु। ज्वल
मानं महावह्निं शिरस्थाने प्रदापयेत्। चतुर्वर्णेषु संस्थानमेवं भवति पुत्रके। अत्र क्रिया
निबंधे गारुडे षट्पिंडदानमुक्तं। मृतस्योत्क्रांतिसमये षट्पिंडान्क्रमशो ददेत्। मृतस्था
ने तथा द्वारि चत्वरे तार्क्ष्य कारणात्। विश्रामे काष्ठचयने तथा संचयने च षट्। तथा श्मा
रैद्यानुषट्पिंडादशपिंडा दशाहिकाः। स्थाने चार्धपथे तीते चितायां शवहस्तके। श्म
शानवासिभूतेभ्यः षष्ठं संचयने तथा। ततः त्वं भूतकृद्जगद्योने त्वं लोकपरिपालकः। उ
क्तः संहारकस्तस्मादेनं स्वर्गं मृतं नय। इत्यग्निं दत्त्वा। अस्मात्त्वमिति मंत्रेणेदं त्वेश्वा
ज्याहुतिरुक्ता। आहिताग्नेः पराशरः। प्राण्यां शिश्ने विनिःक्षिप्य अरणीं मुष्कयोरपि॥

गुह्ये चदक्षिणेहस्ते वामेतत्पभृतं न्यसेत्। ओष्ठेनलूखलंदद्यात्पृष्ठे चमुशलंन्यसेत्। उरसिक्षिप्यदृ
षदंतंडुलाज्यतिलान्मुखे। श्रोत्रे चप्रोक्षणींदद्यादाज्यस्थालींचचक्षुषोः। कर्णेनेत्रेमुखेघ्राणे
हिरण्यशकलंन्यसेत्। अग्निहोत्रोपकरणमशेषंतत्रनिक्षिपेत्। प्रचेताः॥ स्नानंप्रेतस्यपुत्रा
द्यैर्वस्त्राद्यैः स्रजनंततः। नग्नदेहंदहेन्नैवकिंचिद्देयंपरित्यजेत्॥ यमः॥ प्रेतंदहेच्छुभैर्गंधैः स्ना
पितंस्रग्विभूषितं॥ आश्वलायनसूत्रे। संस्थितेप्रेतालंकारान् कुर्वंतिकेशश्मश्रुलोमनखा
निवापयंतिनलदेनानुलिंपंतिनलदमालांप्रतिमुंचंतीति। माधवीयेब्राह्मे। दरिद्रोपितरंपु
त्रोनग्नः कस्मांचिदापदि॥ तथा॥ निःशेषस्तुनदग्धव्यः शेषंकिंचित्त्यजेन्नरः। दाहकालेग्नि
नाशेन। मदनरत्नेयज्ञपार्श्वः॥ यजमानः मृतेक्वापिचितादौवाप्रवेशितः। वर्षाद्यभिहतेग्नौतु
कंपप्रेतविकल्पना। शेषंदग्ध्वाप्रदग्धे तु निर्मथ्यैवानुकारयेत्॥ क्रियानिबंधे॥ उदधारम
विच्छिन्नां सिंचेत्कर्त्ताप्रदक्षिणं। स्कंधादासिक्तकुंभेनपादतः परितस्त्रितः॥

॥अथपर्णशरादिदाहेनाग्निनाशेपश्चाद्देहलाभेमदनरत्नेब्राह्मे॥ अदेयस्यै
नरेदग्धेपात्रन्यासेकृतेसति। गतेषण्मासयुक्तेद्वेयद्यस्थ्यलभतेक्वचित्। तदाहृदग्धकाष्ठेन
निर्मथ्यतंदहेत् यथार्थंदग्धकाष्ठंतुनलभ्यतेतदातदस्थिखंडंतुनिःसन्नम्यमहाजले। दंप
त्योरेकदामृतौ विशेषमाहआपस्तंबः॥ तथैवप्रेतसहैवपितृमेधो द्विवचनलिंगान्मंत्रान्संधा
रयंति। पितृमेधोदाहांतकर्म। दाहांतप्रेततंत्रत्वमितिबोधायनोक्तेः॥ अस्थिसंचयनमप्ये
को। उदकपिंडदानादिपृथगेवसहगमनेप्येवं॥ तदाहमदनरत्ने॥ भाष्यार्थसंग्रहकारः॥ ए
ककालमृतौ भार्याभर्त्तारौ यदि चेद्रूपोः। तंत्रेणदहनंकुर्यात्पिंडश्राद्धंपृथक्पृथक्। एककाले
मृतौजायापतीयदितदापितुः। विभज्याग्निंक्रियांकुर्यादितियत्तदसांप्रतं। दाहांतमेकतंत्रत्व
मितिप्रासिकसंमतं। मृतंपतिमनुव्रज्ययानारीज्वलनंगता। अस्थिसंचयनंतस्याभर्तुः सं
स्कारएवहि। कीकसानांतुसंस्कारोन्यायसिद्धोपिनोमतः एककालमृतेप्येवंकीकसानांवि
धिः स्मृतः। नवश्राद्धसपिंडनंभिन्नकालमृतौयथा। कपर्दिकारिकापि॥ मृतेभर्त्तरिस्वदाह
मात्रपत्नी स्त्रियतेयदि। पत्न्याबभाकृप्रमीतायांदाहाद्वीकपतिर्मृतः। तत्रतंत्रेणदाहःस्या
न्नेषुद्वित्वमिष्यते। कीकसानांतुसंस्कारः पृथगेवतयोर्भवेत्। एकाहमृतयोर्युगपन्नवश्राद्धा
दिकंतयोः॥ मृतंपतिमनुव्रज्यपत्नीचेदनलंगता। तत्रापिदाहस्तंत्रेणपृथगस्थिक्रियाभवे
त्। अस्थिसंचयनपृथक्त्वविकल्पः॥ सहगमनेसर्वत्रपाकैक्यमाहप्रचेताः॥ एकचित्यांस
मारूढौमृतौयेनेदंपतीयदि। तंत्रेणश्रपणंकुर्यात्पृथक्पिंडंसमावपेत्॥ ॥अथोद
कदाने॥ वसिष्ठः॥ शरीरमग्निसंयोज्यानवेक्षमाणाअपोभ्युपयंतिसव्येतराभ्यांपा
णिभ्यामुदकक्रियांकुर्वंत्ययुग्माः॥ आपस्तंबः॥ मातुश्चयोनिसंबंधेभ्यः पितुश्चासप्तमात्पु
रुषाद्यावत्संवासंबंधोज्ञायतेतेषांप्रेतेषूदकक्रियेति। गर्भान्यरिहाप्यापरिवत्सरात्। वर्षान्न
वाल्लान्निमेत्यर्थः। याज्ञवल्क्यः॥ सप्तमाद्दशमाद्वापिज्ञातयोभ्युपयंत्यपः। अपनःशोशुचद
घमनेनपितृदिङ्मुखाः। सकृत्प्रसिंचंत्युदकंनामगोत्रेणवाग्यताः। सप्तमाद्दशमाद्वादिवसा

दाद्यमिति विज्ञानेश्वरः॥ कात्यायनस्तु। सप्तमाद्द्वादशमात्पुरुषाद्दित्याहुः॥ सप्तमात्पुरुषाद्दशमाद्वा
समानग्रामवासिया वत्संबंधमनुस्मरेयुरिति पारस्करोक्तेः॥ मंत्रः स्नानांगमेवेति हेमाद्रिः॥ प्रचे
ताः॥ प्रेतस्पर्शवांधवा यथावदुदकमवतीर्य नो पर्षेयुरुदकांते प्रसिंचेयुरपसव्ययज्ञोपवी
तवाससो दक्षिणामुखा ब्राह्मणस्योदङ्मुखाः प्राङ्मुखाश्च राजन्यवैश्ययोः॥ सएव॥ नदी
कूलं ततो गत्वेत्युक्त्वा॥ सचैलं तु ततः स्नात्वा शुचिः प्रयतमानसः पाषाणं ततश्चादाय विप्रे
दद्याद्दशांजलीन्। द्वादश क्षत्रियो दद्यात् वैश्यः पंचदश स्मृताः॥ त्रिंशत् शूद्राय दातव्यास्ततः
संप्रविशेद्गृहं। ततः स्नानं पुनः कार्यं गृहशौचं च कारयेत्॥ अत्र स्नाने विशेषः। शुद्धितत्त्वे आ
दिपुराणे॥ आदौ वस्त्रं च प्रक्षाल्य तेनैवाच्छादितो नरः। कर्तव्यं तैः सचैलं तु स्नानं सर्वमला
पहं। पूर्वं परिहितं वस्त्रं प्रक्षाल्य पुनः परिधाय स्नायादित्यर्थः। अप्सु इति वा मदनरत्नानामिक
या जलालोडनं। अवतरणोत्तरं पुरःसरत्वोक्तेर्वा याज्ञवल्क्यकृत्ये निबोधायनीयं। जलाद
त्थानपरमिति॥ हारलतादयः॥ आश्वलायनः। सव्यावृतो व्रजंत्यनीक्षमाणा यत्रोदकमव
रुवंति तत्राप्य सकृदुन्मज्ज्यैकांजलिमुत्सृज्य तस्य गोत्रं नाम गृहीत्वेति। प्रचेतसा त्वहमंजलि
त्रयमप्युक्तं। त्रिः प्रत्येकं कुर्युः प्रेत स्तृप्यत्विति तथा। दिने दिने जलीन् पूर्णान् प्रदद्यात् प्रेतकार
णात्। तावद्वृद्धिश्च कर्तव्या यावत्पिंडः समाप्यते। एकवृद्धिस्त्रिकवृद्धिर्वेत्यर्थः। मदनरत्ने भर
द्वाजगृह्ये तु द्विकवृद्धिरप्युक्ता। आशौचांते प्रदद्यात् प्रेतपुत्रस्तिलांजलीन्। प्रथमेन्हि सकृद्दद्या
त्पिंडपत्रावृतादिवा। त्रीश्च दद्याद्द्वितीयेन्हि तृतीये पंचमेव च। चतुर्थे सप्त संख्यास्तु पंचमे नव
चोत्सृजेत्। षष्ठेन्हि चैकादशकाः सप्तमे तु त्रयोदश। अष्टमे पंचदशका नवमे दश सप्त च। एको
नविंशतिं चाथ शतांजलिमतः स्मृतं केचिद्दशांजलीनाहुः केचिदाहुः शतांजलीन्। पंचपंचा
शतं चान्ये स्वशाखोक्तव्यवस्थया। अपरार्के गौतमः। प्रथमतृतीयसप्तमनवमेषूदकक्रियेति॥
छंदोगपरिशिष्टे। अथानवेक्षमेयाप्पं सर्वे चैव शवस्पृशः। गोत्रनामपदांते तु तर्पयामीत्यनंत
रं। दक्षिणाग्रान्कुशान्कृत्वा सतिलं तु पृथक्पृथक्। विष्णुपुराणे॥ सपिंडीकरणाद्यावदृजुदर्भैः
पितृक्रिया॥ सपिंडीकरणादूर्ध्वं द्विगुणैर्विधिवद्भवेत्॥ रामायणे॥ इदं पुरुषशार्दूल विमलं
दिव्यमक्षयं पितृलोकेषु पानीयमद्दत्तमुपतिष्ठतां॥ दानवाक्ये विकल्पः॥ याज्ञवल्क्यः॥ का
मोदकं सखिप्रत्तास्वस्रीयश्वशुरत्विजां। कामः इच्छा। येन तत्रीच्छा यो देयमन्यथा नेत्यर्थः। शं
खपारस्करौ॥ आचार्ये चैव मातामहयोश्च स्त्रीणां चाप्रत्तानां कुर्वीरन्नाश्चतेषामिति। द्विवच
नात्मातामहयोश्च अपि। शंखलिखितौ॥ उदकक्रियाकामे श्वशुरमातुलयोः शिष्ये सह
ध्यायिनि राजनि चेति। वृद्धमनुः॥ क्लीवाद्या नोदकं कुर्युः स्तेना व्रात्या विधर्मिणः। गर्भभर्तृद्रुह
श्चैव सुरापश्चैव योषितः॥ याज्ञवल्क्यः। नब्रह्मचारिणः कुर्युरुदकं पतितास्तथा॥ षडशीतौ,
स्त्रीयाचारादपि भ्रष्टाः पतिताश्चैव दूषिताः। न कुर्युरुदकं नैवैतेभ्योप्यन्येन चैव हि॥ मदनरत्ने ह
[illegible] तीतानतःमनः। प्रत्तानां नैव कन्यानां निवृत्ते सलिलक्रिया। अपरा
[illegible] ॥ अथ यान्ति ततः कृतघटस्फोटन
स्नानिरुग्रहविधौ कृतेत्याशौचादकादकुर्यादेवमाशौचप्रकाशः॥ ॥अथाशौचे नियमाः

याज्ञवल्क्यः॥ इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः विदश्य निंबपत्राणि नियता द्वारि वेश्मनः
आचम्याग्न्यादि सलिलं गोमयं गौरसर्षपान्। प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः॥ प्र-
वेशनादिकं कर्म प्रेतसंस्पर्शिनामपि। क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक्क्षितौ॥ इदं चाद्ये-
न्हि। वसिष्ठः॥ अधःप्रस्तरे त्र्यहमनश्नंत आसीरन्। क्रीतोत्पन्नेन वा वर्तेरन्॥ शुद्धितत्त्वे जवा-
पः। शमीमालभन्ते शमी पापं शमयत्विति। अश्मानमस्येव स्थिरो भूयासमिति अग्निमग्निर्नः
शर्म यच्छत्विति। ज्योनित्यमिराणामजमुपस्पृशनः क्रीत्वा लब्ध्वा चान्यगेहादेकान्नमलवण-
मेकरात्रं दिवा भुंजीरन् स्त्रिरात्रं च कर्मोपरमणम्। क्रीताद्यशनमुपवासाशक्तस्य। आश्वलाय-
नस्तु॥ नैतस्यां रात्र्यामन्नं पचेत क्रीतेनोत्पन्नेन वा वर्तेरंस्त्रिरात्रमक्षारलवणाशिनः स्युर्द्वादश-
रात्रं वेत्याह। अशक्तौ रत्नाकरे। आपस्तंबः। भार्या परमगुरुसंस्थायां चाकालभोजनानि कुर्वी-
रन्। यदा मृतिः परदिने तावत्कालमित्यर्थः॥ बृहस्पतिः॥ अधःशय्यासनादीनामलिना भो-
गवर्जिताः। अक्षारलवणान्नाः स्युर्लब्धक्रीताशनास्तथा। भोगोऽभ्यंगतांबूलादिः। क्षारः प-
रिभाषायामुक्ताः॥ यत्तु मार्कंडेयपुराणे॥ तैलाभ्यंगो बांधवानामंगसंवाहनं च यत्। तेन चा-
प्यायते जंतुर्यच्चाश्नंति सबांधवाः। प्रथमेऽह्नि तृतीये च सप्तमे नवमे तथा वस्त्रत्यागं बहिः स्ना-
नं कृत्वा दद्यात्तिलोदकमिति॥ तद्दशदिनपरं। आशौचांते तिलकल्कैः स्नात्वा गृहं प्रविशेयुरिति
विष्णूक्तेः। विष्णुपुराणे त्वस्थिसंचयोर्ध्वं भोगोप्युक्तः। शय्याशनोपभोगस्तु सपिंडानामपीष्य-
ते अस्थिसंचयनादूर्ध्वं संयोगस्तु न योषितां॥ भारते॥ तिलान्ददत पानीयं दीपं ददत जाग्र-
त ज्ञातिभिः सह भोक्तव्यमेतत्प्रेतेषु दुर्लभं॥ मनुः॥ मांसाशनं च नाश्नीयुः शयीरंश्च पृथक्-
क्षितौ। देवयानीये कारिकायां॥ लवणं क्षीरमाषान्नाश्य मांसानि पायसं। वर्जयेदाहृतान्ने-
षु बालवृद्धातुरैर्विना। उपवासो गुरौ प्रेते पत्न्याः पुत्रस्य वा भवेत्। मरीचिः॥ प्रथमेऽह्नि तृती-
येऽह्नि चतुर्थे सप्तमे तथा। ज्ञातिभिः सह भोक्तव्यमेतत्प्रेतेषु दुर्लभं। भोजनं च दिवैव॥ दिवा
चैव तु भोक्तव्यममांसं मनुजर्षभ इति। विष्णुपुराणात्॥ क्रीत्वा लब्ध्वा वा दिवान्नमश्नीयुरि-
ति पारस्करोक्तेश्च॥ मदनरत्ने हारीतः॥ पाषाणमृण्मयेष्वपर्णपुटकेषु वाश्नीरन्। देवजानीये-
प्यात्ले। शुद्धितत्त्वे आदिपुराणे॥ आशौचमध्ये यत्नेन भोजयेच्च स्वगोत्रजान्। अन्यदिने तु मद-
नरत्ने ब्राह्मे। यस्य यस्य तु वर्णस्य यद्यत्स्यात्पश्चिमं त्विह। सततं गृहशुद्धिं च वस्त्रशुद्धिं करो-
त्यपि। अंत्यकर्मकालीनवस्त्रयोस्तु नैवोक्तं। ग्रामाद्बहिस्ततो गत्वा प्रेतस्पृष्टे तु वाससी। अं-
त्यानामाश्रितानां च त्यक्त्वा स्नानं करोत्यथेति। शंखः। दानप्रतिग्रहो होमः स्वाध्यायः पितृक-
र्म च। प्रेतपिंडक्रियावर्जमाशौचे विनिवर्तते॥ काठकगृह्ये॥ यत्र प्राणोत्क्रमस्तत्रान्वहं
महाबलिं कुर्यादिति पारस्करः। तदानीमेव वस्त्रं तंडुलं दीपं कांस्यभाजनं प्रेताय दद्यात्
आशौचप्रकाशे भरद्वाजः॥ वासोन्नं च जलं कुंभं प्रदाप्यं कांस्यभाजनं। नग्नप्रच्छादनं
श्राद्धे ब्राह्मणाय निवेदयेत्॥ भृगुः॥ तिलोदकं तथा पिंडान्नग्नप्रच्छादनादिकं॥ ग्रा-
नैन कुर्यात्संध्यायां यदि कुर्यान्निरर्थकं॥

॥अथ प्रेतपिंडः॥

यद्यपि

हेमाद्रौ पारस्करेण॥ ब्राह्मणे दश पिंडाः स्युः क्षत्रिये द्वादश स्मृताः। वैश्ये पंचदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्ति
ता इत्युक्तं। तथापि प्रेतेभ्यः सर्ववर्णेभ्यः पिंडान्दद्याद्दशैव त्विति तत्रैवोक्तेः सर्वेषां दशैव ज्ञेयाः॥ म
दनरत्नेप्येवं॥ तथा च हेमाद्रौ ब्राह्मपाद्मयोः। जात्युक्ताशौचतुल्यास्तु वर्णानां कैश्चिदेव हि। दश
धर्मा नृवरश्रेष्ठ सप्तैते पिंडान्वपंत्यपि मुक्त्वा विप्रान्येषु दशमपिंडोत्कर्ष उक्तः। देयस्तु दशमः पिंडो रा
ज्ञां वै द्वादशेऽहनि। वैश्यानां वै पंचदशे देयस्तु दशमस्तथा। शूद्रस्य दशमः पिंडो मासे पूर्णे हि दीय
ते इति। युद्धमृतादेराशौचे त्र्यहादौ च तत्रैवोक्तं। सद्यःशौचे प्रदातव्याः सर्वेपि युगपत्तथा॥ देवने
कोपि न संतानप्राजापत्यवत्तंत्रेण किंतु दशपिंडान्पृथग्दद्यात्। शिरस्त्वाद्येन पिंडेनेति दश
त्वावच्छिन्नानामेव शरीरोत्पादकत्वात्। त्र्यहाशौचे प्रदातव्यः प्रथमे ह्येक एव हि। द्वितीयेऽहनि
चत्वारस्तृतीये पंच चैव हि। अत्रैव प्रकारांतरमप्युक्तं॥ शातातपः॥ आशौचस्य तु ह्रासेपि पिंडा
न्दद्याद्दशैव तु। तत्रैकपात्रे सकृत्सक्त्वा दशपिंडान्दद्यात्॥ उत्तरीयशिलापात्रकर्तृद्रव्यविपर्य
ये पूर्वदत्ताञ्जलीन्दद्यात्पूर्वपिंडांस्तथैव चेति। गृह्यकारिकायां पात्रविपर्यये दोष उक्तः॥ शिला
विपर्यये घटस्फोटादेर्नावृत्तिः। अक्षाभ्यंजनादिपदक्रमेण एकहापनीतपनवदस्य योजकत्वा
त्। तद्वास्त्र लौकिकग्रहणं॥ केचित्तु॥ नवान्यादाय भांडानि त्र्याहिकं चाहिकं तथेति भवेन सोक्तेः
पात्रानेकत्वमाहुः। क्रियाकर्तृन्येन शेषः समापनीयः। एवं क्रियाप्रवृत्तानां यदि कश्चिद्वि
पद्यते। तद्धनं कार्पासं सर्वं वा सहकारिभिरिति शुद्धितत्त्वे वृहस्पतिस्मृतेः। पत्न्याः कर्तृत्वे रजो
दर्शने च तद्दिने कुर्यात्। शावाद्विगुणमार्त्तवमित्युक्तेः। आशौचांते श्राद्धे वे कर्तुरस्वास्थ्ये वान्येन
क्रियाः सर्वा वर्जनीया। कर्तृविपर्ययात् कालातिक्रमायोगाच्च॥ वाराहे॥ स्थंडिले प्रेतभागं तु द
द्यात्पूर्वोक्त एव तु। कृत्वानु पिंडसंकल्पं नामगोत्रेण सुंदरि॥ मरीचिः॥ प्रेतपिंडं बहिर्दद्याद्दर्भमंत्र
विवर्जितं। प्रागुदीच्यां चरुं कृत्वा स्नातः प्रयतमानसः॥ दर्भवर्जनमनुपनीतपरं। असंस्कृता
नां भूमौ पिंडं दद्यात्। संस्कृतानां कुशेष्विति भवेन सोक्तेः। भिन्नास्तरणपांस्वंतरे॥ भूमौ माल्यपिं
डपानीयपुष्पलेपादयः पुनः उक्तं॥ फलमूलैश्च पयसा शाकेन च गुडेन च तिलमिश्रं तु दर्भेषु
पिंडं दक्षिणतो हरेत्। तत्संप्रसेकं पुष्पं च धूपदीपनयेवच। शालिना शाकभिर्वापि शाकैर्वाप्य
थ निर्वपेत्। प्रथमेहनि यद्द्रव्यं तद्देयं स्याद्दशाहिकं। मदनरत्ने मात्स्ये॥ तैजसं मृन्मयं चाथ पात्रं
संपूज्य यत्नतः। लौकिकाग्नावधिश्रित्य पचेदन्नं घृतप्लुतं। स्नात्वाथ तिलसंमिश्रं प्रदद्याद्दर्भ
संस्तरे। शुद्धितत्त्वे देवजानीये ब्राह्मे॥ प्रथमेहनि यो दद्यात्प्रेतायान्नं समाहितः। अन्नं च
सूचान्येषु सर्वं प्रदद्यात्त्वपि। मृण्मये भांडमादाय नवं स्नातः सुसंयतः॥ तंडुलं प्रसृतिं तत्र त्रिः प्र
क्षाल्य पचेत्स्वयं। सपवित्रतिलैर्मिश्रं कृमिकेशविवर्जितं। द्वारे प्रांते ततः क्षिप्त्वाशुद्धां वामो
रमृत्तिका॥ भूपृष्ठे स्तरेद्दर्भान्याम्याग्रान्दशसंभवान्। ततो वनेजनं दद्यात्संस्मरन्गोत्रना
मनि। तिलसर्पिर्मधुक्षीरैः संसिक्तं तप्तमेव हि॥ दद्यात्प्रेताय पिंडं तु दक्षिणाभिमुखः स्थितः॥
अर्घ्यैः पुष्पैस्तथा धूपैर्दीपैस्तोयैश्च शालिभिः। ऊर्णातंतुमयैः शुद्धैर्वासोभिः पिंडमर्चयेत्। द्वि
तीये दिवसे देयः पिंड एवं क्रमेण तु॥ सद्यःशौचे प्रदातव्याः सर्वेपि युगपत्तथा। त्र्यहाशौचेपि दान

द्यास्त्रयः पिंडाः समाहितैः। द्वितीये च तुरो दद्यादस्थिसंचयनं तथा। त्रींस्तु दद्यात्तृतीयेह्नि वस्त्रादि
क्षालयेत्ततः। दशाहेपि च दातव्यः प्रथमेन्हि क एव हि। एकस्तोयांजलिस्त्वेवं पात्रमेकं च दीयते
द्वितीये द्वौ त्रितीये त्रीनित्याद्युक्त्वा। एवंस्युः पंचपंचाशत्तोयस्यांजलयः क्रमात्। तोयपात्राणि
तावंति संयुक्तानि तिलादिभिरिति॥ पात्रकुम्भः॥ अत्राहः पदमहोरात्रपरं तेन रात्रावपि देय
इति गौडाः। दिवसपदाद्रात्रौ नेति मैथिलाः॥ स एवं तु उक्तेः सपिंडेन दशपिंडप्रक्रान्ते पुत्रागमे
पि स न दद्यात्। असगोत्रः सगोत्रो वा निशायुक्तेः। दाहकर्त्तैव दशाहं कुर्यादिति मिताक्षरायां॥
शुद्धितत्त्वे वायवीये॥ असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्। प्रथमेऽग्निदानाद्येन स्वपिं
डदद्यात्स एव हीति। तत्रैव। प्रत्येकेन तु पिंडेन देहो निष्पद्यते यतः। कृतस्य करणायोगात्पुनर्नी
वर्तयेत्क्रियां। शुद्धिप्रकाशे वायवीयेपि। निवर्त्तयति योमोहात्क्रियामन्यनिवर्त्तितां। विधिघ्न
त्वेन भवति पितृहा चोपजायते। तस्मान्येन क्रिया येन केनापि च कृता यदि। न तां निवर्तयेत्प्राज्ञः
सतां धर्ममनुस्मरन्निति॥ आदिपुराणे॥ पितृशब्दस्वधां चैव न प्रयुंजीत कर्हिचित्। अनुशब्दं
तथा चेदं प्रयत्नेन विवर्जयेत्। उपतिष्ठतामयं पिंडः प्रेतायेति समुच्चरेत्॥ क्रियानिबंधे व्यासः॥
प्रेताय पिंडं दत्त्वा तु ततोऽश्नीयाद्दिनात्यये। भविष्ये॥ ओदनामिषशक्तूनां शाकमूलफलादिषु।
प्रथमेऽहनि यद्दद्यात्तद्दद्यादुत्तरेऽहनि। गृहद्वारे श्मशाने वा तीर्थे देवगृहेपि वा। यत्राद्यं दीयते पिंड
स्तत्र सर्वं समाचरेत्। ब्राह्मे। शिरस्त्वाद्येन पिंडेन प्रेतस्य क्रियते सदा। द्वितीयेन तु कर्णाक्षिनासि
काश्च समासतः। गलांसभुजवक्षांसि तृतीयेन यथाक्रमं। चतुर्थेन तु पिंडेन नाभिलिंगगुदा
नि च। जानुजंघे तथा पादौ पंचमेन तु सर्वदा। सर्वमर्माणि षष्ठेन सप्तमेन तु नाड्यः। दंतलोम
न्यष्टमेन वीर्यं तु नवमेन च। दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्यय इति। याज्ञवल्क्येन तु॥ पिंडय
ज्ञावृता देयं प्रेतायान्नं दिनत्रयमित्युक्तेः। अत्र फलतारतम्यं ज्ञेयं। इति विज्ञानेश्वरः॥ तेन त्र्य
हाशौचपरत्वं देवयाज्ञिकोक्तं चिंत्यं। आशौचस्य ह्रासेपि पिंडान्दद्याद्दशैव त्विति वचनाच्च
दिनत्रयाविशेषकत्वार्थमिति हारलतादयः॥ शातातपः॥ जलमेकाहमाकाशे स्थाप्यं क्षीरं च
मृण्मये। पारस्करः॥ मृण्मये तां रात्रिं क्षीरोदके विहायसि निदध्युः। प्रेतात्र स्नाहीत्युदकं पिब चे
दं क्षीरं। इदं रात्राविति गौडाः॥ गाह्ये तु॥ अपक्के मृण्मये पात्रे दुग्धं दद्याद्दिनत्रयमिति उक्तम्॥
हेमाद्रौ पाद्ये तु दशाहमुक्तम्। तस्मान्निधेयमाकाशे दशरात्रं पयो जलं। सर्वतापोपशान्त्यर्थं पथ्यश्र
मविनाशनं॥ देवजानीये कारिकायां। तत्र मैनोपकल्पयेद्दशरात्रमखंडितं। कुर्यान्मदीपं तैलेन
पारिपात्रं च मार्त्तिकं। भोज्याभोजनकाले तु भक्तमुष्टिं च निर्वपेत्। नामगोत्रेण संबुध्याथ रिक्तोपि
तृप्यत्वत्। शातातपः॥ भूर्लोकान्मेतलोकं तु गंतुं श्राद्धं समाचरेत्। तत्पाथेयं हि भवति मृतस्य मनु
जस्य तु॥ ॥ अथ दशाहमध्ये दर्शपातनिर्णयः॥ ॥ भविष्ये॥ म
ध्ये त्वाशौचं तत्र स्तु यदि दर्शो न पद्यते। समाप्य चोदकं पिंडान्स्नानमात्रं समाचरेत्॥ ऋष्यशृंगः
आशौचमध्ये दर्शो यदि स्यात्सर्ववर्णिनां। समाप्तिं मेत तंत्रस्य कुर्यादित्याह गौतमः॥ पैठीनसिः
आशौचावेव कर्तव्या प्रेतपिंडोदकक्रिया। द्विरैंदवेन तु कुर्याणा पुनः प्राक्तंसमपूर्त्ते॥ मातापित्रोस्तु

शोकगौतमः॥ अंतर्दशाहे दर्शश्चेत्तत्र सर्वं समापयेत्। पित्रोस्तु यावदाशौचं दद्यात्पिंडान् जलांजलीन्। इदमपि अहमध्ये दर्शपाते॥ तदूर्ध्वं तु दर्शे तु पित्रोरपि तंत्रं समापयमेव। पित्रोराशौचमध्ये तु परिदर्शः समापयेत् तावदेवोत्तरं तंत्रं पर्यवसेत् अहात्परमिति गालवोक्तेः। अन्येषां तु अहमध्ये स्मात्समाप्तिरिति। पराशरमाधवीये निर्णयामृते चोक्तं। कालादर्शेपि॥ दर्शो दशाहमध्ये स्यादूर्ध्वं तंत्रं समापयेत्। त्रिरात्रादुत्तरं पित्रोर्मृताविति विनिश्चयः। मदनपारिजाते तु गालवीयमापदनौ रसपुत्रादिविषयं। अहोर्ध्वमपि पित्रोर्नेतंत्रसमाप्तिरित्युक्तं। मदनरत्नेप्येवं। मम तु देशाचारतो व्यवस्थेति प्रतिभाति॥

॥अथास्थिसंचयः॥

॥तत्राश्वलायनेन॥ कृष्णपक्षे एकादश्यां दर्शेष्वयुग्मासु आषाढाफाल्गुनीप्रोष्ठपदाभिन्नर्क्षेषूक्तं। तदाशौचमध्ये संभवेत् तदूर्ध्वं च शागव्यात्करणे ज्ञेयं। आशौचमध्ये तु मदनरत्ने संवर्तः। प्रथमेह्नि तृतीये वा सप्तमे नवमे तथा अस्थिसंचयनं कार्यं दिने तद्गोत्रजैः सह। छंदोगपरिशिष्टे॥ अपरेद्युस्तृतीये वा अस्थिसंचयनं भवेदिति। द्वितीयेप्युक्तं। विष्णुकात्यायनौ। संचयनं चतुर्थ्यामिति। माधवीये यमः॥ भौमार्कमंदवारेषु तिथियुग्मे विवर्जयेत्। वर्जयेदेकपादर्क्षे द्विपादर्क्षेस्थिसंचयं प्रदात् जन्मनक्षत्रे त्रिपादर्क्षे विशेषतः॥ ब्राह्मे॥ चतुर्थे ब्राह्मणानां तु पंचमेहनि भूभृतां। नवमे वैश्यजातीनां शूद्राणां दशमात्परं। दशमेहनीति वा पाठः॥ शौनकः। पलाशेश्चास्थिदाहे च सद्यः संचयनं भवेत्। काम्यमरणे तु तस्य त्रिरात्रमाशौचं। द्वितीयेप्यस्थिसंचयस्तूक्तं। आंगिरः॥ प्रेतीभूतं तथोद्दिश्य यः शुचिर्न करोति चेत्। देवतानां तु यजनं तेन शप्तास्तथ देवताः। तद्विधिः स्वल्पसत्रे भट्टकृतो ज्ञेयः। हेमाद्रौ नागरखंडे। त्रीणि संचयनस्यार्थे तानि मे शृणु सांप्रतं। यत्र स्थाने भवेन्मृत्युः तत्र श्राद्धं प्रकल्पयेत्। एकोद्दिष्टं ततो मार्गे विश्रामो यत्र कारितः। ततः संचयनस्यार्थे तृतीयं श्राद्धमिष्यते॥ अपरार्के मदनरत्ने च ब्राह्मे॥ सद्यः शौचे तथैकाहे सद्यः संचयनं भवेत्। त्र्यहाशौचे तृतीयेह्नि कर्तव्यस्त्वस्थिसंचयः। तत्रैव श्मशानदेवतायागं चतुर्थे दिवसे चरेत्। मृण्मयेषु च भांडेषु कुंभेषु त्वथ केषु वा। सुपक्वैर्भक्ष्यभोज्यैश्च पायसैः पानकैस्तथा। फलैर्मूलैर्वनोत्थैश्च भक्ष्याः क्रव्याद्देवताः। धूपो दीपस्तथा माल्यमर्घ्यं देयं त्वरान्वितैः। तत्र पात्राणि शूर्पाणि श्मशानाग्नेः समंततः निवेदयद्भिर्वक्तव्यं तैः सर्वैस्तैः कृतैः। नमः क्रव्यादमुखेभ्यो देवेभ्यः इति सर्वदा येत्र श्मशाने देवाः स्युर्भगवंतः सनातनाः। तेस्मत्सकाशाद्गृह्णंतु बलिमष्टांगमक्षयं। प्रेतस्यास्य शुभान्लोकान्प्रयच्छंतु च शाश्वतान्। अस्माकमायुरारोग्यं सुखं च ददता चिरं। एवं कृत्वा बलिं सर्वान् क्षीरेणाभ्युक्ष्य वाग्यतः। एवं दत्वा बलिं चैव दद्यात्पिंडत्रयं बुधः। एकं श्मशानवासिभ्यः प्रेतायैव तु मध्यमं। तृतीयं तत्सखिभ्यश्च दक्षिणासंस्थमादरात्। ततो यज्ञियवृक्षोत्थां शाखामादाय वाग्यतः। प्रेतस्यास्थीनि गृह्णाति प्रधानांगोद्भवानि च। शिरसो वक्षसः पाण्योः पार्श्वाभ्यां चैव पादतः। पंचगव्येन संस्थाप्य क्षौमवस्त्रेण वेष्ट्य च। न्यसेन्मृण्मये भांडे नवे साच्छादने शुभे। अरण्ये वृक्षमूले वा शुद्धे संस्थापयेत्यपि। गृहीत्वास्थीनि तद्भस्म नीत्वा तोये विनिःक्षिपेत्। ततः संमार्जनं भूमेः कर्तव्यं गोमयांबुभिः पूजा च पुष्पधूपाद्यैः

वैलिभिः पूर्ववत्क्रमात् इति॥ ॥अथतीर्थेऽस्थिक्षेपविधिः॥ ॥तत्रैव॥त
स्थानाच्छनकैर्नीत्वाकदाचिज्जाह्नवीजले। कश्चित्क्षिपतिसत्पुत्रोदौहित्रोवासहोदरः। मातुः
कुलंपितृकुलंवर्जयित्वानराधमः। अस्थीन्यन्यकुलस्थस्यनीत्वाचांद्रायणंचरेत्। तत्रैवमहा
पुराणे॥ अस्थीनिमातापितृपूर्वजानांनयंतिगंगामपियेकथंचित्। सद्धर्मभक्त्यापिदयाभि
भूतास्तेषांतुतीर्थानिफलप्रदानि। स्नात्वाततःपंचगव्येनसिक्त्वाहिरण्यमध्वाज्यतिलैश्चयो
ज्यः। ततस्तुमृत्पिंडपुटेनिधायपश्यन्दिशंप्रेतगणोपगूढां। नमोस्तुधर्मायवदन्प्रविश्यजलंस
मेप्रीतइतिक्षिपेच्च। उत्थायभास्वंतमवेक्ष्यसूर्यंसदक्षिणांविप्रमुख्यायदद्यात्। एवंकृतेप्रेत
पुरस्थितस्यस्वर्गेगतिःस्यात्तुमहेंद्रतुल्या॥ यमः॥ गंगातोयेषुयस्यास्थिक्षिप्यतेशुभकर्मणः।
नतस्यपुनरावृत्तिर्ब्रह्मलोकात्सनातनात्॥ तथा॥ अस्तंगतेगुरौशुक्रेतथामासेमलिम्लुचे।
गंगायामस्थिनिःक्षेपंनकुर्यादितिगौतमः॥ दशाहांतर्नदोषः। दशाहाभ्यंतरेयस्यगंगातोये
स्थिमज्जति। गंगायांमरणंयादृक्तादृक्फलमवाप्नुयादितिमदनरत्नेवृद्धमनूक्तेः। शौनको
ऽप्यवक्ष्यामिअस्थिक्षेपविधिंक्रमात्। आदौग्रामाद्बहिर्गत्वास्नानंकृत्वासचैलकं। प्रोक्षयेत
पंचगव्येनशुद्धमंत्रैर्विचक्षणः॥ गायत्र्याद्यैःपंचगव्यंमंत्रैर्निखातास्थिभूमिंप्रोक्षयेत्यर्थः। उप
सर्पादिभिर्मंत्रैःप्रार्थनंखननंतथा। मृत्तिकोद्धरणंचास्थ्नांग्रहणंचयथाक्रमं। उपसर्पेतिचतु
भिर्मंत्रैःक्रमेणप्रार्थनादिज्ञेयं। स्नात्वास्थिशुद्धिंकुर्वीतएतोन्विंद्रेतिसूक्ततः। स्पृष्ट्वास्पृष्ट्वात
तःस्नानंपंचगव्येनशुध्यति। दशस्नानानिकुर्वीततत्तन्मंत्रैर्विचक्षणः॥ गोमूत्रंगोमयंक्षीरंद
धिसर्पिःकुशोदकं। भस्ममृण्मधुवारीतिमंत्रतःस्नानिवैदशः। कुशैःसंमार्जयेदस्थीन्यतोदे
वेतिमंत्रतः। एतोन्विंद्रंशुचीवेतितन्महस्तीतिच। पावमानीममाग्नेचरुद्रसूक्तंयथाक्रमं।
एतैःकुशैर्मार्जनंहेमश्राद्धंततःकुर्यात्पित्रुद्दिश्ययत्नतः। पिंडदानंप्रकुर्वीतततश्चतिलत
र्पणं। अस्थिक्षेपांगंचेदं॥ अजिनंकंबलादर्भागोकेशाःशाणमेवच। भूर्जपत्रंताडपत्रंस
प्तधावेष्टनंस्मृतं। हेमंचमौक्तिकंरूप्यंप्रवालंनीलकंतथा। निक्षिपेदस्थिमध्येतुशुद्धिर्भव
तिनान्यथा॥ ततोहोमंप्रकुर्वीततिलाज्येनविचक्षणः॥ उदीरतेतिसूक्तेनहुनेदष्टोत्तरंशतं
ततोगत्वाक्षिपेत्तीर्थेस्पर्शदोषोनविद्यते। मूत्रपुरीषाचमनंकुर्वन्नास्थिनिधारयेत्॥ अत्रद
शदानंवैतरणीऋणमोक्षपापधेनुदानमुक्तंदिवोदासीये। काशीखंडे॥ धनंजयोपिधर्मात्मा
मातृभक्तिपरायणः। आदायास्थीन्यतोमातुर्गंगामार्गस्थितोभवत्। पंचगव्येनसंस्नाप्यत
थापंचामृतेनवै। यक्षकर्दमलेपेनलिप्त्वापुष्पैःप्रपूज्यच। आवेष्ट्यतत्रवस्त्रेणततःपट्टांबरेण
च। ततःसुरंगवस्त्रेणततोमांजिष्ठवाससा। नेपालकंबलेनाथमृदाचाथविशुद्धया। ताम्रसं
पुटकेकृत्वामातुरंशान्यथोवहेत्। व्यासः॥ पट्टवस्त्रंचकौशेयंमांजिष्ठंश्वेतवस्त्रकं। कंबलं
शाणपत्रंचअजिनंचतथोत्तरं। एषांविकल्पः॥ अन्यश्चात्रविशेषस्त्रिस्थलीसेतौदिवोदा
सीयेचज्ञेयः। संचयनोत्तरंश्राद्धमाहाश्वलायनः। श्राद्धमस्मैदद्युरिति। स्मृत्यर्थसारे॥ संच
यनेकृतेमनुष्यलोकंगच्छतः। पाथेयश्राद्धमामेनकार्यमिति। अनुपनीतस्यनसंचयनं॥

॥ ॥अथनवश्राद्धं॥ पृथ्वीचंद्रोदयेअंगिराः॥ प्रथमेन्हितृतीयेचपंच
मेसप्तमेतथा। नवमेकादशेचैवतन्नवश्राद्धमुच्यते। शिवस्वामी॥ नवश्राद्धानिपंचाहुराश्वलाय
नशाखिनः। आपस्तंबाःषडित्याहुर्विभाषान्यत्रदृश्यते॥ पंचैकादशाहिकंविना। मरणाद्विष
मेषुदिनेष्वेकैकंनवश्राद्धंकुर्यादानवमाद्दिनं। विच्छिन्नेकादशे। तत्कुर्यादितिमदनर
त्नेबौधायनोक्तेः। भविष्ये॥ नवसप्तविशेषाज्ञानवश्राद्धान्यनुक्रमात्। आद्यंतयोर्वर्णयोस्तु
षडित्याहुर्महर्षयः॥ हेमाद्रौवृद्धवसिष्ठः॥ अलब्ध्वातुनवश्राद्धंशेषतस्तान्नेवमुच्यते। अर्वाक्तु
द्वादशाहस्यलब्ध्वानरतिदुष्कृतं॥ अतःषडेव॥ एतान्येवविषमश्राद्धानीत्युच्यंते॥ नागरखंडेतु॥
पंचमेसप्तमेतद्वदष्टमेनवमेतथा। दशमेकादशेचैवनवश्राद्धानितानिवैस्मृतं॥ कात्या
यनस्तु॥ चतुर्थेपंचमेचैवनवमेकादशेतथा। यदन्नंदीयतेजंतोस्तन्नवश्राद्धमुच्यते। प्रथमे
सप्तमेचैवेत्याद्यपरेव्यासपाठः॥ बह्वृचानांतु। नवश्राद्धंदशाहानिनवमिश्रंतुषड्ऋतून्युक्तं
नारायणवृत्तौ॥ दीपिकायां॥ अथतद्वत्पादाद्येचतुर्थेदिनेश्राद्धं। पंचमसप्तमाष्टनवदिक्
रुद्रेष्वयुग्मद्विजैः। प्रथमेन्हितृतीयेन्हिपंचसप्तनवस्वपि। द्वौद्वौपिंडौप्रदातव्यौशेषेष्वेकेनविन्य
सेत्। एकोविषमश्राद्धेअवमपिंडश्चैकइतिद्वाविन्मर्षः। अत्रशाखाभेदाद्व्यवस्था। आपरार्के
भविष्ये॥ नवश्राद्धंत्रिपक्षंचषण्मासंमासिकानिच। नकरोतिसुतोयस्तुतस्याधःपितरोग
ताः॥ वाराहे॥ गतोसिदिव्यलोकंत्वंकृतांतविहितात्पथ॥ मनसावायुभूतेनविप्रेत्वाहं
नियोजये॥ पूजयिष्यामिभोगेस्त्वामेवंविप्रंनिमंत्रयेत्। आवाहनेपितन्नेवाइहलोकंपरित्य
ज्यगतोसिपरमांगतिम्। मनसावायुभूतेनविप्रेत्वाहंनियोजयेइति। तत्रैवबह्वृचपरिशिष्टे।
अनुदकमधूपंचगंधमाल्यविवर्जितं। नवश्राद्धममंत्रंचपिंडोदकविवर्जितं। उदकमर्घ्यं। पिं
डोदकंशुंधतांपितरइत्यवनेजनादि। एकोद्दिष्टेतुसर्वेषुनस्वधानाभिरम्यतां नाग्नौकरणमंत्र
श्चएकंवाथतिलोदकं। अनग्नेषुसर्वेषुनस्वधानाभिरम्यतां स्वस्त्यस्तुविसृजेदेवंसकृत्स्वर्णव
र्जितं। एकोद्दिष्टस्यपिंडेतुअत्रशब्दोनविद्यते। पितृशब्दंनकुर्वीतपितृहाचोपजायते। सपिं
डनात्प्रागितिहेमाद्रिः। नेननैवस्वधांप्रयुंजीतनेनशब्ददशाहिकेइति। कल्पतरौ। आदशाहि
कोत्तरैकादशाहेस्वधाप्रयोगएवेतिहारलतापराशरौ॥ रत्नावल्यां॥ आशीर्वाद्विगुणाश्भोज
याशीःस्वस्तिवाचनं। पितृशब्दःस्वसंबन्धशर्मशब्दस्तथैवच। पात्रालंभोवगाहश्चउल्मुकस्योत्से
चनादिकं। तृप्तिप्रश्नश्चविकिरःशेषप्रश्नस्तथैवच। प्रदक्षिणाविसर्गश्चसीमांतगमनंतथा।
अष्टादशपदार्थाश्चप्रेतश्राद्धेविवर्जयेत्। अत्रस्वधापितृनमःएशब्देनतिलोसीतिमंत्रेप्रेतशब्दो
हेनतूष्णींवातिलावपनं। तूष्णींगंधदानं। अमुष्मैस्वाहेतिप्रेतनाम्नापाणिहोमः। शाखाएकपिं
डःशिवपनमंत्रेऊहः। अनुमंत्रणादिममंत्रकं। अभिरम्यतामितिविसर्जनं॥ एतन्नवश्राद्धंवर्जं
कोद्दिष्टेषु। नवश्राद्धेत्वमंत्रकं। सर्वमितिनारायणवृत्तिः। क्रियानिबंधे॥ उशनास्त्यजेत्नाम्नेको
द्दिष्टेसदाबुधः। त्युक्त्वातुपार्वणंकुर्यात्तस्योपरिकुर्यात्न्यासेन। नवश्राद्धंगृहेकार्यंभार्यापत्राप
योपिवा। सपिंडीकरणांतानिप्रेतश्राद्धानियानिवै। तानिस्युर्लौकिकेवह्नाविवाहस्याश्वलाय

नः। इदं संभवे तेन कार्यं। नवश्राद्धेषु यच्छिष्टं गृहपर्युषितं च यत्। दंपत्योर्भुक्तशेषं च न तद्भुंजीत कर्हि
चित्॥ इत्यंगिरोवचनलिंगात्। द्वाभ्यां तदानुकृच्छ्राभ्यां शुद्धिः स्यात्तु विवेकिनामिति ज्ञात्वा उक्तं।
विप्रे च निर्णयामृते कल्पवः॥ नवश्राद्धं मासिकं च यद्यदंतरितं भवेत्। तत्तदुत्तरसातंत्र्यादनुष्ठेयं
प्रचक्षते। हेमाद्रौ गालवः। शावे तु सूतकं चेत्स्यान्निर्णयां च मृतौ तथा। नवश्राद्धानि देयानि य
थाकालं यथाक्रमं॥ निशायामाशौचांते व्यहव्हौ। अन्वारोहणे तु नवश्राद्धानि सर्वाणि सपिं
डीकरणं पृथक्। एक एव वृषोत्सर्गो गौरेका तत्र दीयते। आशौचांत्यदिने कार्यमुक्तं ब्राह्मे। यस्य
यस्य तु वर्णस्य यद्यस्यान्त्यमन्त्यहः। स तत्र वस्त्रशुद्धिं च गृहशुद्धिं करोत्यपि समाप्य दशमं पिंडं गे
तस्पृष्टे तु वाससी। अंत्यानामाश्रितानां च मुक्त्वा स्नानं करोति च। श्मश्रुलोमनखानां च यच्चान्यं
तज्जहात्यपि। गौरसर्षपकल्केन तिलकल्केन संयुतं। शिरःस्नानं ततः कृत्वा तोयेनाचम्य वाग्य
तः। वृषभं गां सुवर्णं च स्पृष्ट्वा शुद्धो भवेन्नरः॥ क्रियानिबंधे गृह्यकारिकायां॥ अत्र पिंडत्रयं दद्यु
स्तत्सखिभ्यस्तथा द्विजैः। येनाप नव्यमंत्रहत्तनीपंचयमायवे। तथा॥ कर्त्रानुप्रार्थिताः संतो ज्ञा
तिसंबंधिबांधवाः। दद्युरभ्यागताः पूर्वं त्रींस्त्रीन् धर्मोदकांजलीन्। पूर्ववन्नामगोत्राभ्यां निममो
नेह कश्चन। मदनरत्ने विष्णुहारीतौ॥ आशौचांते कृतश्मश्रुकर्माणस्तिलकल्कैः सर्षपकल्कै
र्वा स्नाताः शुक्लवाससो गृहं प्रविश्य शांतिकं कृत्वा ब्राह्मणपूजनं कुर्युरिति॥ देवलः॥ द
शमेऽहनि संप्राप्ते स्नानं ग्रामाद्बहिर्भवेत्। तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च। अपरा
र्के बृहस्पतिः॥ नवमे वाससां त्यागो नखरोम्णां तथांतिमे। तत्रैव व्यासः॥ आशौचांत्यदिने क्षौ
रं जनन्यां च गुरौ मृते। एतन्नेनाल्पवयसामित्याह आपस्तंबः॥ अनुभाविनां च परिवापनमिति
अनुभाविनः कनिष्ठा इति विज्ञानेश्वररत्नाकरादयः॥ आशौचमनुभवतां पुंसां सर्वाशौचेषु मुं
डनं। आज्यपानरपते द्विजन्मनां दारकर्ममृतसूतकेषु च। वर्षमोक्षमखदीक्षणेष्वपि क्षौर
मिष्टमखिलेषु चोडुषु। इति रत्नमालोक्तेर्जननाशौचेपीति शुद्धितत्त्वादयः। अत्र देशाचारतो
व्यवस्था। परं शिखावर्जं। केशश्मश्रुलोमनखानि वापयीत शिखावर्जमिति गोभिलोक्तेः
पत्न्याप्येवं। न समावृत्ता वपेयुरन्यत्र विहारादित्येके। विहारो दर्शाद्यागः। तेन विनास
मावृत्ता गृहस्था न वपेयुरित्यर्थः॥ वृथाच्छिनत्ति यः केशान्तमाहुर्ब्रह्मघातिनमिति। तत्के
शश्मश्रु धारयतामग्र्या भवति संततिरिति दानधर्मोक्तकाम्यपरं। अनुभाविनः पुत्रादय
एवेत्येके। पुत्रः पत्नी च वपनं कुर्यादंते यथाविधि॥ पिंडदो नो चितिन्योपि कुर्यादित्थं समा
हितः इत्यपरार्के व्यासोक्तेः। यत्तु मिताक्षरायां। द्वितीयेऽहनि कर्तव्यं क्षुरकर्म प्रयत्नतः। तृती
ये पंचमे वापि सप्तमे वा प्रदानतः इति। आप्रदानतः इति चतुर्थ्यादीनि। तत्प्रथमदिनेऽसंभ
वेऽस्त्रेयं। अलुप्तकेशो यः पूर्वं सोत्र केशान्प्रवापयेत्। द्वितीयेऽह्नि तृतीयेऽह्नि पंचमे सप्तमेपि वा।
यावत्श्राद्धं प्रदीयेत तावदित्यपरं मतमिति माधवीये। मदनरत्ने बौधायनोक्तेः। मदनपारि
जाते तु। दशमे प्रथमे च समुच्चय उक्तः। यत्तु दशमं पिंडमुत्सृज्य रात्रिशेषे शुचिर्भवेदिति तदे
कादशाहश्राद्धांगविप्रनिमंत्रणार्थं ज्ञेयं॥ ॥अथैकादशाहः॥ मनुः

॥ ॥अथनवश्राद्धं॥ पृथ्वीचंद्रोदयेआंगिरः॥ प्रथमेन्हितृतीयेचपंच
मेसप्तमेतथा। नवमैकादशेचैवतन्नवश्राद्धमुच्यते। शिवस्वामी॥ नवश्राद्धानिपंचाहुराश्वलाय
नशाखिनः। आपस्तंबाःषडित्याहुर्विभाषान्नितरेषुहि॥ पंचैकादशाहिकंविना। मरणाद्विष
मेषुदिनेष्वेकैकंनवश्राद्धंकुर्यादानवमाद्दिनवमं। विच्छिद्यैनैकादशे। तत्कुर्यादितिमदनर
त्नेबौधायनोक्तेः। भविष्ये॥ नवसप्तविशंराज्ञानवश्राद्धान्यनुक्रमात्। आद्यंतयोर्वर्णयोस्तु
षडित्याहुर्महर्षयः॥ हेमाद्रौवृद्धवसिष्ठः॥ अलब्ध्वातुनवश्राद्धमेतत्त्वान्नैवमुच्यते। अर्वाक्तु
द्वादशाहस्यलब्ध्वानरतिदुष्कृतं॥ अतःषडेव॥ एतान्येवविषमश्राद्धानीत्युच्यंते॥ नागरखं
डेतु॥ पंचमेसप्तमेतद्वदष्टमेनवमेतथा। दशमैकादशेचैवनवश्राद्धानितानिवैस्मृतं॥ कात्या
यनस्तु॥ चतुर्थेपंचमेचैवनवमैकादशेतथा। यदत्रदीयतेजंतोस्तन्नवश्राद्धमुच्यते। प्रथमे
सप्तमेचैवेत्याद्यपरेव्यासपाठः॥ बह्वृचानांतु। नवश्राद्धंदशाहानिनवमिश्रंतुषड्ऋतूनित्युक्तं
नारायणवृत्तौ॥ दीपिकायां॥ अथतदनुपादाद्येचतुर्थेदिनेश्राद्धं। पंचमसप्तमाष्टनवदिक्
रुद्रेषुयुग्मद्विजैः। प्रथमेन्हितृतीयेन्हिपंचसप्तनवस्वपि। द्वौद्वौपिंडौप्रदातव्यौशेषेष्वेकंतुविन्य
सेत्। एकोविषमश्राद्धेष्ववयवपिंडश्चैकइतिहाविन्यर्थः। अत्रशाखाभेदाद्व्यवस्था। अपरार्के
भविष्ये॥ नवश्राद्धंत्रिपक्षंचषण्मासंमासिकानिच। नकरोतिसुतोयस्तुनस्याधःपितरोग
ताः॥ वाराहे॥ गतोसिदिव्यलोकंत्वंकृतांतविहितात्पथं॥ मनसावायुभूतेनविप्रेत्वाहं
नियोजये॥ पूजयिष्यामिभोगैस्त्वामेवंविप्रंनिमंत्रयेत्। आवाहनेपितत्रैव। इहलोकंपरित्य
ज्यगतोसिपरमांगतिम्। मनसावायुभूतेनविप्रेत्वाहंनियोजयइति। तत्रैवबह्वृचपरिशिष्टे।
अनूदकमधूपंचगंधमाल्यविवर्जितं। नवश्राद्धममंत्रंचपिंडोदकविवर्जितं। उदकमर्घ्यं। पिं
डोदकंशुंधंतांपितरइत्यवनेजनादि। एकोद्दिष्टेषुसर्वेषुनस्वधानाभिरम्यतां। नाग्नौकरणमंत्र
श्चएकंवाथतिलोदकं। अनयत्येषुसर्वेषुनस्वधानाभिरम्यतां स्वस्त्यस्तुविसृजेदेवंसकृत्प्रणव
वर्जितं। एकोद्दिष्टस्यपिंडेतुअत्रशब्दोनविद्यते। पितृशब्दंनकुर्वीतपितृहाचोपजायते। सपिं
डनात्प्रागितिहेमाद्रिः। तेनतेनैवस्वधांप्रयुंजीतप्रेतशब्दंदशाहिकेइति। कृष्णशृंगः। क्षौदशाहि
कोक्तेरेकादशाहेस्वधाप्रयोगएवेतिहारलता॥ रत्नावल्यां॥ आशीरुद्दिष्टदर्शभोज
याशीःस्वस्तिवाचनं। पितृशब्दःस्वसंबंधशर्मशब्दस्तथैवच। पात्रालंभोवगाहश्चउल्मुखोल्ले
खनादिकं। तृप्तिप्रश्नश्चविकिरःशेषप्रश्नस्तथैवच। प्रदक्षिणाविसर्गश्चसीमांतगमनंतथा।
अष्टादशपदार्थांश्चप्रेतश्राद्धेविवर्जयेत्। अत्रस्वधापितृनमःस्वशब्देनतिलोसीतिमंत्रेप्रेतशब्दो
हेनतूष्णींवातिलावपनं। तूष्णींमर्घ्यदानं। अमुष्मैस्वाहेतिप्रेतनाम्नापाणिहोमः। मामाएकःपिं
डः। पितृपतिमंत्रेऊहः। अनुमंत्रणादिचमंत्रकं। अभिरम्यतामितिविसर्जनं॥ एतन्नवश्राद्धवर्जं
कोद्दिष्टेषु। नवश्राद्धेत्वमंत्रकं। सर्वमितिनारायणवृत्तिः। क्रियानिबंधे॥ उक्तानेत्याकर्षेकाप्येको
द्दिष्टेसदाबुधः। न्युब्जानुपात्रोणिकुर्यात्तस्योपरिकुशान्न्यसेत्। नवश्राद्धेगृहेकामंभार्यापश्राद्ध
योपिवा। सपिंडीकरणांतानितेनश्राद्धानिपाणिवै। तानिस्युर्लौकिकेवह्नौविनाहन्यावश्लाप

परं विस्तृतेः॥ प्रायुक्तशंखादिवचनानां चानाकरत्वादिति वदंतः। कल्पतरुवाचस्पतिप्रमुखाः
सर्वे महानिबंधविरोधादुपेक्ष्याः॥ उशनाः॥ अहाशौचेपि कर्तव्यमाद्यमेकादशेहनि॥ अती
तविषये सद्यः अहोर्ध्वं वा तदिष्यते। याज्ञवल्क्यः॥ एकोद्दिष्टं दैवहीनमेकार्घैकपवित्रकं। आ
वाहनाग्नौकरणरहितं ह्यपसव्यवत्। उपतिष्ठतामित्यक्षय्यस्थाने विप्रविसर्जने। अभिरम्य
तामिति। वदेत्ब्रूयुस्ते भिरताः स्महेति। स्वदितमिति तृप्तिप्रश्नः सुस्वदितमिति अनुज्ञावचनं।
इति कात्यायनः॥ अग्नौकरणनिषेधोन्यपरः। बह्वृचानां तु सर्वैकोद्दिष्टेषु तद्भवत्येवेत्युक्तंप्रा
क्। प्रथमे पात्रे संस्रवान् निनयेत् तृतीयेनापिधानं स्यच्च वाथान्नपात्रं न्युब्जेत् तिश्शूलपाणिः
प्रचेताः॥ नात्र पात्रालंभो नाशिषः प्रार्थयेत्। अत्र विशेषो हेमाद्रौ वाराहे॥ प्रमस्तु कर्मनुकर्त
व्यं नरवच्छेदस्तथैव च। स्वपनाभ्यंजनं दद्यात् द्विमाप विधिपूर्वकं। तथा॥ उपवेश्यासने भद्रे
छत्रं तत्र प्रकल्पयेत्। पश्चादुपानहौ दद्यात् सर्वाण्याभरणानि च॥ विष्णुः॥ दक्षिणाग्रान्द
र्भान् मुक्त्वा दत्त्वा स्वप्योदकेषु च रंगुलपृथ्वीस्ता वदंतरालास्ता वदधः खाता वितस्त्यायता स्तिस्रः
कर्षूः कुर्यात्॥ कर्षूणां समीपे अग्नित्रयमाधाय परिस्तीर्यैकैकस्मिन्नाहुतित्रयं जुहुयात् सोमाय पि
तृमते स्वधा। नमोग्नये कव्यवाहनाय यमायांगिरस्वते इति स्थानत्रये प्राग्वत्। पिंडनिर्वपणं दधि
मधुघृतमांसैः कर्षूत्रयं पूरयित्वैतत्ते मत इति जपेत्। शेषं नवश्राद्धवत्। अत्र साग्नेरप्यग्नौ वैश्वदे
व इत्युक्तं प्राक्। एकादशाह कर्त्रा पुत्रेण वा कार्यमित्युक्तं। क्रियानिबंधे गृह्यकारिकायां तिलोसि
प्रेतदेवत्यः प्रेतं लोकान् हिनोतकं। मंत्रमुक्त्वा तिलानेवं प्रक्षिपेदर्घ्यपात्रतः। दक्षिणामुखकुं
भं च सान्नं दत्वा तथैव गां। तस्मै दद्यादुक्तशेषं तद्भांडान्यपि भाजनं। विप्राभावेग्नावेकोद्दिष्टं तु।
अग्नौ पाणिसंस्रपयित्वाज्यभागांतेन दर्भश्राद्धप्रयोगं। कृत्वाग्नौ प्रेतमावाह्य गंधाद्यैः संपूज्य
पृथिवी ते पात्रमित्यादिनान्नं संकल्प्योदीरतामवर इत्युपस्थाभिश्चतुरष्टाभिर्द्वात्रिंशदाहुतीर्हु
त्वा पिंडदानादिश्राद्धं समापयेदिति। याज्ञवल्क्यः। एतत्सपिंडीकरणमेकोद्दिष्टं स्त्रिया अपि

॥ ॥ अथ वृषोत्सर्गः॥

स च नित्यकाम्यः॥ नकरोति वृषोत्सर्गं सुतीर्थे चा
जलांजलिं। न ददाति सुतो यस्तु पितुरुच्चार एव सः। उच्चारः पुरीषं एष्टव्या बहवः पुत्रा यद्येकोपि
गयां व्रजेत्। यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्। इति मात्स्ये कौर्मोक्तेः॥ एकादशेह्नि प्रेतस्य
यस्य नोत्सृज्यते वृषः। प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपीति। षट्त्रिंशन्मते निंदाश्रुतेः। एवं
कृत्वाश्यवाप्नोति फलं वाजिमखोदितं। समुद्दिश्योत्सृजेन्नीलं स लभेत परां गतिं वृषोत्सर्गः
पुनात्येव दशातीतान् दशापरान्। इति॥ देवीपुराणभविष्यादौ फलश्रुतेश्च॥ अयं द्वादशा
हेप्युक्तो भविष्ये। चैत्र्यां वापि तृतीयां वा वैशाख्यां द्वादशेह्नि वेति। विष्णुधर्मे तु मृताहेप्युक्तः।
विषुवद्द्वितये चैव मृताहे बांधवस्य चेति। अयं गृहे न कार्यः॥ न गृहे मोचयेन्नीलं कामयन् पुष्क
लं फलमिति कालिकापुराणात्॥ कामधेनौ॥ वत्सराभ्यंतरे पित्रोर्वृषस्योत्सर्गकर्माणि। वृद्धि
[illegible]र्वीतत तदन्यत्र समारभेत्॥ तत्त्वं संतु ब्राह्मे॥ लोहितो यस्तु वर्णेन मुखे पुच्छे च पांडुरः
[illegible]रविषाणाभ्यां स नीलो वृष उच्यते। श्वेतवर्णस्तु मुख्यादीनि प्रमाणानि श्यामस्य वाभ्ये

विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनायुधैः। वैश्यः प्रतोदं रश्मीन्वा यष्टिं शूद्रः कृतक्रियः। शुद्धिन
त्वेदेवलः॥ अथाह सुनिवृत्तेषु सुस्नाताः कृतमंगलाः। आशौचाद्विप्रमुच्यंते ब्राह्मणान्स्व
स्तिवाच्य च। याज्ञवल्क्यः॥ आद्यमेकादशेहनि। क्षत्रियाद्येराशौचेप्येकादशेह्नि श्राद्धं कार्यं।
आद्यं श्राद्धमशुद्धोपि कुर्यादेकादशेहनि। कर्तृस्तात्कालिकी शुद्धिरशुद्धिः पुनरेव स इति हेमा
द्रौ शंखोक्तेः। पैठीनसिः॥ एकादशेह्नि यच्छ्राद्धं तत्सामान्यमुदाहृतं। चतुर्णामपि वर्णानां
सूतकं तु पृथक्पृथक्॥ यत्तु मरीचिः॥ आशौचानंतरं सम्यक्पिंडदानं समाप्यते। ततः श्रा
द्धं प्रदातव्यं सर्ववर्णेष्वयं विधिरिति। तत्सर्ववर्णानां दशाहाशौचपरं। यत्तु विष्णुः॥ अथाशौ
चापगमे इति॥ पंचगौडग्रंथे हारीतः॥ श्वोभूते एकोद्दिष्टं कुर्यात्। यच्चैवं जवापः। ऊर्ध्वं दश
म्या अपरेद्युरिति तद्विप्रविषयं। एतेन दशमपिंडोत्कर्षपक्षे अवयवपिंडसमाप्तौ कथमेका
दशाहे श्राद्धमिति मूर्खोक्तिः परास्ता। वचनादाशौचमध्य इव तत्राप्यविरोधात्॥ भविष्ये॥
एकादशेभ्यो विप्रेभ्यो दद्यादेकादशेहनि। भोजनं तत्र चैकस्मै ब्राह्मणाय महात्मने॥ यत्तु मा
त्स्ये॥ एकादशेहनि तथा विप्रानेकादशैव तु। क्षत्रादिः सूतकांते तु भोजयेदयुजो द्विजानि
ति तद्युग्मगणश्राद्धपरमिति मदनपारिजातः॥ गौडास्तु अस्माद्वचनात्क्षत्रियादीनामाशौचां
ते एवेत्याहुः॥ रामायणेपि॥ समतीते दशाहे तु कृतशौचो यथाविधिः। चक्रे द्वादशिकं श्राद्धं
त्रयोदशिकमेव च। द्वादशिकं द्वादशाहे तीते श्राद्धं। त्रयोदशिकं चतुर्दशाह विधेयं सपिंडन
पाथेयादि। क्षत्रियाणां द्वादशाहाशौचे त्रयोदशेहन्येकोद्दिष्टं। चतुर्दशे सपिंडनं। द्विविध
वाक्यादेकादशाहाशौचांतयोर्विकल्प इत्येके॥ आद्यं शौचादौ युद्धहतादेरेकादशाहे
अन्येषामाशौचांत इति वपंकौर्मे॥ एकादशेह्नि कुर्वीत प्रेतमुद्दिश्य भावतः। द्वादशेवा
ह्नि कर्तव्यमनिंद्येप्यथवाहनि। निंद्यं प्रेतक्रियाकाल उक्तं। एकादशे तु निषेध इत्युक्तं प्राक्॥
बृहस्पतिः॥ वस्त्रालंकारशय्यादि पितुर्यद्वाहनादिकं। गंधमाल्यैः समभ्यर्च्य श्राद्धभोक्तेन
दर्पयेत्। श्रोत्रिया भोजनीयास्तु नव सप्त त्रयोदश। ज्ञानयोगाथवा निःस्वस्तथा चानिषये
परो देवयाज्ञिकनिबंधे। एकादशसु विप्रेषु प्रेतमावाह्य भोजयेत्। तत्राधापवशय्यादिर
ध्याद्यमिति स्मृतं॥ विष्णुः॥ एकवन्मंत्रानूहेनैकोद्दिष्टे। बहुवचनांतानेकवचनांतान्वदे
दित्यर्थः। एतद्दृष्टार्थत्वे॥ अस्य विप्रगोण कालमाह। हेमाद्रौ बौधायनः। एकोद्दिष्टं एवं
स्याद्द्वादशेहनि वा पुनः। अत ऊर्ध्वमयुग्मेषु कुर्वीताहःस्वशक्तितः। अर्धमासे यथा मासि
क्रतौ संवत्सरेपि वेति॥ तत्रैव लघुहारीतः॥ एकोद्दिष्टं तु कुर्वीत पाकेनैव सदा स्वयं। अभा
वे पाकपात्राणां तदहः समुपोषणं। गोभिलः॥ ब्राह्मणं भोजयेदाद्ये होतव्यमनलेथवा
पुनश्च भोजयेदेकं द्विरावृत्तिर्भवेदिति। एतदाद्यमासिकाद्याब्दिकयोः सिद्धमिति भट्टाः
युद्धहतादौ तु हेमाद्रौ पृथ्वीचंद्रोदये पैठीनसिः॥ सद्यः शौचेपि दातव्यं प्रेतस्यैकादशेहनि। स
एव दिवसस्तस्य श्राद्धशय्यासनादिषु। एवमेकाहादौ॥ अतोत्र द्वितीयेह्नि एकादशाहे
वरं तदोद्धूलपाणिः स्मार्तगौडश्वपराणः॥ एतेनाद्यमेकादशेहनीत्याशौचानंतर दिन

राजन्यकृष्यमाणे निशामय। तेनोपभुक्तं यत्किंचिद्वस्त्रवाहनभाजनं। यद्यदिष्टं च तस्यासीत्तत्त
सर्वं परिकल्पयेत्॥ तमेव पुरुषं हैमं तस्यां संस्थापयेत्तदा। पूजयित्वा प्रदातव्या मृतशय्या य
थोदिता॥ पाद्मे॥ मृतकाले द्वितीयेऽह्नि शय्यां दद्यात्सुलक्षणां। कांचनं पुरुषं तद्वत्फलवस्त्र
समन्वितं। संपूज्य द्विजदंपत्यं नानाभरणभूषितं। उपवेश्य तु शय्यायां मधुपर्कं ततो ददेत्।
रजतस्य तु पात्रेण दधिदुग्धसमन्वितं। अस्थिलालाटिकं गृह्य सूक्ष्मं कृत्वा सपायसं। भोजये
द्द्विजदांपत्यं विधिरेष सनातनः॥ एष एव विधिर्देयः पार्वतीये द्विजोत्तमैः। एतत्प्रतिग्रहेत
नैवोक्तं गृहीतायां तु तस्यां वै पुनः संस्कारमर्हति॥ शय्यादानफलं भविष्ये॥ स्वर्गे पुरंदरपु
रे सूर्यपुत्रालये तथा। सुखं वसत्यसौ जंतुः शय्यादानप्रभावतः। आभूतसंप्लवं यावत्तिष्ठत्या
तंकवर्जित इति॥ ॥अथोदकुंभः॥ हेमाद्रौ स्मृतिसमुच्चये। एकादशा
हात्प्रभृति घटस्तोयान्नसंयुतः। दिने दिने प्रदातव्यो यावत्संवत्सरं सुतैः। लौगाक्षिः॥ यस्य सं
वत्सरादर्वाक् सपिंडीकरणं भवेत्। मासिकं चोदकुंभं च देयं तस्यापि वत्सरं॥ उत्तरार्द्धे॥ तस्या
प्यन्नं सोदकुंभं दद्यात्संवत्सरं द्विजे इति याज्ञवल्क्यपाठः॥ सपिंडनापकर्षेऽस्यापकर्षशास्त्रं बा
धकमिदमिति शूलपाणिः॥ तन्न॥ प्रकृतिविकाराभावेन तदंतन्यायाविषयत्वात्॥ मात्स्ये॥
यावदब्दं च यो दद्यादुदकुंभं विमत्सरः। प्रेतायान्नसमायुक्तं सोऽश्वमेधफलं लभेत्॥ केचित्त्रयो
दशाहमारभ्याहुस्तन्निर्मूलं॥ अत्र देवयाज्ञिकः॥ सपिंडनापकर्षे सांवत्सरं। यावदुदकुंभ
मर्वागेव दद्यान्नोर्ध्वं। प्रेतलोकगतस्यान्नं सोदकुंभं प्रयच्छतेति। गोविंदराजस्तु विष्णूक्तेः॥
अन्नं चैव स्वशक्त्यानु संख्यां कृत्वाब्दिकावधि। दातव्यं ब्राह्मणे स्कंदघटादेर्निष्क्रयं तु वा। अ
पि श्राद्धशतैर्दत्तैरुदकुंभं विना नरः। दरिद्रो दुःखितस्तात भ्रमति च भवार्णवे। तेनापकृष्य
दातव्यं प्रेतस्याप्युदकुंभकामिति। गोभिलभाष्यस्कांदाच्च। सपिंडनात्प्रागेव तस्य विधानादूर्ध्वं
निषेधादित्याह॥ तन्न॥ उदकुंभपार्वणविधानानुपपत्तेरेवं व्याख्यायां मानाभावान्मिताक्ष
रादिविरोधाच्च। वचनं यदि समूलं तदा वृद्ध्यापकर्षविषयत्वेन। प्रेतश्राद्धानि सर्वाणि सपिंडीक
रणात्तथेति हेमाद्रौ प्राख्यापनोक्तेः। तस्याप्यन्नं सोदकुंभमिति। याज्ञवल्क्यविरोधाच्च॥ मद
नरत्ने गौतमः॥ अदैवं पार्वणं श्राद्धं सोदकुंभमधर्मकं। कुर्यात्प्रत्याब्दिकान् श्राद्धान्संकल्प
विधिनान्वहं। अधर्मकं ब्रह्मचर्यादिनियमहीनं। एतन्मासिकवदेकोद्दिष्टं पार्वणं वा कार्यं॥
अपरार्के तु॥ सपिंडीकरणे वृत्ते पृथक्त्वं नोपपद्यते। पृथक्त्वे तु कृते पश्चात्पुनः कार्या सपिंडतेति
लघुहारीतोक्तेः। तथापि। तस्याप्यन्नं सोदकुंभं देयं संवत्सरं द्विजे इति याज्ञवल्कीयेन तस्यैकत्वोक्तेः
सपिंडनोत्तरमप्येकोद्दिष्टमेवेत्याह। अत्र पिंडदानं कृताकृतं। अहरहरन्नमस्मै ब्राह्मणायोद
कुंभं च दद्यात्पिंडमप्येके निपृणंतीति हेमाद्रौ पारस्करोक्तेः॥ श्राद्धाशक्तौ पिंडमात्रमिति गौडाः
॥ तन्न॥ अपिशब्दबाधापत्तेः। हारीतः॥ मृते पितरि वै पुत्रः पिंडमब्दं समाचरेत्। अन्नं कुंभं
च विप्राय प्रेतनिर्देशवन्मतः। प्रेतशब्दोच्चारणेनेति हलायुधः॥ यद्वा॥ प्रेतस्य निर्देशो यत्र
तदेकोद्दिष्टं तद्वन्मत इत्यर्थः। अत्राशौचांतदिनाद्यावदब्दांतं वत्सरपूर्तेः शौचं नाधिकारिवि

तानिमस्य सोपि नीलउक्तो मात्स्यादौ॥ देवीपुराणे॥ चतस्रो वत्सिका भद्रा देवाः संभवतो पिबाः पतु
पंठति॥ वृषोत्सर्जनवेलायां वृषाभावे कथंचन। मृद्भिः पिष्टैश्च दर्भैर्वा वृषं कृत्वा विमोचयेत्॥ नद्या
कृतेवृषोत्सर्गो होमवान्नकारयेदिति। तन्निर्मूलं॥ तद्विधिर्हेमाद्रौ भट्टकृतौ चज्ञेयः। अत्र देव
याज्ञिकेन वृषोत्सर्गः स्वेपुरुषसूक्तेन विष्णुरूपिणे तो देशेन विष्णुतर्पणमुक्तं। तत्र मूलं चिंत्यं।
नारस्कारः॥ सव्येन पाणिना पुच्छं समालभ्य वृषस्य तु दक्षिणेनाप्स्वादाय सतिलाः सकुश
स्ततः। प्रेतगोत्रं समुच्चार्य अमुकस्मै इति ब्रुवन्। एष एव मयादत्तस्तं तारयतु सर्वदा। सहेमः
सतिलं भूमौ विमुच्चार्य्य विनिक्षिपेत्॥ तथा॥ विधारयेन्नतं कश्चिन्न च कश्चन वाहयेत्।
नदोहयेच्च ना धेनुं न च कश्चन वंधयेत्। स्त्रीषु विशेषः संग्रहे। पतिपुत्रवती नारी भर्तुरग्रे मृता
यदि। वृषोत्सर्गं न कुर्वीत गां तु दद्यात्पयस्विनी। पतिपुत्रयोः साहित्यं विवक्षितं। अन्वारोहणे
पिंडदानमेवेत्युक्तं प्राक्। आशौचांतरे पि वृषोत्सर्गो यमासिकशय्यादिदानादेवेत्युक्तं। कि
मानिवंधे सत्यं तरे। सूतके मृतके चैव द्वितीये मृतके यदि। पिंडदानं प्रकुर्वीत वृषोत्सर्गं तथैव
च। तद्ध्यानस्तूतकं कर्म द्वादशैकादशाहिकं। शुद्धो वा यदि वा शुद्धः कुर्यादेवाविचारयन्निति।
॥ अथ पददानमुक्तं॥ देवजानीये गारुडे एकादशाहं प्रक्रम्य। त
दन्हि दीपने सर्वे द्वादशाहे विशेषतः। पदानि सर्ववस्तूनि वरिष्ठानि त्रयोदश। यो ददाति मृतस्ये
हजीवतो प्यात्महेतवे। सुखी भूत्वा महामार्गे वेतनैयसगच्छति तथा॥ आसनोपानहौ छ
त्रमुद्रिका च कमंडलुः भाजनं भाजनाधारं वस्त्राण्यष्ट विधं पदं। तथा॥ भाजनासनदाने
नमुद्रिकाभाजनेन च। आज्यपञ्चोपवीतेन पदं संपूर्णतां व्रजेत्॥ महिषी रथगोदानात्सु
खी भवति निश्चितं सर्वोपस्करयुक्तानि पदान्यत्र त्रयोदशं। यो ददाति मृतस्येह जीवन्नप्या
त्महेतवे सगच्छति परं स्थानं महाकष्टविवर्जितः। त्रयोदशपदानीत्थं प्रेतायदद्या मेहनि
दानवानि यथा शक्तिर्नेनासौ भीणितो भवेत्। अन्नं चैवोदकं चैवोपानहौ च कमंडलुः। छ
त्रं वस्त्रं तथा वष्टिर्लोहदंडं तथा द्रुमं। अग्नीष्टकां च दीपं च तिलांस्तांबूलमेव च। चंदनं
पुष्पदानं चोपदानानि चतुर्दश। यो श्वं रथं गजं वापि ब्राह्मणेभ्यः प्रतिपादयेत्। स्वमहिम्नानु
सारेण तत्तत्सुखमवाप्नुयादिति। अत्र मूलं चिंत्यं॥ ॥ अथ शय्यादानं॥
हेमाद्रौ भविष्ये॥ तस्माच्छय्यां समासाद्य सारदारुमयीं दृढां। दन्तपत्रचितां रम्यां हेमपादैर
लंकृतां। हंसतूलीप्रतिच्छन्नां शुभगंडोपधानिकां प्रच्छादनपटीयुक्तां गंधधूपादिवासितां
तस्यां संस्थापयेद्धैमं हरिं लक्ष्म्या समन्वितं। अत्र हरिस्थाने प्रेतं। उच्छीर्षके घृतभृतं कलशं
परिकल्पयेत् तांबूलं कुंकुमं क्षौद्रं कर्पूरागुरुचंदनं। दीपिकोपानहच्छत्रचामरासनभाजनं॥
पार्श्वेषु स्थापयेद्भक्त्या सप्तधान्यानि चैव हि। शयनस्थस्य भवति यदन्यदुपकारकं भृंगारकर
कार्यं तु पंचवर्णं वितानकं। मंत्रस्तु॥ यथा न कृष्णशयनं शून्यं सागरजातया। शय्या ममाप्य
शून्यास्तु तथा जन्मनि जन्मनि। यस्मादशून्यं शयनं केशवस्य शिवस्य च। अदेतदेव दत्तेवं
तस्य सकलं मणिपत्यं विसर्जयेत्। एकादशाहे पि तथा विधिरेष प्रकीर्तितः। विशेषं चात्र

तत्रस्यकथ्यमानंनिशामय।येनोपभुक्तंयत्किंचिद्वस्त्रवाहनभाजनं।यद्यदिष्टंचतस्यासीत्तत्तत्
सर्वंपरिकल्पयेत्॥तमेवपुरुषंहैमंतस्यांसंस्थापयेत्तदा।पूजयित्वाप्रदातव्यामृतशय्याय
थोदिता॥पाद्मे॥मृतकांतेद्वितीयेन्हिशय्यांदद्यात्सुलक्षणां।कांचनंपुरुषंतद्वत्फलवस्त्र
समन्वितं।संपूज्यद्विजदंपत्यं नानाभरणभूषितं।उपवेश्यतुशय्यायांमधुपर्कंततोददेत्
रजतस्यतुपात्रेणदधिदुग्धसमन्वितं।अस्थिलालाटिकंगृह्यसूक्ष्मंकृत्वासपायसं।भोजये
द्विजदांपत्यंविधिरेषसनातनः॥एषएवविधिर्दृष्टःपार्वतीयैर्द्विजोत्तमैः।एतत्स्त्रियाहेत
तैवोक्तं।गृहीतायांतुतस्यांवैपुनःसंस्कारमर्हति॥शय्यादानफलंभविष्ये॥स्वर्गेपुरंदरपु
रेसूर्यपुत्रालयेतथा।सुखंवसत्यसौजंतुःशय्यादानप्रभावतः।अभूतसंप्लवंयावत्तिष्ठत्या
तंकवर्जितइति॥ ॥अथोदकुंभः॥ हेमाद्रौस्मृतिसमुच्चये।एकादशा
हात्प्रभृतिघटस्तोयान्नसंयुतः।दिनेदिनेप्रदातव्योयावत्संवत्सरंसुतैः।लौगाक्षिः॥यस्यसंव
त्सरादर्वाक्सपिंडीकरणंभवेत्।मासिकंचोदकुंभंचदेयंतस्यापिवत्सरं॥उत्तरार्द्धे॥तस्या
प्यन्नंसोदकुंभंदद्यात्संवत्सरंद्विजेइति याज्ञवल्क्यपाठः॥सपिंडनापकर्षेस्यापकर्षेप्राप्तेवा
धकमिदमितिशूलपाणिः॥तन्न॥प्रकृतिविकारभावेनतदंतन्यायाविषयत्वात्॥मात्स्ये॥
यावदब्दंचयोदद्यादुदकुंभंविमत्सरः।प्रेतायान्नसमायुक्तंसोश्वमेधफलंलभेत्॥केचित्त्रयो
दशाहमारभ्याहुस्तन्निर्मूलं॥अत्रदेवयाज्ञिकः॥सपिंडनापकर्षेसांवत्सरं॥यावदुदकुंभ
मर्वागेवादद्यात्तोर्ध्वं।प्रेतलोकगतस्यान्नंसोदकुंभंप्रयच्छतेति।गोविंदराजधृतविष्णूक्तेः।
अन्नंचैवस्वशक्त्यातुसंख्यांकृत्वाब्दिकावधि।दातव्यंब्राह्मणेस्कंदघटादौनिष्क्रयंतुवा।अ
पिश्राद्धशतैर्दत्तैरुदकुंभंविनानराः।दरिद्रादुःखितास्तातभ्रमंतिचभवार्णवे।तेनापकृष्य
दातव्यंप्रेतस्याप्युदकुंभकामिति।गोभिलभाष्येस्कांदाच्च।सपिंडनात्प्रागेवतस्यविधानादूर्ध्वं
निषेधादित्याह॥तन्न॥उदकुंभेपार्वणविधानानुपपत्तेरेवंव्याख्यायांमानाभावान्मिताक्ष
रादिविरोधाच्च।वचनंयदिसमूलंतदापकर्षेविधत्ते।प्रेतश्राद्धानिसर्वाणिसपिंडीक
रणंतथेतिहेमाद्रौशंखवचनोक्तेः।तस्याप्यन्नंसोदकुंभमिति।याज्ञवल्क्यविरोधाच्च॥मद
नरत्नेगौतमः॥अदैवंपार्वणंश्राद्धंसोदकुंभमधर्मकं।कुर्यात्प्रत्याब्दिकान्श्राद्धान्संकल्प
विधिनान्वहं।अधर्मकंब्रह्मचर्यादिनियमहीनं।एतन्मासिकवदेकोद्दिष्टंपार्वणंवाकार्यं॥
अपरार्केतु॥सपिंडीकरणेवृत्तेपृथक्त्वंनोपपद्यते।पृथक्त्वेतुकृतेपश्चात्पुनःकार्यासपिंडनेति
लघुहारीतोक्तावपि।तस्याप्यन्नंसोदकुंभंदेयंसंवत्सरंद्विजेइतियाज्ञवल्कीयेनस्येत्येकत्वोक्तेः
सपिंडनोत्तरमप्येकोद्दिष्टमेवेत्याह।अत्रपिंडदानंकृताकृतं।अहरहरन्नमस्मैब्राह्मणायोद
कुंभंचदद्यात्पिंडमप्येकेनिपृणंतीतिहेमाद्रौपारस्करोक्तेः।श्राद्धाशक्तौपिंडमात्रमितिगौडाः
॥तन्न॥अपिशब्दबाधापत्तेः।हारीतः॥मृतेपितरिवैपुत्रःपिंडमब्दंसमाचरेत्।अन्नंकुंभं
चविप्रायप्रेतनिर्देशधर्मतः।प्रेतशब्दोच्चारणेनेतिहलायुधः॥यद्वा॥प्रेतस्यनिर्देशोयत्र
तदेकोद्दिष्टंतद्धर्मतइत्यर्थः।अत्राशौचांतदिनाद्यावदब्दांतंवत्सरपूर्तेःशौचेनाधिकारिवि

शेषणं। तेन मृतिदिनमारभ्यैतत्कार्यमिति केचित्। तन्न॥ हेमाद्रिवचनविरोधात्। मध्ये आशौ
चादिना बाधे तु लोप एव दार्शवत्। तथा प्रथमाब्दे दीपदानमुक्तं देवजानीये गारुडे॥ मृत्यहं दीप
को देयो मार्गे तु विषमे नरः। यावत्संवत्सरं वापि येन स सुखलिप्सया। याम्यसुखोदङ्मुखं दीपं दे
यागारे द्विजालये। कुर्याद्यावत्सुखं पित्र्ये मार्गे संकल्पसुस्थितं॥ ॥अथ मासिका
नि॥ ॥तानि कृत्वैव सपिंडनं कार्यं। तथा च गोभिललौगाक्षी॥ आद्यानि षोडशा
दत्वा नैव कुर्यात्सपिंडनं। आद्यानि षोडशापाद्य विदधीत सपिंडनं॥ तानि त्वाह जातूकर्ण्यः
द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा। त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश। आ
द्यषाण्मासिकाब्दिकशब्दाः ऊनमासिकोनषष्ठोनाब्दिकपराः हेमाद्रौ तु सपिंडीकरणं चैवमि
त्येतच्छ्राद्धषोडशमित्युत्तरार्द्धे पाठः। तदा आद्यमूनमासिकं द्वादशाहे। षाण्मासिकं ऊनष
ष्ठोनाब्दिकं इत्यर्थः। कात्यायनस्त्वन्यथाह॥ द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा।
सपिंडीकरणं चैव इत्येतच्छ्राद्धषोडशः। एकाहेन तु षाण्मासा यदा स्युरपि वा त्रिभिः। न्यूनः
संवत्सरश्चैव स्यातां षाण्मासिके तदा। द्विवचनादूनषष्ठोनाब्दिके इत्यर्थमाह। पृथ्वीचंद्रः। व्या
सस्त्वन्यथाह॥ द्वादशाहे त्रिपक्षे च षाण्मासे मासिकाब्दिके। श्राद्धानि षोडशैतानि संस्मृता
नि मनीषिभिः। द्वादशाहपदमूनमासिकपरं॥ तस्य द्वादशाहे प्रयुक्तेरिति कालादर्शः॥ मद
नरत्ने ब्राह्मे त्वन्यथोक्तं॥ नृणां तु पक्वदेहानां श्राद्धाः षोडश सर्वदा। चतुर्थे पंचमे चैव नवमै
कादशे तथा। ततो द्वादशभिर्मासैः श्राद्धा द्वादश संख्यया इति। चतुर्थ्यादीनि दिनानि। भविष्ये
त्वन्यथोक्तं॥ अस्थिसंचयने श्राद्धं त्रिपक्षे मासिकानि तु। रिक्तयोश्च तथा तिथ्योरिति न्यूनष
ष्ठोनाब्दिकपरमिति हेमाद्रिः। अत्र देशकुलशाखाभेदाद्व्यवस्थेति सर्वे निबंधाः॥ गालवः
ऊनषाण्मासिकं षष्ठे मासे वा प्यूनमासिकं। त्रैपाक्षिकं त्रिपक्षस्यादूनाब्दं द्वादशे तथा। ऊन
मासिके तु गोभिलः॥ मरणाद्द्वादशाहे स्यान्मासूनेवोनमासिकं॥ मदनरत्ने कालादर्शे च श्लो
कगौतमः॥ एकद्वित्रिदिनैरूने त्रिभागेनोन एव च। श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौ
तमः॥ क्रियानिबंधे तु उक्तं॥ सार्द्धएकादशे मासे सार्द्धे वै पंचमे तथा॥ ऊनाब्दमूनषाण्मा
सं भवेतां श्राद्धकर्मणी त्युक्तं। तत्र मूलं चिंत्यं॥ ऊनेषु वर्ज्यान्याह मरीचिः॥ द्विपुष्करे च नंदा
सु सिनीवाल्यां भृगोर्दिने। चतुर्दश्यां च नोनानि कृत्तिकासु त्रिपुष्करे। ज्योतिषे। त्रिपादृक्ष
तिथिभद्राभौममंदरविभिः सह। तदा त्रिपुष्करयोगो द्व्यृक्षयोगे द्विपुष्करः॥ गालवः॥ त्रिभि
र्वा दिवसैरूनं त्वेकेन द्वितयेन वा। आद्यादिषु च मासेषु कुर्यादूनाब्दिकाब्दिकं। एकन्यूनपक्षे
पंचम्यां मृतस्य तन्नीया त्रिभिर्न्यूने प्रतिपदि। द्व्यूने द्वितीयायामिति केचित्। माधवस्तु॥ षा
ण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते। मासिकानि स्वकीये तु दिवसे द्वादशेपि वेति॥ ये
ढीनसिवाक्ये ऊनषाण्मासिकमूनाब्दिकं च मृताहे पूर्वेद्युः कार्यमित्यर्थमाह पूर्वेद्युर्मृताह
दित्यर्थः। मासिकानि स्वकीये तु दिवसे इत्युक्तेः इदमेव युक्तं। मदनरत्नेप्येवं याज्ञवल्क्यः॥
मृताहनि तु कर्तव्यं प्रतिमासं तु वत्सरं। प्रतिसंवत्सरं चैवमाद्यमेकादशेहनि। अत्राद्यमासि

शेषणं। तेन प्रतिदिनमारंभे तन्न कार्यमिति केचित्। तन्न॥ हेमाद्रिस्थतद्वचोविरोधात्। मध्ये आशौ
चादिना बाधे तु लोप एव दर्शवत्। तथा ब्रह्मांडे दीपदानमुक्तं देवजानीये गाहदे॥ प्रत्यहं दीप
को देयो मार्गे तु विषमे नरैः। यावत्संवत्सरं वापि प्रेतस्य सुखलिप्सया। प्राङ्मुखोदङ्मुखं दीपं दे
वागारे द्विजालये। कुर्याद्याम्यमुखं पित्रे मन्त्रिः संकल्पसुस्थितः॥ ॥अथ मासिका
नि॥ ॥तानि च कृत्वैव सपिंडनं कार्यं। तथा च गोभिललौगाक्षी॥ श्राद्धानि षोडशा
दत्त्वा नैव कुर्यात्सपिंडनं। श्राद्धानि षोडशापाद्य विदधीत सपिंडनं॥ तानि चाह जातूकर्ण्यः
द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा। त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश॥ आ
द्यषाण्मासिकाब्दिकशब्दाः ऊनमासिकोनषष्ठोनाब्दिकपराः॥ हेमाद्रौ तु सपिंडीकरणं चैव इ
त्येतच्छ्राद्धषोडशमित्युत्तरार्द्धे पाठः। तदा आद्यमूनमासिकं द्वादशाहे। षाण्मासिकं ऊनष
ष्ठोनाब्दिके इत्यर्थः। कात्यायनस्त्वन्यथाह॥ द्वादश प्रतिमास्यानि आद्यषाण्मासिके तथा।
सपिंडीकरणं चैव इत्येतच्छ्राद्धषोडशः। एकाहेन तु षाण्मासा यदा स्युरपि वा त्रिभिः। न्यूनाः
संवत्सरश्चैवं स्यातां षाण्मासिके तदा॥ द्विवचनादूनषष्ठोनाब्दिके इत्यर्थमाह। पृथ्वीचंद्रः। व्या
सस्त्वन्यथाह॥ द्वादशाहे त्रिपक्षे च षाण्मासे मासिकाब्दिके। श्राद्धानि षोडशैतानि संस्मृता
नि मनीषिभिः। द्वादशाहपदमूनमासिकपरम्॥ तस्य द्वादशाहे युक्तेरिति कालादर्शः॥ मद
नरत्ने ब्राह्मे त्वन्यथोक्तं॥ नराणां त्यक्तदेहानां श्राद्धाः षोडश सर्वदा। चतुर्थे पंचमे चैव नवमै
कादशे तथा। ततो द्वादशभिर्मासैः श्राद्धा द्वादश संख्यया इति। चतुर्थ्यादीनि दिनानि। भविष्ये
त्वन्यथोक्तं॥ अस्थिसंचयनं श्राद्धं त्रिपक्षे मासिकानि तु। रिक्तयोश्च तथा तिथ्योरिति न्यूनष
ष्ठोनाब्दिकपरमिति हेमाद्रिः। अत्र देशकुलशाखाभेदाद्व्यवस्थेति सर्वे निबंधाः॥ गालवः
ऊनषाण्मासिकं षष्ठे मासे वाप्यूनमासिकं। त्रैपक्षिकं त्रिपक्षे स्यादूनाब्दं द्वादशे तथा॥ ऊन
मासिके तु गोभिलः॥ मरणाद्द्वादशाहे स्यान्मासस्यूने वोनमासिकं॥ मदनरत्ने कालादर्शे च श्लो
कगौतमः॥ एकद्वित्रिदिने न्यूने त्रिभागेनोन एव च। श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौ
तमः॥ क्वचिन्निबंधे तु॥ सार्द्धे एकादशे मासे सार्द्धे वै पंचमे तथा॥ ऊनाब्दमूनषाण्मा
सं भवेत्तं श्राद्धकर्मणीत्युक्तं। तन्मूलं चिंत्यं॥ ऊनेषु वर्ज्यान्याह मरीचिः॥ द्विपुष्करे च नंदा
सु सिनीवाल्यां भृगोर्दिने। चतुर्दश्यां च नोनानि कृत्तिकासु त्रिपुष्करे। ज्योतिषे। त्रिपादृक्षं
तिथिर्भद्रा भौमेज्यरविभिः सह। तदा त्रिपुष्करो योगो द्विपायोगे द्विपुष्करः॥ गालवः॥ त्रिभि
र्वा दिवसैरूनैस्त्वेकेन द्वितयेन वा। आद्यादिषु च मासेषु कुर्यादूनाब्दिकाब्दिकं। एकन्यूनपक्षे
पंचम्यां मृतस्य तृतीयां त्रिभिर्न्यूने प्रतिपदि। द्व्यूने द्वितीयायामिति केचित्। माधवस्तु॥ षा
ण्मासिकाब्दिके श्राद्धे स्यातां पूर्वेद्युरेव ते। मासिकानि स्वकीये तु दिवसे द्वादशेऽपि वेति॥ पै
ठीनसिवाक्ये ऊनषाण्मासिकमूनाब्दिकं च मृताहे पूर्वेद्युः कार्यमित्यर्थमाह पूर्वेद्युर्मृताह
दित्यर्थः॥ मासिकानि स्वकीये तु दिवसे इत्युक्तेः इदमेव युक्तं। मदनरत्नेऽप्येवं याज्ञवल्क्यः॥
मृताहनि तु कर्त्तव्यं प्रतिमासं तु वत्सरं प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि। अत्राद्यमासि

हं निर्वर्त्य पूर्वं दर्शाद्यथाविधि॥ अकुर्वीताग्निमान्विप्रो मातापित्रोः सपिंडतां॥ आशौचांतप्रथ
दर्शयोर्मध्ये कस्मिंश्चिदित्यर्थः। पित्रादीनां सपत्नीकानां देवतात्वे मातुरपि॥ तत्रानुप्रवेशान्मा
तुरपि साकृद्दर्शात्सपिंडनयुक्तमित्यपरार्कः। एवं पितामहादेरपि सपिंडनं प्राग्दर्शात्कार्यं। तेनवि
नापार्वणायोगात्। द्वादशाहे वा कार्यं। साग्निकस्तु यदा कर्त्ता प्रेतश्चानग्निमान्भवेत्। द्वादशाहे
भवेत्कार्यं सपिंडीकरणं सुतैरिति गोभिलोक्तेः। साग्नेः प्रेतस्य तु त्रिपक्षे प्रेतश्चेदाहिताग्निः स्यात्
कर्त्ता तग्निर्यदा भवेत्। सपिंडीकरणं तस्य कुर्यात्पक्षे तृतीयके इति सुमंतूक्तेः। साग्नेः मदनरत्ने
लघुहारीतः पिता त्वनग्निस्तु यदा वीरभवेत्कुर्यात्तदा गृही। प्रेतश्चेदग्निमांस्तस्यास्त्रिपक्षे वै सपिंडनं
द्वयोः साग्निकत्वे द्वादशाह एव। असाग्निकस्तु यदा कर्त्ता प्रेतो वाप्यग्निमान्भवेत्॥ द्वादशाहे तत
कार्यं सपिंडीकरणं पितुरिति तेनैवोक्तेः द्वयोरनग्नित्वे तु भविष्ये। सपिंडीकरणं कुर्याद्यजमान
स्त्वनग्निमान्। अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ द्वादशेऽहनि षण्मासे त्रिपक्षे वा त्रिमासि
एकादशेपि वा मासि मंगलस्याप्युपस्थितौ। कात्यायनगोभिलौ। यदह्नी वृद्धिरापद्यते। तत्र वृ
द्धिदिने एवेति वाचस्पतिः तत्प्रातर्वृद्धिनिमित्तकमिति। नियमात्सपिंडनस्य चापराह्णकालीनत्वेन
पूर्वेद्युर्वाधापत्तेः। वृद्धिदिने तत्पूर्वदिने चेति श्रीदत्तः। स्मार्त्तगौडस्तु वृद्धिपूर्वं वर्षांत्यश्वस्तणः सपि
डस्य प्रेतत्वनाशसहकारितेन परेद्युर्विशाहृद्यभावेपि तत्कर्त्तव्यतानिश्चयसहितमेव कालांतरक्रि
यमाणवृद्धिपूर्वं संस्कारसहकृतं प्रेतत्वनाशकमित्याह। तन्न। अकाले कृतस्य फलाजनकत्वात्। ए
तन्निमित्तनिश्चयवत एवाधिकाराद्वृद्ध्यभावे पितृत्वस्ततिरिति मिश्रोक्तिः परास्ता॥ वृद्धिपूर्वदिनस्य
वर्षांतस्य च कालांतरत्वेन निमित्तत्वाभावात्। तेन पुनः कार्यमित्यन्ये। मदनरत्ने पुलस्त्यः॥ निरग्नि
कः सपिंडत्वं पितुर्मातुश्च धर्मतः। पूर्णे संवत्सरे कुर्याद्वृद्धिर्वा यदहर्भवेत्॥ चतुर्विंशतिमते॥
सपिंडीकरणं चाब्दे संपूर्णेऽभ्युदयेऽपि वा। द्वादशाहे तु केषांचिन्मतं चैकादशे तथा। पृथ्वीचंद्रोदये
बौधायनः॥ ॥अथ सपिंडीकरणम्॥ त्रिपक्षे वा तृतीये वा मासि
षष्ठे चैकादशे वा द्वादशाहे वैकादशाहे वेति। एतत्क्रमे विष्णुः॥ मासिकार्थं द्वादशाहे श्राद्धं
कृत्वा त्रयोदशेऽह्नि वा। कुर्यान्मंत्रवर्जं हि शूद्राणां द्वादशेऽह्नि संवत्सराभ्यंतरे यद्यधिमासो भवेत्तदा
मासिकार्थं दिनमेकं वर्धयेदिति आशौचांते द्वादशेऽहः सु मासिकानि तेष्वेवाद्य द्वादशाहि
ने यूनमासिकादीनि कृत्वा त्रयोदशेऽह्नि सपिंडनं कुर्यात्। अधिमासे तु चतुर्दशेऽह्नि कुर्यात्॥ शू
द्रस्य त्रयोदशे द्वादशेऽह्नीत्यस्य मासिकात्यदिनपरत्वादिति पृथ्वीचंद्रः। पैठीनसिः संवत्सरेण सज्ञे
नेन नवमे मासीत्येके अत्र साग्नेरनग्नेर्वोक्तः कालाभावे त्रिपक्षादिसंवत्सरांता अनुकल्पा ज्ञेयाः। कल्प
तरुस्त्वग्नेर्वृद्धिनिश्चयएव सर्वेऽपकर्षप्रकार इत्याह। तन्न॥ यदहर्वेति स्मार्ते अप्युक्ते यद्यपि वृद्धिनि
मित्तोपकर्षो निरग्नेरेवोक्तस्तथापि साग्नावपि ज्ञेयः। उक्तकालासंभवे वर्षांताद्गौणकालव
द्धेरपि प्राप्तेः वक्ष्यमाणगोभिलवचनात्। अयातयामतां न भवेत्तु तरस्यादिति दोषस्तुल्यविशे
षात्। अपरार्के पृथ्वीचंद्रादिस्तरसोप्येवं। अत्र वृद्धिपदं चूडोपनयनविवाहमात्रपरं। सीमंतादौ
तु वृद्धिश्राद्धलोप एवेत्याचार्यचूडामणिः पुंसवनाद्यन्नप्राशनांतेष्वावश्यके त्वपकर्ष इति। आ

स्तानि द्वादशाहादौ सपिंडनात्पूर्वं कृतान्यपि वृद्धिं विनापकर्षे पुनः स्वकाले कार्याणि ॥ यस्य संवत्सरा
दर्वाक् सपिंडीकरणं कृतम् मासिकं चोदकुंभं च देयं तस्यापि वत्सरमिति मदनरत्ने चांगिरसोक्तेः
न चेदं मासिकानामापकर्षं विधत्ते । किंतु सपिंडनोर्ध्वं स्वकालानुष्ठानमेवेति वाच्यं श्राद्धानि
षोडशादत्वा नतु कुर्यात्सपिंडतामिति विरोधात् । यस्य संवत्सरादर्वाग्विहिता तु सपिंडता । वि
धिवत्तानि कुर्वीत पुनः श्राद्धानि षोडशेति माधवीये गोभिलोक्तेश्च । अर्वाक् संवत्सराद्यस्य सपि
डीकरणं कृतं । षोडशानां द्विरावृत्तिं कुर्यादित्याह गौतम इति तत्रैव सपिंडतागोभिलोक्तेः । षोड
शत्वं चैकादशाहसपिंडनपक्षे । तत्राद्यमासिकस्य कालसत्वात् । अन्यपक्षे तु यथासंभवं ज्ञेयं
॥ यत्तु दीपिकायां ॥ अनुमासिकानि तु चरेत्तान्येव सापिंड्यतः अतः पश्चाद्द्वादशेत्युक्ते कृतानां
न पुनः कृतिरित्युक्तं न देतद्विरोधाच्चिन्त्यं ॥ यत्तु गौडाः ॥ सपिंडीकरणान्तानु शेषाण्येतत्रिमासवै
रिति शातातपोक्तेर्मासिकानामेतत्त्वविमोक्षार्थत्वात्सपिंडनापकर्षेण तन्न्यायेन तेषाम
प्यपकर्षान्मासिकानां न पुनः कृतिः । यत्तु मासिकं चोदकुंभं चेति लौगाक्ष्यादिवचनं तन्निर्मूलं ।
समूलत्वेपि दार्शपरं तेत्याहुः । तेउक्तवक्ष्यमाणवचोनिबंधविरोधान्मूर्खा उत्युपेक्ष्याः । यत्तु मिता
क्षरायां सपिंडनोर्ध्वं स्वकाल एव कार्याणि । अपकर्षस्त्वनुकल्प इत्युक्तम् । तदपि पूर्वविरोधा
च्चिन्त्यं । तेन वृद्धिं विनापकर्षे पुनः कृतिः । अर्वाक् संवत्सराद्यस्य सपिंडीकरणं भवेत् । प्रेतत्वमिह त
स्यापि ज्ञेयं संवत्सरं त्वपेत्यग्निपुराणात् । वृद्धिनिमित्तापकर्षे त्वस्यैव तन्निवृत्तिः । अन्यथा वृद्ध्य
संभवादिति शूलपाणिः ॥ कार्ष्णाजिनिः सपिंडीकरणादर्वाग् पक्ष्यमाणान्यपि । पुनरप्यपक
र्षेत्तेन च पुनरनिषेधनात् । निषेधं चाह कात्यायनः । निर्वर्त्य वृद्धितंत्रं तु मासिकानि तु तंत्रयेत् ।
अयातयाममरणं न भवेत्पुनरस्य त्विति । द्विरनुष्ठानं चोत्तरेषामेव न पूर्वेषां स्वकालकृतानां ।
तदाह माधवीये कार्ष्णाजिनिः । अर्वाग्वद्याद्यत्र यत्र सपिंडीकरणं कृतं । तदूर्ध्वं मासिकानां स्या
द्यथाकालमनुष्ठितिः ॥ हेमाद्रौ शंखायनः ॥ प्रेतश्राद्धानि शिष्टानि सपिंडीकरणं तथा । अ
पकृष्यापि कुर्वीत कर्तुं नांदीमुखं द्विजः । वृद्धिं विनापकर्षे दोषमाहोशनाः ॥ वृद्धिश्राद्धविही
नस्तु प्रेतश्राद्धानि यश्चरेत् । स श्राद्धी नरके घोरे पितृभिः सह मज्जतीति ॥ आधानेपकर्षमाह
हेमाद्रावुशनाः । पितुः सपिंडीकरणं वार्षिके मृतवासरे । आधानाद्युपसंप्राप्तावेतत्प्रागपि व
त्सरात् । विशेषस्तूक्तो विवाहनिर्णये क एवः ॥ नवश्राद्धं मासिकं च यद्यदंतरितं भवेत् । त
त्तदुत्तरसातंत्रादनुष्ठेयं प्रचक्षते ॥ गारुडेपि ॥ आपद्यपकृतं तत्तु कुर्यादूर्ध्वं मृतेहनि ॥

॥ ॥ अथ सपिंडीकरणं ॥ माधवीये हारीतः ॥ यातु पूर्वममावास्या
मृताहाद्दशमी भवेत् । सपिंडीकरणं तस्यां कुर्यादेवमतोग्निमान् ॥ मृताहादूर्ध्वं दशमी एकाद
शीत्यर्थः ॥ सपिंडीकरणं कुर्यात् पूर्वं दर्शेग्निमान्सुतः । परतो दशरात्रस्य पूर्णे त्वब्दे तथेतरे
इति कार्ष्णाजिनिस्मृतेः । आहिताग्नेस्तेन विनाश्रौतपिंडपितृयज्ञासिद्धेः । तदाह गालवः । स
पिंडीकरणमेतेन तेन कं पदमास्थिते । आहिताग्नेः सिनीवाल्यां पितृयज्ञः प्रवर्तते । मदनरत्ने
प्रजापतिः । नासपिंड्याग्निमान्पुत्रः पितृयज्ञं समाचरेत् । अपरार्के कात्यायनः ॥ एकादशा

हनिर्वर्त्यं पूर्वं दर्शो यथाविधि॥ अकुर्वीताग्निमान् विप्रो मातापित्रोः सपिंडनं॥ आशौचांतप्रथम
दर्शयोर्मध्ये कस्मिंश्चिद्दिने इत्यर्थः। पित्रादीनां सपत्नीकानां देवतात्वे मातुरपि॥ तत्रानुप्रवेशान्मा
तु[illegible] इत्यपरार्के॥ एवं पितामहादेरपि सपिंडनं प्राग्दर्शात्कार्यं तेन वि
नापार्वणायोगात्। द्वादशाहे वा कार्यं। साग्निकस्तु यदा कर्ता प्रेतश्चानग्निमान् भवेत्। द्वादशाहे
भवेत्कार्यं सपिंडीकरणं सुतैरिति गोभिलोक्तेः। साग्नेः प्रेतस्य तु त्रिपक्षे प्रेतश्चेदाहिताग्निः स्यात्
कर्तानग्निर्यदा भवेत्। सपिंडीकरणं तस्य कुर्यात्पक्षे तृतीयके इति सुमंतूक्तेः। साग्नेः मदनरत्ने
लघुहारीतः। पित्र्यं त्वग्निस्तु यदा वीरः भवेत्कुर्यात्तदा गृही। प्रेतश्चेदग्निमांस्तु स्यात् त्रिपक्षे वै सपिंडनं
द्वयोः साग्निकत्वे द्वादशाह एव। साग्निकस्तु यदा कर्ता प्रेतो वाप्यग्निमान् भवेत्॥ द्वादशाहे तदा
कार्यं सपिंडीकरणं पितुरिति तेनैवोक्तेः। द्वयोरनग्नित्वे तु भविष्ये। सपिंडीकरणं कुर्यात् यजमान
स्त्वनग्निमान्। अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ द्वादशाहे निषण्मासे त्रिपक्षे वा त्रिमासिव
एकादशे पि वा मासि मंगलस्याप्युपस्थिते। कात्यायनगोभिलौ। यदहर्वा वृद्धिरापद्यते। तत्र हरि
दिने एवेति वाचस्पतिः। तन्न प्रातर्वृद्धिनिमित्तकमिति। नियमात्सपिंडनस्य चापराह्णकालीनत्वेन
पूर्वत्वबाधापत्तेः। वृद्धिदिनात्पूर्वदिने चेति श्रीदत्तः। स्मार्तगौडास्तु वृद्धिः पूर्वं वर्षांत्यश्रवणः सपि
डस्य प्रेतत्वनाशसहकारित्वेन परेद्युर्विशाद्ध्यभावे पितृकर्तव्यतानिश्चयसहितमेव कालांतरक्रि
यमाणवृद्धिपूर्वेसरणसहकृतं प्रेतत्वनाशकमित्याह। तन्न। काले कृतस्य फलाजनकत्वात्। एते
न निमित्तनिश्चयवत एवाधिकाराद्ध्यभावे पितृस्तृप्तिरिति मिश्रोक्तिः परास्ता॥ वृद्धिपूर्वदिनस्य
वर्षांतस्य च कालांगत्वेन निमित्तत्वाभावात्। तेन पुनः कार्यमित्यन्ये। मदनरत्ने पुलस्त्यः॥ निरग्नि
कः सपिंडत्वं पितुर्मातुश्च धर्मतः। पूर्णे संवत्सरे कुर्यात् वृद्धिर्वा यदहर्भवेत्॥ चतुर्विंशतिमते॥
सपिंडीकरणं चाब्दे संपूर्णेभ्युदये पि वा। द्वादशाहे तु केषांचिन्मते चैकादशे तथा॥ पृथ्वीचंद्रोदये
बौधायनः॥

॥अथ सपिंडीकरणम्॥

त्रिपक्षे वा तृतीये वा मासि
षष्ठे चैकादशे वा द्वादशाहे वै कादशाहे वेति। एतत्क्रमे विष्णुः॥ मासिकार्थं द्वादशाहे श्राद्धं
कृत्वात्र योदशेन्हि वा। कुर्यात्प्रेतवर्जं हि शूद्राणां द्वादशेन्हि संवत्सराभ्यंतरे यद्यधिमासो भवेत्तदा
मासिकार्थे दिनमेकं वर्धयेदिति आशौचोत्तरं द्वादशाहः सुमासिकानि तथैवाद्ये द्वादशादि
नेषूनमासिकादीनि कृत्वा त्रयोदशेन्हि सपिंडनं कुर्यात्। अधिमासे तु चतुर्दशेन्हि कुर्यात्॥ शू
द्रेण योदशे द्वादशे न्हीत्यस्य मासिकान्यदिनपरत्वादिति पृथ्वीचंद्रः। पैठीनसिः संवत्सरांते सज्जं
नेन वर्षमासीत्येके अत्र साग्नेरनर्वाक्ते कालाभावे त्रिपक्षादिसंवत्सरांता अनुकल्पा ज्ञेयाः। कल्प
तरुत्वस्य वृद्धिनिश्चय एव सर्वेषकर्षप्रकारमित्याह। तन्न॥ यदहर्वेति स्यात् अश्रुते यद्यपि वृद्धिनि
मित्तोपकर्षो निरग्नेरेवोक्तस्तथापि साग्नावपि ज्ञेयः। उक्तकालासंभवे वर्षांतादिगौणकालव
दृद्धेरपि प्राप्तेः वक्ष्यमाणगोभिलवचनात्। अयातयामप्रेतत्वं भवेत्पुत्रस्य त्विति दीपस्तुल्यविशे
षाच्च। अपरार्के पृथ्वीचंद्रादिस्वरसो प्येवं। अत्र वृद्धिपदं चूडोपनयनविवाहमात्रपरं। सीमंतादे
तु वृद्धिश्राद्धलोप एवेत्याचार्यचूडामणिः। पुंसवनाद्यन्नप्राशनांतेष्वावश्यकेष्वपकर्षेति। आ

ऽपि नैकः स्यात्सागरेऽपि॥ बृहस्पतिः। अन्वयायो भवेत्पश्चिन्नकृते वृद्धिकर्मणि। न चैव पितामात्रव
पित्रा कुर्यात्सपिंडनं। गर्भाधानस्य कृत्यत्वात्तरेऽपि संभवात्। अन्यथाश्राद्धपर्यन्तं वर्गाधानं च मै
थुनं। इति देवलेन संस्कारकर्मे मैथुननिषेधाच्च। ततश्चापकर्षे इति श्राद्धकौमुद्यादयः। तत्र च तस्मा
न्नान्ये भार्गामिति निषेधाद्गर्भाधानेऽपकर्षस्यावश्यकत्वं वर्ज्ये इति मैथुने दोषाभावाच्च
पितामहमरणे गौत्रस्य वृद्धौ नापकर्षः तस्य महागुरुत्वाभावात्। तत्र तदूर्ध्वं भोगवृद्धिश्राद्धमिति
श्राद्धचंद्रिका॥ तन्न। आतावेत्यादौ तद्भावेऽप्यपकर्षोक्तेः। तेन निर्देशोऽप्युपलक्षणं। आह॥
आनंत्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात्॥ अस्थितत्वाच्छरीरस्य द्वादशाहः प्रशस्यते॥ एत
दाशौचांततृतीयदिनोपलक्षणं। सर्वेषामेव वर्णानामाशौचांते सपिंडनमिति निर्णयामृते का
त्यायनोक्तेः सर्वेषामिति त्रैवर्णिकपरं। शूद्राणां त्वाशौचमध्येऽमंत्रकं हि शूद्राणां द्वादशेऽहनि की
र्तितमिति विष्णूक्तेः। एतच्च शूद्रकारि शूद्रविषयमित्यपरार्के कल्पतरौ च। वृद्धमनुः। द्वादशेऽह
नि विप्राणामाशौचांते तु भूभुजां। वैश्यानां तु त्रिपक्षादावथवा स्यात्सपिंडनं। निर्णयामृते गोभि
लः। द्वादशाहादिकालेषु प्रमादादननुष्ठितं। सपिंडीकरणं कुर्यात्कालेषूत्तरभाविषु। इदं साग्ने
रुक्तकालासंभवे गौणकालविधानार्थमिति मदनपारिजातः मदनरत्नेऽप्येवं॥ ऋष्यशृंगः॥
सपिंडीकरणं श्राद्धमुक्तकालेन चेत्कृतं। सौदेहे चैव रोहिण्यां मैत्रभे वा समाचरेत्। कालाद
र्शेऽपि॥ एकादशेऽह्नि द्वादशे त्रिपक्षे वा त्रिमासि वा। षष्ठे चैकादशे वाब्दे संपूर्णे वा शुभागमे।
सपिंडीकरणस्यान्त्यमष्टौ कालाः प्रकीर्तिताः॥ साग्नेः कर्तुर्मुमावाद्यो मते साग्नेस्तृतीयकः।
अनग्नेस्तु द्वितीयाद्याः सप्त कालाः मुनीरिताः। रोहिण्यां रौद्रहस्तेषु मैत्रभे वापि तच्चरेत्॥ नारद
संहितायां तु॥ सपिंडीकरणं कार्यं वत्सरे वार्द्धवत्सरे। त्रिमासे वा त्रिपक्षे वा मासि वा द्वादशेऽहि
चेत्युक्तं। वत्सरेऽतीते तत्तेयं ततः सपिंडीकरणं वत्सरात्परतः स्थितमिति भविष्योक्तेः। पितुः सपिंडी
करणं वार्षिके मृतवासरे इत्युशनसोक्तेश्च। पूर्णे संवत्सरे पिंडः षोडशः परिकीर्तितः। तेनैव च
सपिंडत्वं तेनैवाब्दिकमिष्यते इति हेमाद्रौ वचनाच्च॥ अस्यानाकरत्वोक्तिर्मूर्खोक्तिरेव। यत्तु
पूर्णे संवत्सरे कुर्यात्सपिंडीकरणं सुतः। एकोद्दिष्टं च तत्रैव मृताहनि समापयेदिति धवलनिबंधे
जाबाल्युक्तेः॥ पुत्रः सपिंडनं कृत्वा कुर्यात्स्नानं सचेलकं। एकोद्दिष्टं ततः कुर्यात्कृतपे तन्मि
वारये इति स्वल्पमात्स्योक्तेश्चाब्दिकं तद्दिने पुनः कार्यमिति केचित्। तन्निर्मूलत्वाद्धेमाद्रिवि
रोधाच्चोपेक्ष्याः। षोडशत्वं च सपिंडनस्य षोडशश्राद्धांतर्भावपक्षे। स्मृत्यर्थसारे तु वर्षांत
तद्दिने संवत्सरविमोक्षश्राद्धं सपिंडनं च कृत्वा परेद्युर्मृताहे वार्षिकं कार्यमित्युक्तं। गौडास्त्व
प्येवमाहुः। तत्पूर्वविरोधाच्चिंत्यं। तच्च पुत्रे सति नान्यः कुर्यात्। श्राद्धानि षोडशादत्वा नतु
कुर्यात्सपिंडनं। प्रोषितावसिते पुत्रः कालादतिचिरादपीति। माधवीयोक्तेः। षोडशश्राद्धा
नां वर्षादूर्ध्वं कालाभावे पितान्यद्दत्वा तत्कुर्यात्। किंतु दत्त्वैव तानि। यदि कनिष्ठभ्रातारि
नाकृतानि तदा सपिंडनमेव कुर्यादित्यपरार्कः। सपिंडने तु कनिष्ठानां नैवाधिकार इत्यर्थः।
तत्रैव॥ स्मृत्यनादथवा मोहात्यकृता चेत्सपिंडता। तत्रापि विधिवत्कार्या कालादति चि

रादपि॥ तेष्वपि ज्येष्ठस्यैवाधिकारः॥ ज्येष्ठेन जातमात्रेण पुत्री भवति मानव इति मनूक्तेः। अपरार्के प्रचेता अपि॥ एकादशाद्याः क्रमशो ज्येष्ठस्य विधिवत्क्रियाः॥ कुर्युर्नैकैकशः श्राद्धमाब्दिकं तु पृथक्पृथक्॥ मरीचिः॥ सर्वेषामनुमतं कृत्वा ज्येष्ठेनैव तु यत्कृतं। द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्॥ यत्तु वाचस्पतिशूलपाणिभ्यामुक्तं द्रव्यदानानुमत्याभावे कनिष्ठैः पृथक्कार्यमिति॥ तन्न॥ एवकारस्य तदभावेपि पृथक्करणाभावार्थत्वात्॥ अथादेरिव॥ ज्येष्ठसत्त्वे कनिष्ठानामनधिकाराच्च। अत एव तेषां प्रत्यवायमात्रं आहिताग्निः कनिष्ठस्तु कुर्यादेव। अन्यथा पितृयज्ञासिद्धेः॥ एवमावश्यकत्वादावपि कनिष्ठोन्यः सपिंडो वा कुर्यात्। भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव च। सहपिंडक्रियां कृत्वा कुर्यादभ्युदयं ततः। तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते इति मदनरत्ने लघुहारीतवचनात्। वृद्ध्यनंतरं प्रथमाब्दमध्येपि काम्यं कुर्यात्। वृद्ध्यभावे तु प्रथमाब्दमध्येपि काम्यं कुर्यात्। वृद्ध्यभावे तु प्रथमाब्दादूर्ध्वमेवेत्यर्थः। काम्योक्तेरनावश्यकेष्टापूर्तादौ नापकर्षः। एतच्च भ्रातृपुत्रादिसंस्कारे प्राप्ताधिकारस्य नांदीश्राद्धाधिकारार्थं। अभ्युदयपदं च नांदीश्राद्धनिमित्तकर्ममात्रपरमिति हेमाद्रिः॥ तेन ज्येष्ठे देशांतरस्थे कनिष्ठः सपिंडनं पित्रेव वृद्धिं कृत्वा पुत्रसंस्कारं कुर्यादिति। श्रीदत्तोक्तिः परास्ता॥ भ्रातृशिष्याद्युक्तेर्नांदीश्राद्धे स्वदेवतामात्रपरोपकर्षस्तत्पराः। अस्य क्रममात्रपरत्वाद्वृद्धिकर्त्रैव सपिंडनं कुर्यादिति न नियम इति गौडाः। अत एव कन्याया मातृमरणे भ्रात्रा पिंडने कृते पितुर्दानाधिकारः शूलपाणिस्तु। महागुरौ तभूते वृद्धिकर्म न कल्पते इति निषेधात् मृतस्य भ्रात्रादेः सपिंडनं कृत्वा न तु पुत्रकन्यादेरभ्युदयं कुर्यादित्याहुः स्वपुत्रसंस्कारे संस्कार्यपितुः सपिंडनं विना वृद्धौ देवतात्वाभावादित्याह। तन्न॥ देवतापकृष्टापकर्षस्य निरस्तत्वात्। वृद्धिं विना कनिष्ठेन कृते तु विदेशस्थेन ज्येष्ठेन पुनः कार्यं। यवीयसा कृतं कर्म यत्तच्छब्दं विहाय तु। तज्ज्यायसापि कर्तव्यं सपिंडीकरणं पुनरिति स्मृतेः। ज्येष्ठेन वा कनिष्ठेन सपिंडीकरणे कृते। व्याघ्रपादे मातापित्रोः कनिष्ठेनेति वा पाठः। देशांतरगतानां च पुत्राणां तु कथं भवेत्। श्रुत्वा तु वपनं कार्यं दशाहांतं तिलोदकं। ततः सपिंडीकरणं कुर्यादेकादशेहनि। द्वादशाहेन कर्तव्यमिति शातातपोब्रवीदिति वचनाच्च इति मदनः। सिंगाभट्टीयेप्येवं। पूर्ववचने च मूलं चिंत्यं स्मृत्यर्थसारे तु विभक्ता अवृद्धिका भ्रातृपुत्राः पृथक् सपिंडीकरणं कुर्युरित्युक्तं। अत्र दत्तकस्य तत्पुत्रादीनां च विशेषः प्रागुक्तः। केचित्तु वृद्धिं विनापि कनिष्ठस्य सपिंडनमाहुः। मातापित्रोर्मृते काले ज्येष्ठे देशांतरस्थिते। कनिष्ठेन प्रकर्तव्यं सपिंडीकरणं तदेति कार्ष्णाजिनिस्मृतेः। गते वारेधिते ज्येष्ठे पित्रा वा मेलिते सति। षण्मासान्त निवर्तेत तदा कार्यं कनीयसा। संवर्तः॥ पुनः सपिंडीकरणं श्राद्धं पार्वणवच्चरेत्। अर्घ्यसंयोजनं नैव पिंडसंयोजनं न चेति। तद्वचसां निर्मूलत्वात्सोपि नावसिते पुत्र इत्यादिविरोधाच्चोपेक्ष्याः। क्रममृतौ तु हेमाद्रौ गालवः। मृते पितरि यस्याथ विद्यते च पितामहः। तेन देयास्त्रयः पिंडाः प्रपितामहपूर्वकाः। तेभ्यस्तु पैतृकः पिंडो नियोक्तव्यस्तु पूर्ववत्। मातर्यग्रमृतायां च विद्यते च पितामही। प्रपितामही पूर्वेस्तु कार्यस्तत्राप्ययं विधिः। एवं पितामहजीवने तत्पित्रादिभिर्ज्ञेयं॥ तदाह सुमंतुः।

त्रयाणामपि पिंडानामेकेनापि सपिंडने। पितृत्वमश्नुते प्रेतः इति धर्मो व्यवस्थितः। यत्तु व्युत्क्रमात्प्रमी
तानां नैव कार्या सपिंडतेति। तन्मातापितृभर्तृभिन्नविषयं। व्युत्क्रमेण मृतानामत्र सपिंडीकृतिरि
ष्यते। यदि माता यदि पिता भर्ता नैष विधिः स्मृतः इति माधवीये स्कांदोक्तेः। मदनरत्नादौ चैवं।
अत्र प्रपितामहादिभिः पितुः सपिंडने कृते पितामहे मृते तत्सपिंडने सति पुनस्तेन सह पितुः सपि
डनं कार्यमिति हेमाद्रिमतमाह। अन्ये नेत्यमन्यंते। तत्त्वं तु पितुः सपिंडनाभावे पितामहेन सह पु
नः कार्यं। नतु तत्त्वे त्रयाणामपि पिंडानामेकेनापि सपिंडने। पितृत्वमश्नुते प्रेत इति धर्मो व्यवस्थि
तः॥ ॥इति विष्णुधर्मोक्तेः। पितामहे प्रपितामहे वा पुत्रांतरैरसंस्कृतेप्यसंस्कृतनाभावे
व पितुः सपिंडनं कुर्यात्। असंस्कृतौ न संस्कार्यौ पूर्वौ पौत्रप्रपौत्रकौ। पितरं तत्र संस्कुर्यादिति
कात्यायनोऽब्रवीदिति छंदोगपरिशिष्टात्। असंस्कृतौ तु संहार्याविति केचित्। सपिंडीकृताविति तु
तत्त्वं। अत एवोक्तं तत्रैव। पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वा। पितामहेन पितरं संस्कुर्यादि
ति निश्चयः। पापिष्ठमकृतसपिंडनं नतु पतितादि। अभिशस्तपतितभ्रूणहस्त्रियश्चातिचारि
णी न संसृजेदिति वैजवापोक्तेः। पापकर्मिणो न संसृजेरन्निति गौतमोक्तेश्चेत्युक्तं निर्णयामृते
पूर्वयोः पुत्राभावे तु पौत्रः कुर्यादेव। पितामहपितुः पश्चात्पंचत्वं यदि गच्छति। पौत्रेणैकादशा
हादि कर्तव्यं श्राद्धषोडशं। नैतत्पौत्रेण कर्तव्यं पुत्रवांश्चेत्पितामहः। पितुः सपिंडनां कृत्वा कुर्यान्मा
सानुमासिकं इति कात्यायनोक्तेः। अपरार्के शूलपाणौ चैवं। तेन सपिंडनस्यानित्यत्वात्कृतसपि
डनयोरेव पार्वणानुप्रवेश इति पूर्वोक्तिः परास्ताः॥ कृते सपिंडीकरणे प्रेतः पार्वणभाग्भवेत् इति
हारीतविरोधाच्चेति केचित्। पुत्रांतराभावे पितामहवार्षिकमप्याहुः। तत्र श्राद्धषोडशमिति नि
यमात्। उक्त्वाभवन्येव पितामहस्य चेद्दद्यादेकोद्दिष्टं न पार्वणमिति। वाचस्पतिधृतगर्गोक्तेः।
त्रयाणां यौगपद्ये तु भ्राताभ्यां पितुः सपिंडनं कृत्वा पूर्वयोः कुर्यात् पितामहे मृते दशाहांतः पितृ
मृतौ पितुः संस्कारं कृत्वा पितामहस्य पुनः सर्वमावर्तयेत्। वृत्ते दशाहे नैवं अशक्तः पित्रानुज्ञा
तेन पौत्रेण पितामहश्राद्धे प्रक्रांते पितृमृतौ तदाशौचं वहन्नेव पौत्रः पितामहकर्म कुर्यात्। प्रक्रां
तत्वादिति। मदनपारिजात पृथ्वीचंद्रौ। यत्तु उत्तरात्रितये रौद्रे रोहिणीयाम्यत्वाष्ट्रविपितृभेषु
चाग्निभे श्मश्रुकर्म सकलं च वर्जयेत्। तेन कार्यमपि वृद्धिमान् इति सपिंडनप्रकरणे पाठान्मुख्य
काले निषिद्धर्क्षे सपिंडनापकर्षः सर्वकालेषु तद्वत्तेन तद्गौण्येव इत्युक्तं मासोक्तानि षोडशश्रा
द्धानि कार्याणीति वाचस्पतिमिश्राः॥ तन्न॥ अस्य परिभाषात्वेन सावकाशकर्मपरत्वात्
असपिंडमात्रदैवत्यभावाच्च॥ ॥अथ स्त्रीषूच्यते॥ हेमाद्रौ
बृहस्पतिः॥ भर्तृगोत्रेण नाम्ना च मातुः कुर्यात्सपिंडनम्। मनुभविष्ये। पितृगोत्रं समुत्सृज्य
न कुर्याद्भर्तृगोत्रत इति। तदासुरादिविवाहे द्वापरं। आसुरादिविवाहेषु पितृगोत्रेण धर्मवि
दिति बृहच्छातातपोक्तेः। तच्चानेकपक्षेषु पितामह्या पत्या मातामहेन वा इत्युक्तेः। तत्र व्य
वस्थोक्ता। भविष्ये। जीवत्पिता पितामह्या मातुः कुर्यात्सपिंडनं पितरि म्रियमाणे तु तेनैवाप
रे सति। शंखः॥ मातुः सपिंडीकरणं कथं कार्यं भवेत्सुतैः। पितामह्यादिभिः सार्धं सपिंडी

करणं स्मृतं। येन केनापि मातुः सापिंड्ये पुत्रान्वष्टकादौ मातुः॥ श्राद्धं पृथगुक्तं तत्र पितामह्या सह का
र्यं नांदीमुखाष्टकाश्राद्धे गयायां च मृतेहनि। पितामह्यादिभिः सार्द्धं मातुः श्राद्धं समाचरेदिति
शातातपोक्तेः। अपुत्रायां तु पैठीनसिः। अपुत्रायां मृतायां तु पतिः कुर्यात्सपिंडनं। श्वश्र्वादिभिः
सहैवास्याः सपिंडीकरणं भवेत्॥ यत्तु लघुहारीतः॥ पुत्रेणैव तु कर्तव्यं सपिंडीकरणं स्त्रियाः।
पुरुषस्य पुनस्त्वन्ये भ्रातृपुत्रादयोपि चेति॥ यच्च मार्कंडेयपुराणे॥ सपिंडीकरणं स्त्रीणां पुत्रा
भावे न विद्यते इति। तत्पुत्रं पत्यभावे ज्ञेयं। अत्र सपत्नीपुत्रोपि ज्ञेयः। बह्वीनामेकपत्नीनामे
कश्चेत्पुत्रिणी भवेत्। सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुरिति मनूक्तेरेतत्परत्वात्॥ यत्तु शा
तातपः॥ मृते पितरि मातुस्तु न च कार्या सपिंडता। पितुरेव सपिंडत्वे तस्या अपि कृतं भवेदिति
तदशक्तपरं। केषांचिद्वामतमिति हेमाद्रिः॥ अन्वारोहणे तु भर्त्रैव सापिंड्यं। मृतामनुगताना
थं सा तेन सह पिंडताम्॥ अर्हति स्वर्गवासं च यावदाभूतसंप्लवमिति शातातपोक्तेः। पत्न्याश्चैके
न कर्तव्यं सपिंडीकरणं स्त्रियाः। सा मृतापि हि तेनैक्यं गता मंत्राहुतिव्रतैरिति यमोक्तेश्च। अ
त्रैकशब्दः पितामह्यादिपक्षनिवृत्त्यर्थः। पतिपरं वर्गपरं। सपिंडनस्य पार्वणैकोद्दिष्टरूप
त्वादिति माधवः। कल्पतरुमदनरत्नादयः। अन्ये तु नैवेकेनाहुः। तेन भर्त्रा सहैवास्याः सपिंडी
करणं भवेदित्येवकारश्रवणात्। पृथ्वीचंद्रोदये विकल्प उक्तः। इदं तु तत्त्वं। यदा हेमाद्रि
मते द्वयोरेकः पिंडस्तदा वर्गेण सह यदा माधवपृथ्वीचंद्रादिमते पृथक् पिंडस्तदैकेन पत्न्येव
वचनाच्चैकेनापि। अतो मातृपिंडमसपिंडीकृते नैव पतिपिंडेन संयोज्यैकाकृतपिंडद्वयं तत्पि
त्रादिभिः संयोजयेत्। अंत्यपक्ष एव युक्तः। स्मृत्यर्थसारे तु। अन्वारोहणे नेकदिनमरणे स्त्रियाः
सपिंडनं नास्ति भर्त्रा कृते स्त्रिया अपि कृतं भवतीत्युक्तं तन्मतांतरमस्तु। इदं ब्राह्मादिविवाहेषु
ज्ञेयं। आसुरादिषु तु शातातपः। तन्मात्रा तत्पितामह्या तत्श्वश्र्वा वा सपिंडनं आसुरादिविवा
हेषु विपान्तनायो विना भवेत्। मातामह्या मातुः पितामह्या तत्पितामह्या वेत्यर्थः। सुमंतुः॥
पित्रा पितामहे योज्यः पूर्णे संवत्सरे सुतः। माता मातामहे तद्वदित्याह भगवाञ्छिवः। इदमा
सुरादिपरं। पुत्रिकापुत्रपरं चोक्तं प्राक्। हेमाद्रिस्तु। ब्राह्मादिष्वपि सर्वत्र देशभेदाद्विकल्प
माह। अत एव गुर्जरेषु कोकिलमतानुसारिणां मातृमातामहप्रमातामहा इति श्राद्धप्रयो
गः सपिंडनं च दृश्यते। हेमाद्रावापस्तंबोपि॥ कोकिलस्य यथा पुत्रा अन्यसंचयजीविनः
पुष्णाति स्वकुलं याति एवं नारी मृता सती। यदपि विज्ञानेश्वरेण मातामहेन मातुः सापिंड्ये
पितृश्राद्धवन्मातृश्राद्धं नित्यमित्याह। यच्च वृद्धिश्राद्धे छंदोगपरिशिष्टे षड्भ्यः पितृभ्य
स्तदनु श्राद्धदानमुपक्रमेदिति। तद्विषयमेव मातुः पृथक् श्राद्धाभावात्। अत एव हेमाद्रौ
भविष्ये। मातुः सपिंडनं प्रक्रम्य उदितेनुदिते चैव होमभेदो यथा भवेत्। तथा कुलक्रमा
यातमाचारं चाचरेद्बुध इत्युक्तं। अस्य बह्वाचपवादमाह। तत्रैव व्याघ्रपादः। कुर्यान्माताम
हश्राद्धं सर्वदा मातृश्वैकं। विधिज्ञो विधिमास्थाय परं मातामहादितः। केचिदेतत्पु
त्रिकापुत्रपरमाहुः। पत्युः सापिंड्यमाह लौगाक्षिः॥ सर्वाभावे स्वयं पत्न्यः स्वभर्तॄणाम

मेत्रक्तं। सपिंडीकरणं कुर्यात्ततः पार्वणमेव चेति। मनुवचनं॥ अपुत्रस्य परेतस्य नैव कुर्यात्सपिंडना
मिति। यच्चापस्तंबः। अपुत्रा ये मृताः केचित्पुरुषा वा स्त्रियोपि वा। तेषां सपिंडनाभावादेकोद्दिष्टं
न पार्वणमिति तत्पुत्रोत्पादनादिनिषेधप्रशंसार्थमिति माधवः। सपिंडीकरणादूर्ध्वमेकोद्दिष्टं विधी
यते। अपुत्राणां च सर्वेषामपत्नीनां तथैव चेति। हेमाद्रौ यत्तेन प्रोक्तं च। अन्यत्तु विधवास्वदर्शना
द्विकल्पमाहुः। स्मृत्यर्थसारेपि। ब्रह्मचारिणामनपत्यानां च सपिंडनं नास्ति तेषां सदैकोद्दिष्टमेवान्यु
रूपमृतानां सपिंडाकार्यं न वा केचित्सर्वेषां सपिंडनमाहुरिति। अपत्नीकस्य तु विशेषो रत्नाकरे कारि
कायां। भ्राता वा भ्रातृपुत्रो वा सपिंडः शिष्य एव वा। सपिंडीकरणं कुर्यात्पुत्रहीने मृते सति। सर्वेत
पुत्रविहीनस्य पत्नी कुर्यात्सपिंडनं। ऋत्विजं कारयेद्वापि पुरोहितमथापि वा। तत्सहद्रादिति मुने
स्मार्यो नेयाः सपिंडना। युक्ता मातृप्रमीतापि तद्विना मेनता भुवं। पुनः सपिंडनं तेषां कुर्यात्तेन पिता
महे इति अत्र मूलं मृग्यं। यतीनां सपिंडनं नास्ति। किंत्वेकादशेऽह्नि पार्वणं कार्यं। तदपि त्रिदंडिनः
एकदंड्यादीनां न तद्विनेत्युक्तं प्राक् दंडग्रहणात्सर्वे मृतेनु दाहादि सपिंडनांतं सर्वं कार्यमिति मद
नरत्नः। सपिंडनविधिमाह। बैजवापः। समाप्ते संवत्सरे चत्वार्युदपात्राणि प्रयुनक्त्येकं प्रेताय
त्रीणि पितृभ्यः प्रेतपात्रं पितृपात्रेष्वासिंचेति ये समाना इति द्वाभ्यामेवं पिंडान्याभिमृशत्येषवोनु
नः प्रेत पितरस्तं ददामि वः शिवं भवतु शेषाणां जायतां चिरजीविनः समानी वसंगच्छध्वमिति
मधुपितृत्वापि देवरहितमेकार्घ्यैकपवित्रकं। नैवाग्नौ करणं तत्र तच्चावाहनवर्जितमिति मार्कंडे
येनोक्तं तथापि॥ सपिंडीकरणश्राद्धं देवपूर्वं नियोजयेदिति हारीतविरोधाद्विकल्पः प्रेतांशवार
पं। अत्र मकामकालौ वैश्वदेवौ विनुक्तौ॥ शाकमैत्रायणीयपरिशिष्टे॥ पित्र्यविप्रकरे होमः सा
ग्नेरपि भवेदिह। यत्तु गोभिलः। अनुक्तकालेप्यपित्र्युक्तमेणमृतावपि। आमेन वापि सांपिं
डं हेम्नावापि प्रकल्पयेदिति। तदापदि मातापितृभिन्नपरं आपन्नपितृकुर्वीत श्राद्धमामेन
कर्हिचिदिति तेनैवोक्तेः। शुद्धितत्वे कामधेनौ लघुहारीतः। सपिंडीकरणं यावदतमेन श्राद्धं तु
षोडश। पक्वान्नेनैव कर्तव्यं सामिषेण द्विजातिभिः विश्वप्रकाशे॥ प्रेतः सपिंडनादूर्ध्वं पितृलो
केतु गच्छति। कुर्याच्छ्राद्धमनुपाथेयं द्वितीयेह्नि सपिंडनात्। स्मृत्यर्थसारेप्येवं। ततो वृद्धिश्राद्धं कुर्या
त्। एतन्मलमासेपि कार्यं। अधिमासे न कर्तव्यं श्राद्धमाब्दं पुरः तथा। तथैव काम्यमन्यकमेव
न्त्राण्मथमाब्दे। इति हेमाद्रौ हारीतोक्तेः॥ ॥इति कमलाकरभट्टकृते निर्णयसिंधौ
सपिंडीकरणम्॥ ॥अथ प्रथमाब्दे निषिद्धानि॥ हेमाद्रौ। स्नान
चैव महादानं स्वाध्यायं चाग्नितर्पणं। प्रथमेब्दे न कुर्वीत महागुरुनिपातने। अन्नतर्पणमिति शु
द्धितत्वे पाठः। अग्नितर्पणं लक्षहोमादि तत्त्वाधानं तु प्रथमाब्दे भवत्येव। तदाह हेमाद्रौ बृह
न्नाः। पितुः सपिंडीकरणं वार्षिके मृतवासरे। आधानाद्युपरोधात्त्रिवेनप्रागपि वत्सरात्। आस्थि
तं वृद्धिनिमित्तनित्यकर्म परं दिवोदासीये। महातीर्थस्य गमनमुपवासव्रतानि च। संवत्सरं न कु
र्वीत महागुरुनिपातने। इदं श्राद्धकौमुद्यां देवीपुराणस्थमुक्तं। गौडनिबंधे मात्स्ये। सपिंडीकर
णादूर्ध्वं प्रेतः पार्वणभुग्भवेत्। वृद्धिपूर्वेषु योग्यश्च गृहस्थश्च सदा भवेत्। वर्षांतसपिंडनाभावे:

नाधिकारीत्यर्थः। गृहस्थः सपिंडोपीत्यर्थः। अत एव येन कर्मण्यपनिवर्त्तेत चेन्नाभ्युदयक्रियां। आच
तुर्थे ततः पुंसि पंचमे शुभदं भवेदिति ज्योतिषे उक्तं माधवीये देवलः। प्रमीतो पितरौ यस्य देहस्तस्या
शुचिर्भवेत्। न दैवं नापि वा पित्र्यं यावत्पूर्णो न वत्सरः इदं वर्षांतसपिंडनपरं तथैव काम्यं यत्कर्म व
त्सरात्प्रथमादृते। इति लघुहारीताद्येकवाक्यत्वात्। वृद्धिनिमित्तापकर्षे तु वर्षमध्येपि॥ काम्यादि
भवत्येवेति गौडाः। पित्र्यं सपिंडनं। अत एव लौगाक्षिः॥ अन्येषां येन कार्यांवंधकत्वात्। आद्यं
श्राद्धमशुद्धोपि कुर्यादेकादशेऽहनीत्युक्तेश्च। एकं सपिंडनं पत्न्यादौ त्वपवादः। माधवीये ऋष्यशृंगः
पत्न्याः पुत्रस्य तत्पुत्रभ्रातृतत्तनयस्य च॥ स्नुषायास्तत्पितुश्चैव संयातमरणं यदि। अर्वागब्दात्
मातृपितृपूर्वं सापिंड्यमाचरेत्। लौगाक्षिः॥ पत्नी पुत्रस्तथा पौत्रो भ्राता तत्पुत्रका अपि। पितरौ च प
रेकस्मिन् म्रियेरन्वा सरेत्तदा। आद्यमेकादशे कुर्यात्त्रिपक्षे तु सपिंडनं। धवलनिबंधे। महागुरुनि
पाते तु येन कार्यं यथाविधिः। कुर्यात्संवत्सरादर्वागेकोद्दिष्टं न पार्वणं। भृगुः॥ माता चैव तथा
भ्राता भार्या पुत्रस्तथा स्नुषा। एषां मृतौ चरेच्छ्राद्धमन्यस्य न पुनः पितुः॥ एतदपि सपिंडनपरं।
पितुर्मृतावन्यस्य श्राद्धं न चरेदित्यर्थः। शुद्धितत्त्वे श्राद्धकौमुद्यां च देवलः॥ अन्यश्राद्धं परान्नं च
गंधमाल्यं च मैथुनं। वर्जयेद्गुरुपाते तु यावत्पूर्णो न वत्सरः। पारस्करभाष्ये बृहस्पतिः॥ पितर्युपर
ते पुत्रो मातुः श्राद्धान्निवर्तते। मातर्यपि च वृत्तायां पितुः श्राद्धादृते सुतः। मृतं पितरं विनान्यश्राद्धं
नेत्यर्थः। शुद्धितत्त्वे देवलः। महागुरुनिपाते तु काम्यं किंचिन्न चाचरेत्॥ आर्त्विज्यं ब्रह्मचर्यं च
देवपूजाक्रियां तथा एतत्सपिंडनात्प्रागिति केचित्। केचित्तु पित्रोरब्दमशौचं स्यात्षण्मासं मा
तुरेव च। त्रैमासिकं तु भार्यायास्तदर्धं भ्रातृपुत्रयोरिति स्मृतेः। सपत्नमातुरप्यर्थमाहुः। श्राद्धकौ
मुदीकारस्तु। द्वयोरेव महागुर्वोरब्दमेकमशौचकं। नान्यासामधिकाशौचं स्वजातिविहितात्कि
लेति। सम्यग्ज्ञात्वकर्णपविरोधान्निर्मूलमाह। हेमाद्रौ भविष्ये। गयाश्राद्धं मृतानां तु पूर्णेब्दे प्र
शस्यते त्रिस्थलीसेतौ गारुडे। तीर्थश्राद्धं गयाश्राद्धं श्राद्धमन्यच्च पैतृकं। अब्दमध्ये न कुर्वीत म
हागुरुविपत्तिषु। इदं चाब्दार्थसपिंडनाभावे। वृद्ध्यै सपिंडनापकर्षे त्वब्दमध्ये दर्शादिकार्यमेव। पितुः
सपिंडनं कृत्वा कुर्यान्मासानुमासिकमिति छंदोगपरिशिष्टात्। सपिंडीकरणादूर्ध्वं यतः पार्वण
भुग्भवेदिति मात्स्यात्। ततः प्रभृति वै प्रेतः पितृसामान्यमश्नुते। विंदते पितृलोकं च ततः श्राद्धं
प्रवर्तते इति हारीताच्चेति शूलपाणिः॥ यत्तु कात्यीयं सपिंडीकरणादूर्ध्वं न दद्यात्प्रतिमासिकं।
एकोद्दिष्टविधानेन दद्यादित्याह शौनक इति तत्रैकोद्दिष्टविधिना न दद्यादित्यन्वयः। तुर्यपादेन
पार्वणे विकल्प उक्तः। अत्रेदं तत्त्वं। वृद्धिं विनार्वागपि सपिंडनापकर्षे पितृत्वप्राप्तौ वर्षांत एव
क्रांते सपिंडीकरणे नरः संवत्सरात्परं। प्रेतदेहं परित्यज्य भोगदेहं प्रपद्यते इति विष्णुधर्मोक्तेः।
अर्वाक्संवत्सराद्यस्य सपिंडीकरणं भवेत्। प्रेतत्वमपि तस्यापि विज्ञेयं वत्सरं नृप। इत्यग्निपुराणा
च्च। तेन तत्काले पितृवद्धि दैवपित्र्येष्वनधिकारः वृद्धिनिमित्ते त्वनंतरमेव। अर्वाक्संवत्सराद्वृद्धौ
पूर्णे संवत्सरेपि वा। ये सपिंडीकृतास्तेषां न तेषां तु पृथक्क्रियेति। शातातपोक्तेः। तथैव काम्य
मिति हेमाद्रिस्तत्र हारीतोदिवशाच्चैवमिति। तथा। अस्थिक्षेपं गयाश्राद्धं श्राद्धं चापरपक्षिकं।

तैलेपेवं। तथा। एकादशपलं कांस्यं तदर्द्धं वा तदर्द्धकं। नव षट् त्रिपलं वापि दद्याद्दिमाय शक्तितः
तथान्यत्र॥ स्वगृह्योक्तविधानेन कृत्वाग्नेः स्थापनं ततः। अन्वाधानं निर्वपणं देवतानां तथाहुतिः
यमाय धर्मराजाय मृत्यवे चांतकाय च। वैवस्वताय कालाय सर्वभूतक्षयाय च। औदुंबराय दध्ना
य नीलाय परमेष्ठिने। वृकोदराय चित्राय चित्रगुप्ताय वै क्रमात्। विधिना वपणं कृत्वा एकैकामा
हुतिं हुनेत्। कृष्णां गां कृष्णवस्त्रं च हेमनिष्कसमन्वितां। दद्याद्दिमाय शांताय प्रीतो भवतु मे यमः
त्रिपादृक्षेप्येतदेव अपरार्के। पुनर्वसूत्तराषाढा कृत्तिकोत्तरफाल्गुनी। पूर्वाभाद्र विशाखा च त्रेप
मेतत्त्रिपादृभं। मयूरचित्रे गर्गः॥ मृतः श्मशानं पानीत उपजीवति मानवः। गृहे यस्य प्रविष्टोसौ ति
ष्ठेद्यक्र दाचन। अचिरान्मृत्युमायाति हृतदारपरिग्रहः। तत्र शांतिं प्रवक्ष्यामि धर्मराजमतं यथा
समीरणां घृताक्तानामग्ने हुत्वा सुखेधसः। औदुंबरीणां विधिवत्ततः शांतिकृता भवेत्। सावि
त्र्यष्टसहस्रेण क्षीरशांतिं च कारयेत्। कपिलां तिलकांस्यं च हुतांते भूरिदक्षिणेति॥

॥ ॥अथ ब्रह्मचारिमृतौ॥ शौनकः॥ ब्रह्मचारिमृतौ रीतिं कथयामि
समासतः। तत्रावकीर्णदोषस्य प्रायश्चित्तप्रशांतये। द्वादशाब्दं तदर्धं वा यथाशक्त्या समाचरेत्।
स्नातको ब्रह्मचारी च निधनं प्राप्नुयाद्यदि। संयोज्य चार्कविधिना संयोज्यौ तौ ततः परं। देशकालौ
स्मृत्वामुकगोत्रामुकनाम्नो मृतस्य ब्रह्मचारिणो व्रतविसर्गं करिष्ये। इत्युक्त्वाहेमानांदीश्राद्धं कृ
त्वा स्थंडिलप्रतिष्ठापनाधारणं च तत्स् भिर्व्याहृतिभिरग्नये व्रतपतये व्रतानुष्ठानकाफलसंपादना
य विश्वेभ्यो देवेभ्यश्चाज्यं हुत्वा स्विष्टकृदादिसमाप्य पुनर्देशकालौ स्मृत्वार्कविवाहं करिष्ये इ
त्युक्त्वा हेम्ना नांदीश्राद्धं कृत्वार्कशाखां शवं च हरिद्रयालिप्य पीतसूत्रेण वस्त्रयुग्मेन चावेष्ट्या
ग्निप्रतिष्ठाप्याद्यारांते अग्नये बृहस्पतये विवाहविधियोजकाय च। यस्मै त्वा कामकामायेति का
मायस्वाहा चेत्यष्टाज्याहुतीर्हुत्वा व्यस्ताभिः समस्ताभिर्व्याहृतिभिश्चाज्यं हुत्वा स्विष्टकृदादिस
माप्यार्कशाखां शवं च दहेत्। विधानमालायां॥ येषां कुले ब्रह्मचारी निधनं प्राप्नुयाद्यदि॥ तत्
कुलं क्षयमाप्नोति सोपि दुर्गतिमाप्नुयात्॥ मृतस्य त्रियमानस्य षडब्दं व्रतमाचरेत्। त्रिंशद्ब्र
ह्मचारिभ्यो दद्यात्कौपीनकाभवान्। हस्तमात्राः कर्णमात्रा दद्यात्कृष्णाजिनानि च। पादुकाछत्र
माल्यानि गोपीचंदनमेव च। मणिप्रवालमालाश्च भूषणादि समर्पयेत्। एवं कृते विधाने च विघ्नः
कोपि न जायते। अत्र मूलं मृग्यं॥ ॥ कुष्ठीमृतौ पद्मः॥ मृतस्य कुष्ठिनो देहं निख
नेद्दोषभूमिषु। वासरत्रितयं पश्चादुद्धृत्यान्यत्र तं दहेत्॥ गंगाप्लवनकार्ये निक्षेपविधिरुच्यते।
षडब्दव्रतचीर्णेन विधिनांत्यं क्रतुं चरेत्। ततोस्थिसंचयं तस्य गंगायां प्रक्षिपेत्सुधीः। मासि मासि
ततः कुर्यान्मासिकं श्राद्धविधानतः। संकल्पविधिना केचिन्न वदंति मनीषिणः। इत्येतत्कुष्ठि
मरणे कथितं शास्त्रकोविदैः। शुद्धितत्त्वे भविष्ये॥ शृणु कुष्ठगणं विप्र उत्तरोत्तरतो गुरून्।
विचर्चिका तु दद्रुश्च चर्चरीयस्तु नीपकः। विकटैरैणनामाश्चौदकृष्णश्वेतस्तथाष्टकमित्युक्त्वा
मृते च प्रापयेत्तीर्थमथवा तत्समूलकं। न पिंडं नोदकं कार्यं न च दानक्रियां चरेत्। मरणासीयपति
मासीयपूतः कुर्यात्कदाचन। यदि स्नेहाच्चरेद्दाहं पतिर्भ्रांत्या परं चरेत्। अकृतप्रायश्चित्तदु

स्यादिदाहेरंभायश्चित्तं। अतएव कुनख्यादिवत्कुष्ठिनोपिद्विदशरात्रं मूलपाणिनोक्तं। अतएवान्य
दीपकुष्ठिनो मरणांतमाशौचमुक्तं कौर्मे॥ क्रियाहीनस्य मूर्खस्य महारोगिण एव च। यथेष्टाचरण
स्याहुर्मरणांतमशौचकं॥ महारोगास्तु॥ वातव्याध्यश्मरीकुष्ठमेहोदरभगंदराः। अर्शांसि ग्रह
ण्यष्टौ महारोगाः प्रकीर्तिताः। इति॥ रजस्वलायास्तु शातातपः॥ रजस्वलायाः प्रेतायाः सं
स्कारादीनि नाचरेत्। ऊर्ध्वं त्रिरात्रात्स्नातां तां शवधर्मेण दाहयेत्। अतः प्रक्षाल्य काष्ठवद्वा त्र्य
होर्ध्वं दहेत्। संकटे तु मदनरत्ने स्मृत्यंतरे॥ उदक्या सूतिका वापि मृता स्याद्यदि तां तदा। आशौ
चे त्वतिक्रांते दाहयेद्दंतरापदि। उद्धृतेन तु तोयेन स्नापयित्वा तु मंत्रतः। आपोहिष्ठेति तिसृभि
र्हिरण्यवर्णाश्च तस्रभिः पवमानानुवाकेन यदंतीतिच सप्तभिः ततो यज्ञपवित्रेण गोमूत्रेण
यवाद्विजाः। स्नापयित्वान्यवसनेनाच्छाद्य शवधर्मतः। दाहादिकं ततः कुर्यात्प्रजापतिवचो
यथा। यज्ञपवित्रमापोअस्मानिति मितास्मरणाय। पंचभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलां
वस्त्रांतरावृतां कृत्वा दाहयेद्विधिपूर्वकं। गृह्यकारिकायां॥ अंतरिक्षमृतायै च वन्हावप्सु मृता
द्रतः। उदक्या सूतिका नारी चरेच्चांद्रायणत्रयं। ततो यवपिष्टेनालिप्याष्टोत्तरशतप्रर्णोदकैः सं
स्नाप्य भस्मगोमयमृत्कुशोदकपंचगव्यैः शुद्धोदकैरापोहिष्ठा पावमानीभिः संस्नाप्यान्यवस्त्रे
ण दग्धे देहेदिति भट्टाः॥ अत्र प्रायश्चित्तमाह बौधायनः॥ उदक्या सूतिकामृत्यौ चरेच्चांद्रायणत्रय
मिति सूतिकायास्तु। मिताक्षरायां॥ सूतिकायां मृतायां तु कथं कुर्वंति याज्ञिकाः॥ कुंभे सलि
लमादाय पंचगव्यं क्षिपेत्ततः। पुण्याभिरभिमंत्र्यापो वाचा शुद्धिं लभेत्ततः। तेनैव स्नापयित्वा
तु दाहं कुर्याद्यथाविधि। अब्लिंगाभिर्मंत्रिताभिर्वामदेव्याभिरेव च। अन्यैश्च वारुणैर्मंत्रैः संस्ना
प्य विधिना दहेत्। गृह्यकारिकायां॥ सूतिका मरणे प्राप्ते सर्वौषध्यनुलेपनं। अक्षतकीनुसंस्ट
शः शूर्पेणानुशांतं क्षिपेत्। प्रायश्चित्तविशेषस्तत्रैव। सूतिका तु यदा साध्वी विस्नाता मरणं गता।
त्रिवर्षश्रूणपर्यंतं सुध्येन कृच्छ्रेण सर्वदा। रद्वितीयत्र्यहे। सूतिका तु यदा साध्वी विस्नाता मरणं
गता। त्रिषण्णवदिनाद्यौगिकाब्देन विशुध्यति। ऊर्ध्वं तु॥ सूतिका तु यदा नारी मारणांश्चेव परित्य
जेत्। मासमेकावधिं यावत्त्रिभिः कृच्छ्रैर्विशुध्यति। गर्भिणीमृतौ तु मदनरत्ने शौनकः। गर्भिण्यु
दक्यासंस्कारं शिशुसंस्कारमेव च प्रवक्ष्यामि समासेन शौनकोहं द्विजन्मनां। गर्भिणीमरणे प्रा
प्ते गोमूत्रेण जलैः सह आपोहिष्ठादिभिर्मंत्रैः पोष्यभर्त्री समास्थितः। प्रेतं श्मशाने नीत्वाथो
ल्लिख्य सव्योदरं ततः पुत्रमादाय जीवश्चेत्तं नेदत्वा ग्रामयेत्। मृते तु तं शाययेत्तस्या वामे
निधाय च। उदरं चाव्रणं कुर्यात् एष दाहेन पूर्ववत्। मृद्दर्भकुशगोमूत्रैरापोहिष्ठादिभिस्त्रिभिः
स्नाप्य वाससाच्छाद्य वासोभिः स्वधर्मेण दाहयेत्। तत्रैव षडशीतिमते। गतासोर्गर्भिण्याः मृतायां
दक्षिणाशिरसं निधाय तस्या नाभिरंध्रात्सव्यमुदरं चतुरंगुलं हिरण्यगर्भः समवर्ततेति छि
त्वा गर्भश्चेन्माणालं नक्षाल्य निखनेत् यदि जीवत्तं मम पुत्रकेत्युक्त्वा। क्षेत्रियेत्वेति पंचभिः
स्नापयित्वा हिरण्यमंतर्धाय प्रभृतीनिधायाज्याहुतिभिरभिमंत्र्य पले स्तनः शय इति स्तनं पाययि
त्वा शिशुं ग्रामं प्रापयेद्दर्भच्छेदस्थले शनाय भायेति पंचाहुतीर्हुत्वा प्रमाणाय स्वाहा इत्स्वाहे

यनुवाकाभ्यां व्याहृत्या वाज्यं हुत्वा भिन्नमुदरेण सूत्रं संयथ्य घृतेनानुलिप्य ब्राह्मणपतिलान्गंगाभू
मिसुवर्णं दद्यादथ यथोक्तेन कल्पेन दहेत्। बौधायनेन तु। शनायुधायेति पंच होमानंतरं प्रयासा
यायासाय वियासाय संयासायोद्यासाय वयासाय शुचे। शोकाय तपते तपत्ये ब्रह्महत्यायै स
र्वस्मै इति स्वाहांतेन हुतयोप्यधिका उक्ताः। गृह्यकारिकायां॥ यदा गर्भवती नारी ससत्यसंस्थि
ता भवेत्। कुक्षिं भित्वा ततः शल्यं निर्हरेयद्विजीवति। मृतीतन्निखनेत्तत्तु प्रायश्चित्तमतः परं
सा त्रयस्त्रिंशता कृच्छ्रैः शुध्यते शल्यदोषतः। स गर्भदहनेन स्याद्वर्णजं वधपातकं। प्रायश्चित्तं
चरित्वा तु शुध्यंति पापकारिणः॥ दग्ध्वा तु गर्भसंयुक्तां त्रिरब्दं कृच्छ्रमाचरेत्॥

अथान्वारोहणं स्त्रीणामात्मनो भर्तुरेव च। सर्वपापक्षयकरं निरयोत्तारणाय च। अनेक
स्वर्गफलदं मुक्तिदं च तथैव च। जन्मांतरे च सौभाग्यधनपुत्रादिवृद्धिदं। देशकालौ स्मृत्वा रु
धती समाचरत्वं स्वर्गलोके महीयमानत्वमनुष्यलोकसमसंख्याद्यवच्छिन्नस्वर्गवासभ
र्तृसहितचतुर्दशेंद्राद्यवच्छिन्नकालिकत्वीउमानत्वमातृपितृश्वशुरकुलत्रयपूतत्व ब्रह्मघ्न
कृतघ्नपतिपुतत्वपत्युवियोगकामा भर्त्रा ज्वलच्चिताऽरोहणं करिष्ये। अनुगमने तु फल
मुल्लिख्यान्वारोहणं करिष्य इत्युक्त्वा हरिद्राकुंकुमांजनादियुतशूर्पाणि वायनैः संयुतानि च। ल
क्ष्मीनारायणो देवो बलसत्वगुणाश्रयः। गाढसत्वं च मे देयाद्वायनैः परितोषितः। सोपस्कराणि
शूर्पाणि सुवासिनिभ्यो दद्यात् मंत्रस्तु॥ लक्ष्मीनारायणो देवो बलसत्वगुणाश्रयः गाढसत्वं च
मे देयाद्वायनैः परितोषितः। सोपस्कराणि शूर्पाणि वायनैः संयुतानि च॥ लक्ष्मीनारायणप्री
त्यै सत्वकामा ददाम्यहं। अग्नेः समीपमागत्य पंचरत्नानि पल्लवे नीलांजनं तथा वध्वा मुखे मु
क्ताफलं न्यसेत्। ततोग्निं प्रार्थनं कृत्वा मंत्रेणानेन निश्चिते। स्वाहासंश्लेषनिर्विंसशर्वेगोत्र हु
ताशन सत्वमार्गप्रदानेन नयमां पत्युरंतिकं। ततोग्नावाज्येनाग्नये तेजोधिपतये विष्णवे स
त्वाधिपतये। कालाय धर्माधिपतये पृथिव्यै लोकाधिष्ठात्र्यै अद्भ्यो रसाधिष्ठात्रीभ्यः वायवे बला
धिपतये आकाशाय सर्वाधिपतये कालाय धर्माधिष्ठात्रे अद्भ्यः सर्वसाक्षिणीभ्यः ब्रह्मणे वे
दाधिपतये रुद्राय रुद्रेशानाधिपतये च हुत्वाग्निं प्रदक्षिणीकृत्य द्ददमुपलाच संपूज्य पुष्पांज
लिं गृहीत्वाग्निं प्रार्थयेत्। त्वमग्ने सर्वभूतानामंतश्चरसि साक्षिवत्। त्वमेव देव जानीषे न वि
दुर्यानि मानुषाः। अनुगच्छामि भर्तारं वैधव्यभयपीडिता। सत्वमार्गप्रदानेन नय मां भर्तुरं
तिकं। मंत्रमुच्चार्य शनकैः प्रविशेच्च हुताशनं गोडास्तु। इमा नारीरविधवा इति। ॐ इमाः प
तिव्रताः पुण्याः स्त्रियो याः पापाः सुशोभनाः। सह भर्तृशरीरेण संविशंतु विभावसुं इतिविमः पठे
दित्याहुः। कातरं तु। मेतो व्रते सुतो देवरः। शिष्यो वा उदीर्ष्वेति द्वाभ्यामुत्थापयेत्। एतन्महिमा
मिताक्षरादौ ज्ञेयः। पृथ्वीचंद्रोदये स्कांदे। अनुव्रजंतीं भर्तारं गृहात्पितृवनं मुदा। पदे पदे श्व
मेधस्य फलं प्राप्नोत्यनुत्तमं। प्रचेतागिरः। या स्त्री ब्राह्मणजातीया मृतं पतिमनुव्रजेत्। सा स्व
र्गमात्मघातेन नात्मानं न पतिं नयेदिति। यत्तु व्याघ्रपात्। न म्रियेत समं भर्त्रा ब्राह्मणी शोककर्षि
ता। नत्र सगति प्राप्नोति मरणादात्मघातिनीति। तत् पृथक् चितिपरं। पृथक्चितिं समारुह्य

नतिमार्गं तु महति। अन्यासां चैव नारीणां स्त्रीधर्मोऽयं परः स्मृतः। इत्युशनसोक्तेः। पृथक्चितिस्तु क्ष
त्रियादिपरा। न हि भिन्नजातौ देशान्तरमृते पत्यौ साध्वी तत्पादुकाद्वयं। निधायोरसि संशुद्धा प्रविशे
ज्जातवेदसं। ऋग्वेदवादात्। साध्वी स्त्री न भवेदात्मघातिनी त्र्यहाशौचे निवृत्ते तु श्राद्धं प्राप्नोति शा
श्वतं। इमा नारीरविधवा इति। ऋग्वेदवादः। त्र्यहाशौचमन्वारोहणपरमिति स्मार्त्ताः। निषेध
वाक्यानि प्रायश्चित्तार्थानि स्मृते॥ पतितेन वा सहमरणनिषेधपराणीत्याहुः। अस्थिदाहे पत्न्याश
दाहे वा न पृथक्चितिदोषः। अंगत्वेन साक्षात्पत्न्या वा शरीरतुल्यत्वात्। ननु ब्रह्मघ्नो वा कृतघ्नो
वा मित्रघ्नो वा भवेत्पतिः। पुनात्यविधवा नारी तमादाय मृतानुयेति हारीतीपतितमतिनदाहादि
निषेधेन सहगमनस्य दूरापास्तत्वादर्थवादमात्रमिति। पृथ्वीचंद्रः॥ जन्मान्तरीयपापवत्सहम
रणेनोद्धार इति स्मार्त्तगौडाः॥ शुद्धितत्त्वे व्यासः। दिनैकगम्यदेशस्था साध्वी चेत्कृतनिश्चया। न
दहेत्स्वामिनं तस्या यावदागमनं भवेत्। तत्रैव भविष्ये। ततो येन्ह्युदक्यायां मृते भर्त्तरि वै द्विजाः।
तस्यानुमरणार्थाय स्थापयेदेकरात्रकं। एकान्तितास्नाता साध्वी भर्त्तारं यानुगच्छति। नक्तनृपः कि
या कर्त्ता सन्त स्याश्वक्रियां चरेत्। एतद्दशाहान्तं यथाग्निदानादेतस्य पिंडं दद्यात्स एव हीति वा
यवीयोक्तेः। आपस्तंबः॥ चितिभ्रष्टा तु या नारी मोहाद्विचलिता भवेत्। प्राजापत्येन शुद्धेत्तस्मा
द्वै पातककर्मणः। तथा॥ अन्वारोहे तु नारीणां पत्युश्चैकोदकक्रिया। पिंडदानक्रिया तद्वच्छ्रा
द्धमाब्दिकं तथा। अन्वारोहे कृते पत्न्याः पृथक्पिंडं तिलांजलीन्। पृथक्पिंडेन कुर्वीत र
द्यादेकचितेन तथा। अन्यत्र प्रागुक्तं। इदं गर्भिणी बालापत्या सूतिका रजस्वला व्यभिचारिणी
भिन्नकार्यं। स्वैरिणीनां गर्भिणीनां पतितानां च योषितां। नास्ति पत्याग्निसंवेशः पतितो हित
स्याउभाविति मदनरत्ने स्मृतिसंग्रहोक्तेः। मदनरत्ने बृहस्पतिः॥ बालसंवर्द्धनं त्यक्त्वा बालापत्या
न गच्छति। व्रतोपवासनियतारक्षेद्गर्भं च गर्भिणी। ततोपरागादेरजस्वलासूतिकाचेति। पृथ्वी
चंद्रोदये गौडीयशुद्धितत्त्वे च पाठः॥ तत्रैव बृहन्नारदीयेपि॥ बालापत्याश्च गर्भिण्यो ह्यदृष्टऋ
तवस्तथा। रजस्वला राजसुते नारोहंति चितां शुभे इति। अत्र पतिमतालाभसंवीक्ष्यविशेषबहुम
ानमिति। भारताट्टग्वेदवादात्साध्वी स्त्रीति। ब्राह्मणं च पतिव्रतानामेवाधिकारो न दुष्टानां॥
यत्तु॥ व्यवमन्यवमाः सर्वे पतिं दुष्टेन चेतसा। वर्तन्ते याश्च सततं भर्त्तारं प्रतिकूलतः। भर्त्रानुमरणं
काले याः कुर्वन्ति तथाविधाः। कामात्क्रोधाद्भयान्मोहात्सर्वाः पूता भवन्तु ता इति। भारते तत्तत्र
निकृष्टाय पत्न्या स्तावकमिति पृथ्वीचंद्रः॥ ब्राह्मण्या एकचितिरेव न पृथक्चितिः। क्षत्रियादीनां पृथ
गेकां चेति कल्पतरुरत्नाकरमदनपारिजातादयः। शुद्धिचिंतामणौ चैवं तत्रान्वारोहस्ये [illegible]
च मध्ये तदूर्ध्वं श्राद्धे तु त्रिरात्रमध्ये एव दश पिंडाः। सहगमने तु भर्त्तृशौचानुसारेणैव पिंडदानं
च। अन्विताया: प्रदानं स्याद्दशपिंडस्य हेतुना। स्वाम्यशौचे व्यतीते तु तस्याः श्राद्धं प्रदीयते इ
ति शुद्धितत्त्वे शूलपाणौ च पैठीनसिस्मृतेः। संस्थितं पतिमालिंग्य प्रविशेद्या हुताशनं। तस्याः
पिंडादिकं देयं क्रमशः पतिपिंडवदिति जितको शूलपाणौ शुद्धितत्त्वधृतव्यासोक्तेश्च। यत्तु
प्रागुक्तं। यदा तु रजस्वलापि पत्नी मृते पत्यौ देशकालवशात्तदैवानुगच्छति तत्र शुद्धिप्रतीक्षणे।

तत्रविधिः देवयाज्ञिकनिबंधे। यदास्त्रियामुदक्यायांपतिः प्राणान्समुत्सृजेत्। द्रोणमेकंतुलानामवहन्यादिशुद्धये। मुशलाघातैस्तदस्कस्रवेयोनिमंडलात्। विरजस्कामन्यमानास्वचित्तेतदस्कक्षयं। दृष्ट्वाशौचंप्रकुर्वीतपंचमृत्तिकयापृथक्॥ त्रिंशद्विंशतिदेशाचगवोदत्वावहन्त्मात्। विप्राणांवचनात्कुर्यात्समारोहेहुताशनं नारीणांसरजस्कानामियंशुद्धिरुदाहृताः अत्रश्राद्धेदौनिर्णयः पूर्वमुक्तः॥ इतिकमलाकरभट्टकृतेनिर्णयसिंधौ अंत्यकर्मनिर्णयः॥

॥अग्निप्रवेशाशक्तौतु विष्णुः॥ मृतेभर्तरिब्रह्मचर्येंतदन्वारोहणंचेति। ब्रह्मचर्येचभर्त्तैसहानुगमनशक्तौवैधव्यस्यापिपालनं। यत्तुतत्रैव। कलौनान्यागतिः स्त्रीणांसहानुगमनादृतइति। तद्ब्रह्मचर्याशक्त्यपरं तथाचमनुः। ब्रह्मचर्यंचरेद्वापिप्रविशेद्वाहुताशनं॥ काशीखंडेपि। पत्यौमृतेपिपायोषित्वैधव्यंपालयेत्क्वचित्। सपुनःप्राप्यभर्तारंस्वर्गलोकंसमश्नुते॥ अनुयातिनभर्तारंयदिदैवात्कथंचन। तथापिशीलंसंरक्ष्यंशीलभंगात्पतत्यधः। तद्वैगुण्यात्पतिः स्वर्गात्पतिः पतितिनान्यथा। तस्याःपिताचमाताचभ्रातृवर्गस्तथैवच॥ ॥

॥ ॥अथविधवाधर्माः॥ ॥मदनरत्नेस्कांदे। विधवाकवरीबंधोभर्तृबंधायजायते। शिरसोवपनंतस्मात्कार्यंविधवयापिवा। एकाहारःसदाकार्योनद्वितीयःकदाचन। मासोपवासंवाकुर्याच्चांद्रायणमथापिवा। पर्यंकशायिनीनारीविधवापातयेत्पतिं। नैवमुद्वर्तनंकार्यंस्त्रियाविधवयाक्वचित्। गंधद्रव्यस्यसंभोगोनैवकार्यस्तयापुनः। तर्पणंप्रत्यहंकार्यंभर्तुस्तिलकुशोदकैः। तत्पितुस्तत्पितुश्चापिनामगोत्रादिपूर्वकं। इदमपत्रापरमितिमदनपारिजातः॥ नाधिरोहेदनड्वाहंप्राणैःकंठगतैरपि। कंचुकंनपरीदध्याद्वासोनविकृतंवसेत्। वैशाखेकार्तिकेमाघेविशेषनियमंचरेत्॥ प्रचेताः॥ तांबूलाभ्यंजनंचैवकांस्यपात्रेचभोजनं। यतीचब्रह्मचारीचविधवाचविवर्जयेत्॥ श्राद्धादौविशेषः प्रागुक्तः। यत्तुवोधायनः॥ संवत्सरंप्रेतपत्नीमधुमांसंविवर्जयेत्। अधःशयीतषण्मासानितिमोऽल्पभाषितमितितदसवर्णापरमितिपरार्कः॥

॥अथसन्यासः॥ याज्ञवल्क्यः॥ वनाद्गृहाद्वाकृत्वेष्टिंसार्ववेदसदक्षिणां प्राजापत्यांतदंतेतानग्नीनारोप्यचात्मनि। अधीतवेदोजपकृत्पुत्रवानन्नदोग्निमान्। शक्त्याचयज्ञकृन्मोक्षेमनःकुर्यात्तुनान्यथा। एतदाश्रमसमुच्चयपक्षेजाबालश्रुतौत्वन्येपिपक्षाउक्ताः। यदिवेतरथाब्रह्मचर्यादेवप्रव्रजेद्गृहाद्वावनाद्वा॥ अथपुनरव्रतीवाव्रतीवास्नातकोवास्नातकोवोत्सन्नाग्निरनग्निकोवायदहरेवविरजेत्तदहरेवप्रव्रजेदिति॥ अंगिराः॥ प्रव्रजेद्ब्रह्मचर्याद्वाप्रव्रजेच्चगृहादपि। वनाद्वाप्रव्रजेद्विद्वानातुरोवाथदुःखितः॥ आतुरोमुमूर्षुर्दुःखितश्चौरव्याघ्रादिभीतः॥ भारते। आतुराणांचसंन्यासेनविधिर्नैवचक्रिया। प्रैषमात्रंसमुच्चार्यसन्यासंतत्रपूजयेत्॥ जाबालश्रुतावपि॥ यद्यातुरःस्यान्मनसावाचावासंन्यसेदिति। अत्रविप्रस्यैवाधिकारः॥ ब्राह्मणःप्रव्रजतीतिजाबालश्रुतेः। आत्मन्यग्नीन्समारोप्यब्राह्मणःप्रव्रजेद्गृहादितिमनूक्तेश्चेतिविज्ञानेश्वरादयः। वृद्धयाज्ञवल्क्योपि। चत्वारोब्राह्मणस्योक्ता आश्रमाःश्रुतिनोदिताः। क्षत्रियस्यत्रयःप्रोक्ता

द्वावेकोवैश्यशूद्रयोरितिमाधवस्तु। ब्राह्मणःक्षत्रियोवापिवैश्योवाप्रव्रजेद्गृहादितिकौर्मादुक्तेर्वर्ण
त्रयस्याप्यधिकारः॥ पूर्ववाक्यंतुकाषायदंडादिनिषेधार्थं। मुखजानामयंधर्मोयद्विष्णोर्लिंगधा
रणं। राजन्यवैश्ययोर्नेतित्रात्रेयमुनेर्वचइति। बौधायनोक्तेरिति। यत्तांतरमाहजलंतुकुटीच
कादिरूपमेतदितिमेपि। संन्यासपलयैतत्कमिति। कलौनिषेधःसोपित्रिदंडादिपरस्त्वन्यश
क्। सचसंन्यासश्चतुर्धेत्याहहारीतः। कुटीचकोबहूदकोहंसश्चैवतृतीयकः। चतुर्थःपरमोहं
सोयोयःपश्चात्सउत्तमः। आद्यःपुत्रादिनाकुटीकारयित्वा। तत्रगृहेवावसन्काषायवासाः।
शिखोपवीतत्रिदंडवान्। बंधुपुत्रगृहेवाभुंजानः आत्मजोभवेत्। एतदल्पताशक्तपरं। द्विती
यस्तुबंधून्हित्वासप्तागाराणिभैक्ष्यंचरन्पूर्वोक्तवेषःस्यात्। हंसस्तुपूर्वोक्तवेषोप्येकदंडः।
एकंतुवेणवंदंडंधारयेन्नियमादरादितिस्कांदात्। विष्णुरपियज्ञोपवीतंदंडंचवस्त्रंजंतुनिवा
रणंतावानपरिग्रहःप्रोक्तोनान्योहंसपरिग्रहः। चतुर्थोपिस्कांदे। परमहंसस्त्रिदंडंचरज्जुंगो
वालनिर्मितां। शिखांयज्ञोपवीतंचनित्यकर्मपरित्यजेत्। अयमप्येकदंडएव। येतुशिखोपवी
तादित्यागनिषेधास्तेकुटीचकादिपराः। यत्तुमेधातिथिः॥ यावत्स्यात्सुत्रमोदंगस्तावदेकेनवर्त्त
येदिति। तदपितस्यामेव। यच्चात्रिः॥ चतुर्थोभिक्षवःप्रोक्ताःसर्वेचैवत्रिदंडिनइति॥ तद्वाग्दंडा
दिपरं। नयष्टिपरं। वाग्दंडोथमनोदंडःकर्मदंडस्तथैवच। यस्यैतेनियतादंडासत्रिदंडीतिचोच्यते
इतिमनूक्तेः। तस्मात्परमहंसस्यैकदंडएव। सोपविद्वद्विदुषस्तुसोपिनास्ति। नदंडंनशि
खांनाच्छादनंचरतिपरमहंसइतिमहोपनिषद्युक्तेः। ज्ञानमेवास्यदंडइति। वाक्यशेषाच्चापस्तु
यमः। काष्ठदंडोधृतोयेनसर्वाशीज्ञानवर्जितः। सयातिनरकान्घोरान्महारौरवसंज्ञका
निति। तद्वैराग्यंविनाजीवनार्थसंन्यासपरं। एकदंडंसमाश्रित्यजीवंतिबहवोनराः॥ नरके
रौरवेघोरेकर्मत्यागात्पतंतितेइतिस्मृतेः। यच्चाश्वमेधिके। एकदंडीत्रिदंडीवाशिखीमुंडीतु
एवच। काषायमात्रसारोपियतिःपूज्योयुधिष्ठिरेति। तस्यापिपूर्वोक्तव्यवस्थाज्ञेया॥
॥ ॥अथयतिविधिः॥ बौधायनः। कृत्वाश्राद्धानिसर्वाणिपित्रादिभ्यो
पृथक्पृथक्। वापयित्वाचकेशादीन्मार्जयेन्मंत्रकारमाः। सर्वाणिनित्यस्यनवश्राद्धषोडश
श्राद्धादिकृत्वेत्यर्थः। स्मृत्यर्थसारेपि। एकोद्दिष्टविधानेनकुर्याच्छ्राद्धानिषोडश। अग्निमा
न्पार्वणेनैवविधिनानिर्वपेत्स्वयमिति॥ कात्यायनः॥ कृच्छ्रांस्तुचतुरःकृत्वापावनायश्च
नाश्रमी। आश्रमीचततःकृच्छ्रंतेनासोयोग्यतांव्रजेत्॥ बौधायनः॥ सदैवमार्षकंदिव्यंपि
त्र्यंमानुषकमानुषेतः। आर्षेदेवर्षिब्रह्मर्षिरत्रर्षयः। देवर्षिस्तत्रर्षिमनुष्यर्षयोवामरीच्या
दिः। ऋषयइतिसंन्यासपद्धतौतत्त्वेतादिव्येवसुरुद्रादित्याः। मानुषेसनकसनंदनसनातन
भूतश्राद्धेपृथिव्यादिभूतानि। चक्षुरादिकरणानि। चतुर्विधोभूतग्रामश्चेति। तिस्रःपित्रेपि
आदित्रयोमातामहाश्चमातृकेमात्रादयस्तिस्रः। आत्मश्राद्धेआत्मपितृपितामहादेवताः।
आत्मश्राद्धेपरमात्मदेवत्यमितिसंन्यासपद्धतौतत्त्वं। सर्वत्रचनांदीमुखत्वंविशेषणंद्रे
यं। सर्वत्रपिंडदानंयुग्माविप्राः॥ दक्षक्रतूसत्यवसूवाविश्वेदेवौ। अन्यत्रनांदीश्राद्धवत्

तिहेमाद्रिः। स्मृत्यर्थसारे। केशश्मश्रुलोमनखान्वापयित्वोपकल्पयेत्। दंडंजलपवित्रंचशिक्यपा
त्रंकमंडलुं। आसनंकौपीनं। आच्छादनंकंथांपादुकेइतिपंचवा। एतच्चपूर्वेद्युर्नांदीमुखंकृ
त्वापरेद्युः पुण्याहवाचनंकृत्वाकार्यमितिशौनकः॥ बौधायनः॥ त्रीन्दंडानंगुलीस्थूला
न्वैणवान्मूर्ध्निसम्मितान्। एकादशनवद्वित्रिचतुःसप्ताद्यपर्वकान् वैदकान्कृष्णगोवाल
रज्जुनुचतुरंगुलान्। एकोवाताद्दशोदंडोगोवालसदृशोभवेत्। अनग्निरग्निमुत्पाद्यइत्यनेन
विधानतः। गृह्योदितविधानेनेत्यर्थः। स्वाग्न्यायेवाग्निमानकुर्यादपवर्गोक्रमादितः। आज्यं
पयोदधीत्येतत्त्रिवृदाजलमेववा ॐभूरित्यादिनाप्राश्यरात्रिंचोपवसेत्ततः। अथादित्यस्या
स्तमयात्पूर्वमग्नीन्विहृत्यसः। आज्यमग्नौगार्हपत्येसंस्कृत्यैनेनचस्रुवा। पूर्णयाहवनीयेतु
जुहुयात्प्रणवेनतत्। ब्रह्मायतनएवतुजागृयाद्रात्रिमेतांतुयावद्ब्राह्मोमुहूर्तकः। अग्निहोत्रं
स्वकालेतुहुत्वाप्रातस्तनंततः। इष्टिंवैश्वानरींकुर्यात्प्राजापत्यामथापिवा। जाबालश्रुतौ। तदु
हैकेप्राजापत्यामेवेष्टिंकुर्वंतितदुतथानकुर्यादाग्नेयीमेवकुर्यात्॥ पश्चात्त्रैधातवीयामेवकुर्या
दित्युक्तंतेनात्रविकल्पः॥ अत्राहुरेकेतग्नेःप्राजापत्यानदह्यवशेषेग्नीनितिवहुलश्रुतेः॥ ए
काग्नेस्त्वाग्नेयीति। अनाहिताग्नेरिष्टिस्थानेवैश्वानरआग्नेयोवाचरुरितिमाधवः॥ कात्या
यनः॥ आत्मन्यग्नीन्समारोप्यवेदिमध्यस्थितोहरिं। ध्यात्वाहदित्यनुज्ञातोगुरुणाप्रेषमीर
येत्। कपिलः॥ विधिवत्प्रैषमुक्त्वाथत्रिरुपांशुत्रिरुच्चकैः। अभयंसर्वभूतेभ्योमत्तःस्वाहेत्य
पोभुवि। निनीयदंडशिक्यादिगृहीत्वाथवहिर्व्रजेत्। अभयमितिमंत्रेणअपांपूर्णमंजलिं
निनीयेत्यर्थः। बौधायनः॥ सखेमेत्यादिनादंडंयेनदेवाःपवित्रकोयदस्यपारेशिक्यंतुपात्रंव्याहृति
भिस्तथा। युवासुवासाःकौपीनंगृहीत्वावाथवांस्त्यजेत्॥ ॥अथक्रमः॥
तत्रसन्यासेधिकारसिध्यर्थंस्वस्यनवश्राद्धषोडशश्राद्धसपिंडनानिसाग्निःपार्वणान्यनग्नि
स्त्वेकोद्दिष्टविधिनाकृत्वानाश्रमीचेत्कृच्छ्रचतुष्टयमन्यस्तुतप्तकृच्छ्रंकृत्वोदगयनेएकादश्यां
द्वादश्यांवासाग्निरमावास्यायांपौर्णमास्यांचतुर्दश्यांवायथापर्वणिप्राजापत्यास्यात्। तत्रदेशका
लौस्मृत्वापरमहंसादिसन्यासग्रहणंकरिष्येइतिसंकल्प्य। गणेशंसंपूज्यपुण्याहंवाचयित्वामातृ
काश्राद्धवृद्धिश्राद्धेच। कृत्वास्तमयात्प्रागेपासनंसमिध्याहिताग्निस्तुगार्हपत्यंविधिवदग्निहोत्रीत्रि
काण्डमंडनोक्तदिशाकुशपत्न्यासहपवमानेष्ट्यन्तांपूर्णाहुतिंतेनवाधानंकुर्यात्। ब्रह्मचारीचेल्लौकिके
विधुरश्चश्राद्धतिभिः॥ मणेवेनचाग्निमादायान्वग्निरुषसामित्यादिनिदृष्टोद्वितीतिनिधाय
तेनैवसमिध्यततसवितुर्विश्वानिनइतितिसृभिः। समिधोभ्यादध्यात्। एवमग्नौसिद्धेकक्षोपस्थ
वर्जंवपनंकृत्वापयोदधिघृतमाज्यमपोवा। ॐभूःसावित्रींप्रविशामि। त॰ एयइतिप्राश्याचम्य
पुनरादाय। ॐभुवःसावित्रींप्रविशामि। भ॰ हीतिद्वितीयं। ॐस्वःसावित्रींप्रविशामिधी॰या
त्। इतितृतीयंसमस्तयाचतुर्थं। ॐभूर्भुवःस्वःसावित्रींप्रविशामितत्॰यात्इति॥ सन्यासप
द्धतौतुत्रिवृदसीतिप्रथमं। प्रवृदसीतिद्वितीयं। विवृदसीतितृतीयंप्राश्यापःपुनंत्विति जलंप्रा
श्य सावित्रीप्रवेशउक्तः। ततःआहवनीयंविहृत्यब्रह्माणमुपवेश्याज्यंसंस्कृत्यचतुर्होदशवा

गृहीत्वा समिन्द्रवो मां स्वाहा। परमात्मन इदमिति हुत्वोपवसेत्। इदं ब्रह्मान्वाधानं ततः सायंहोमं वैश्व
देवं च। कृत्वाग्नेरुदक्कुशानास्तीर्य दंडादीनि। दशापवित्रं साधुन ब्रह्मासने कृष्णाजिनोपविष्टो रा
त्रौ जागरं कृत्वा प्रातर्होमानंतरं प्राजापत्यां वैश्वानरीं वा कृत्वा ऋत्विग्भ्यः सर्वस्वं। ब्राह्मणे च पशुर
णं तेजसपात्रं दत्वा दारुपात्राण्याहवनीये मृन्मयानि च जले क्षिपेत्। कृत्वाजिनं त्वाददीत।
अनाहिताग्निस्तु वैश्वानरमाग्नेयं वा चरुं हुत्वा। पात्राण्यप्सु क्षिप्त्वा भूर्भुवः स्वरित्यपः स्पृष्ट्वा न
रतसमंदीति सूक्तं जप्त्वा विप्रान् संभोज्य पुण्याहं वाचयित्वा। अथवा वनं कृत्वा प्राणापत्नो हेति
पंचाज्याहुतीर्हुत्वा पुरुषसूक्तेन प्रत्यृचमाज्यं चरुं जुहुयात्। अत्र विरजाहोमं केचिदाहुः। पयो
क्तशिवगीतासु। जुहुयाद्विरजामंत्रैः प्राणापानादिभिस्ततः। अनुवाकांतमेकाग्रसमिदाज्य
चरून्पृथक्। आत्मन्यग्निं समारोप्य याते अग्ने इति मंत्रतः। भस्मादायाग्निरित्याद्यैर्विमृज्यांगा
नि संस्पृशेत्। पापैर्विमुच्यते सत्यं मुच्यते च न संशयः। प्राणापानव्यानोदानसमाना मे शुध्यं
तां ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा। सर्वत्र लिंगोक्तदेवताभ्य इदमिति त्यागः। वाङ्मनश्चक्षुःश्रो
त्रजिह्वाघ्राणरेतोबुद्ध्याकूतिसंकल्पा मे शुध्यंतां। ज्योतिः०। त्वक्चर्ममांसरुधिरमेदोमज्जास्ना
यवोस्थीनि मे शुध्यंतां ज्योतिरहं०। उत्तिष्ठ पुरुष हरितपिंगल लोहिताक्ष देहि। ददापयिता
मे शुध्यंतां ज्योतिः०। पृथिव्यापस्तेजोवायुराकाशा मे शुध्यंतां०। शब्दस्पर्शरूपरसगंधा मे शु
ध्यंतां ज्योतिः०। मनोवाक्कायकर्माणि मे शुध्यंतां ज्योतिः०। अव्यक्तभावैरहंकारैर्मे शुध्यंतां ज्यो
तिः०। क्षुधे स्वाहा। क्षुत्पिपासाय स्वाहा। विविट्यै स्वाहा। ऋग्विधानाय स्वाहा। कषोत्काय स्वाहा।
क्षुत्पिपासामलं ज्येष्ठामलक्ष्मीं नाशयाम्यहं। अभूतिमसमृद्धिं च सर्वां निर्णुद मे पाप्मानं स्वा
हेति। अन्नमयप्राणमयमनोमयविज्ञानमयानंदमया आत्मा मे शुध्यंतां ज्योतिः०। ततः स्विष्टकृ
दादि हुत्वा ब्रह्मणे हिरण्यमन्यं पात्रं धेनुं च दत्वा संमासिंचावित्युपतिष्ठेत। अत्र केचिद
ग्नेः सावित्रीप्रवेशं पूर्णाहुतिं चाहुः। ततो याते अग्ने यज्ञियातनूरिति। स एभिरेकैकं जिघ्र
न्नात्मन्यग्नीन्। समारोप्य गुरवे सर्वस्वं दत्वा। यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहि
णोति तस्मै तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये। इत्युपस्थाय दक्षिण
जान्वाच्य पादावुपसंगृह्याधीमहि भगवन्त्वो ब्रह्मेति वदेत्। ततो गुरुरात्मानं ब्रह्मरूपं ध्या
त्वा। शंखं द्वादशप्रणवैरभिमंत्र्य तेन शिष्यमभिषिच्य शन्नो मित्र इति शांतिं पठित्वा तच्छि
रसि हस्तं दत्वा पुरुषसूक्तं जप्त्वा मम व्रते हृदयं ते दधामीति च। जप्त्वोदङ्मुखस्य प्रणवार्थ
मनुसंदधन् दक्षिणे कर्णे। प्रणवमुपदिश्य तदर्थं च पंचीकरणाद्यवबोध्य। अयमात्मा
ब्रह्म तत्त्वमसि प्रज्ञानं ब्रह्मेत्याद्युपदिशेत्। तदर्थं च वदेत्। ततो नाम दद्यात्। ततः शिष्य
स्तेनोपदिष्टो हरिं स्मरन्। ऊर्ध्वबाहुस्तिष्ठन् देवान् साक्षिणः कृत्वा। ॐ भूर्भुवः स्वः सं
न्यस्तं मयेति त्रिरुपांशु त्रिरुच्चैश्चोक्त्वा जलसमीपं गत्वा स्नात्वा अभयं सर्वभूतेभ्यो मत्तः
स्वाहेति त्रिरंजलिं क्षिप्त्वा पूर्वासु वासांसि काषायं कौपीनं बाह्यं च परिधाय सखा मा गो
पायेति मुख्यं वैणवं पालाशं बैल्वं औदुंबरं वा दंडं गृह्णीयात्। अत्र पुत्रकामो गृहस्थः

शंखेन पुरुषसूक्तेन दंडमभिषिच्य दद्यादित्याचारः। ततः शिखामुत्पाट्य। ॐ भूः स्वाहेत्यग्नौ जले वा हुत्वा तथैवोपवीतं हुत्वा येन देवाः पवित्रेणेति जलपवित्रं। यदस्य पार इति शिक्यं सावित्र्या। कमंडलुं सप्तव्याहृतिभिर्भोजनपात्रमिदं विष्णुरित्यासनमृथ्व्या गृहीत्वा। ॐ भूस्तर्पयामीति व्यस्तसमस्ताभिर्महर्नमइति तर्पयित्वा ॐ भूः स्वधा भुवः स्वधा भूर्भुवः स्वर्महर्नमः स्वधेति पितॄं स्तर्पयित्वोदुत्यं चित्रं तच्चक्षुर्हंसः शुचिषन्नमो मित्रस्येति सूत्वा त्वा सुरभिमतीभिरापोहिष्ठेति हिरण्यवर्णाभिः। पावमानीभिर्व्याहृतिभिश्च मार्जयित्वा शेत्र ऋतमघमर्षणं। प्राणायामांश्च कृत्वा। ॐ भूर्भुवः स्वरिति पठित्वा नमः सवित्र इति च सूर्यमुपस्थाय पुनः स्नात्वा जंघे क्षालयित्वा ॐ इति ब्रह्माहमिति दं सर्वमोमिति। ब्रह्म वा एष ज्योतिर्य एष वेदो य एष तप ति वेद्यमेवेन य एवं वेदोप देव नमस्तीति जपित्वा सहस्रगायत्रीं जपेत्॥ इति॥ ॥
॥ ॥अथ यतिधर्माः॥ प्रातरुत्थाय ब्रह्मणस्पत इति जपित्वा दंडादीनि मृदं च निधाय मूत्रपुरीषयोर्गृहस्थचतुर्गुणं शौचं। कृत्वा चम्य पर्वे द्वादश वर्जं प्रणवेन दंत धावनं कृत्वा तेनैव मृदा बहिः। कटिं प्रक्षाल्य जलतर्पणवर्जं स्नात्वा पुनर्जंघे प्रक्षाल्य वस्त्रादीन् गृहीत्वा मार्जनांतं कृत्वा केशवादिनमोनामभिस्तर्पयित्वा। भूस्तर्पयामीत्यादिव्यस्तसमस्तव्याहृतिभिर्महर्जनस्तर्पयामीति तर्पयेत्। ॐ भूः स्वाहेति स्वाहाशब्दांतैः स्वधा स्वशब्दांतैर्वाभिरेव उनस्तर्पणमिति केचित्। ततश्चाचम्यांजलिना प्रणवेन जलमादाय व्याहृतिभिरुद्धृत्य गायत्र्या निःक्षिप्य गायत्रीं जपेत्। उदिते सूर्ये प्रणवेन व्याहृतिभिर्वार्घ्यं त्रिर्दत्वा मित्रस्य चर्षणीधृतः पूर्वोक्तसौरीभिरिदं विष्णुस्त्रिदेवो ब्रह्मजज्ञानमिति। चोपस्थाय सर्वभूतेभ्यो नमः इति प्रदक्षिणमावर्तते ततो नत्वा। ॐ आदित्याय विद्महे सहस्रकिरणाय धीमहि तन्नः सूर्यः प्रचोदयादिति त्रिर्जपेत्। एवं त्रिकालं विष्णुः पूजा ब्रह्मयज्ञं च कुर्यात्॥ ॥अथ भिक्षा॥
॥ विधूमे सन्नमुशले व्यंगारे भुक्तवर्जने काले पराह्णे भूयिष्ठे नित्यं भिक्षां यतिश्चरेदिति मनुः। ...लेउद्धृत्यामीति च तत्सवितुरादित्यमुपस्थाय पतेनैकं ध्यात्वा। आक्रमेनेति प्रदक्षिणं कृत्वा येनेपा न इति जप्त्वा येसौ विष्णावध्यादित्यपुरुषो न हृदि स्थितः। सोऽहं नारायणो देवः इति ध्यात्वा ...गमयेत् त्रिदंडं दक्षिणे तु गेतः सव्यापवाहुना पात्रं वामकरे क्षिप्त्वा श्रवपे दक्षिणेन त्रि...गृधायनो क्रदिणाजीनं पंचसप्त वा गृहाणां त्वभवन्नूर्भीभिक्षां याचित्वा। पूर्णमसिपूर्णमे भूया इत्यागत्य शुचिरन्नं मोक्ष्य। ॐ भूः स्वधा नमः इत्यादिव्यस्तसमस्तव्याहृतिभिः सूर्यादिदेवेभ्यो भूतेभ्यश्च भूमौ क्षिप्त्वा भुक्त्वा प्रणवेन षोडशप्राणायामान् कुर्यादिति संक्षेपः। गौतमव्याघ्र्यौ भृगुः। यतिहस्ते जलं दत्वा भैक्ष्यं दद्यात्पुनर्जलं। भैक्ष्यं पर्वतमात्रं स्यात्तज्जलं सागरोपमं। अपर्वतमूलमाधवाय एकैक मद्भ्यनरत्न स्मृत्यर्थसारादौ ज्ञेयं॥ कण्वः॥ एकरात्रं वसेद्ग्रामे नगरे पंचरात्रकं। वर्षाभ्योन्यत्र वर्षासु मासांस्तु चतुरो वसेत्॥ जावालश्रुतौ॥ शून्यागारे देवगृहे तृणकूटे वाल्मीके वृक्षमूले कुलालशालाग्निहोत्रगृहनदीपुलिनगिरिकुहरनिर्झरस्थंडिलेष्वनिकेतनरतिः॥ मात्स्ये॥ अष्टौ मासान् विहारः स्याद्यतीनां संयतात्म

।। अन्नसेषलैपुनिसबैकुलजुतकरैंअहार अर्थधर्मअरुकामहूँतातेहोतअपार
चौपाई। पुरुषनकेपुरुषारथदाता हैपरजन्यसकलविधिताता १ हमरेपरंपरान
लेआई कोउपंडितनहिंआजुवताई २ कामलोभभयद्रोहविचारी तजैजोपहपूज
नसुषकारी ३ तौनहिंहोततासुकल्याना यामेहैविचारनहिंआना ४ श्रीसुकोवाच
यहिंविधिनंदवैनजवषोले सुरसुरसगोपहुसववोले ५ सुननैनहाविहंसिभगवं
ता सक्रकोयहितवचनवषाना ६ श्रीभगवानउवाच हैंमतोपदेनसास्त्रपुराना
येककुकहतसुनहुदैकाना ७ जीवजनतसवकरमहितेरे करमहितेपुनिलीनघ
नेरे ८ दोहा भीतिछेमअरुसुषदुषहु होतकर्मतेतात विनाकर्मतेकवहुंनहिंहो
तिकोनिहूवात चौपाई जोमानैफलदायकईसै देतकर्मफलसोउविसवीसै १ क
रैकर्मजोनहिंजगमांही तेहिंदैसकैईसफलनाहीं २ अहेईसतेनहिंकछुहेतू कर
महिसववांधलहैनेतू ३ लहैंकर्मनिजनिजफलप्रानी तौपूजहिकाइंद्रहिजानी ४
पूरुवकर्मजौनकरिराषत मकैनमेटिइंद्रश्रुतिभाषत ५ देवअदेवमनुजसंसार
सकलकर्मवसअहेअपारा ६ लघुवडजोनिकर्मवसपावै कर्महिवसतनलेजिय
जावै सत्रुमित्रआदिकसवजेते होतकर्मअनुसारहितेते ८ दोहा कर्महिईसरक
र्मगुरुकर्महिजगतप्रधान तातेपूजहुकर्मकोअहैईसनहिंआन चौपाई भजैऔर
निजकर्मविहाई सोकवहूंमंगलनहिपाई जिमिनारीनिजपतिकहंत्यागी भजेजा
रसोसदाअभागी २वेदवृत्तिहैव्राम्हनकेरी छितिपालनछत्रीकीहेरी ३ वैस्यवृत्ति
जानहुव्यापारा सूद्रवृत्तिदुजसेवउचारा ४ कृषिवानिज्यपालिवोगाई उचितव्याज
लीवोव्रजराई ५ वैस्यवृत्तियहैंविधिचारी येगोपालनअवसिहमारी ६ सतरजत
मथितिउतपतिलयके हेतगुनहुपितुसकलसमयके ७ रजगुनतेउत्पतिसंसा
री रजप्रेरितवरषहिंघनवारी ८ दोहा तातेजीवनप्रजनकोहोतसिद्धिसवकाज
पितादयाहीपूजिकेकाकरिहेसुरराज चौपाई नहिंहमरेपुरदेसहुग्रामा नहिंघ
हयेकठौरअभिरामा हमहैंनितपितागिरिवासी रहैंसदावनमेसुषरासी २ हैगोव
रधनदेवहमारा जोगोवननअनदेतअपारा ३ तातेऔरदेवनहिंपूजो करोविचारन
अवकछुदूजो ४ इंद्रजागकोजोसंभारा निजनिजकरऊविविधिप्रकारा ५ गोअसि
गरीआगेकीजे विप्रनकोअपनेसंगलीजे ६ पूजहुपितुगोवरधनकांही यहकुवर
ध्रनंकरिहिसदांहीं विविधिभांतिपाकनवनवाओ मूगसितामोदकवंधवाओ ८ दो
हा पायससूरीपूपपैपपरीपपरीपान पालपेराकछुपपचिहूपेराएटथितअमाना।
चौपाई अरुसंपुलीआदिवहुविंजन वनवावहुपितुहृतमनरंजन १ तानदिवसको
दूधसमेटी भरिभरिताकोमेटनमेटी २दूधदहीवासोधीवाफ विविधिमलाईरा
वरीसाफ़ओरहुजेविंजनजोइजानै सोनिजनिजग्रहमेनिरमानै अंम्हवादिवहुवि।

प्रवेसाई लेहुसविधिहोमहुकरवाई ५ धेनुदक्षिनाविप्रनदीजै औरहुअन्नदानवहु
कीजै ६ अरुपतितनचंडालनस्वानन दीजेअन्नसहितसनमानन ७ गौवनकोनवा
विनहुषवाई गोवरधनदेवहिढिंगजाई ८ दोहा गिरिराजहिसवसाजिकोदीजेभोग
लगाइ जोरिसमाजपितातहोलेहुप्रसादहिंषाइ चौपाई भूषनवसनपहिरिपुनिताता
अंगरागलेपितकरिगाता १ सिगरेगोपनजोरिसमाजू लैसंगवेदवादिदुजराजू गोव
रधनपरदक्षिनदेहू फेरिलौटिऐयेनिजगेहू यहमततौपितुअहेहमारा पुनिजो
रहुविचारतुम्हारा ४ वासववलिगिरिपतिकहदीवो पुनिप्रदक्षिनाताकीकीवो ५ य
हमोकोलागतअतिनीको यहीकरहुअवकरिमतठीको ६ श्रीसुकोवाच कालात्मा
वासवमदनासी तेहरिभेव्रंदावनवासी ७ तिनकेवचनसुनतनंदराई वोलेगोपनस
वनसुनाई ८ यहवालकदेषनकोछोटो पैहैवुद्धिकोअतिमोटो ९ दोहा पुनिहरि
कोमुषचूमिकैकहैवचननंदराय लालकह्योजोअर्थतुवसोसवहैतत्वगाय चौपा
ई जामेप्रीतितिहारिहठिहोई हमसिगरेकरिहैंअवसोई १ जोतोहिनीकनलागहिलाला
[illegible] कीनहुकाला २ वोलिउठेगोपहुयकवारा करहुनंदजोकहतकुमारा ३
नंदतहांनिजदूतवोलाई दियोसकलव्रजमेगोहराई ४ चलहुसाजुलेहमरेसाथे प्रात
कालपूजवगिरिनाथे ५ नंदनिदेससुनतव्रजवासी कियेतैसहीगुनिसुषरासी ६ प
हरनिसावाकीनंदराई उठिमज्जनकियजमुनेजाई ७ भौनआइकिंजनवहुजोरी पूज
नसाजरचीनहिंथोरी ८ दोहा सकलवेदवादीदुजनआसुहितहवोलवाय चलेथे
नुआगूकिहेवहुसस्तैनपढाय चौपाई इतनेमेसिगरेव्रजवाला लैगिरिपूजनसा
जउताला १ गवनेनंदसंगसानंदा गावतसुंदरसुजससगोविंदा २ गोवरधनढिंगप
हुंचेजाई छिप्रहिंविप्रनसवनवोलाई ३ करनलगेपूजनगिरिकेरो वेदविधानसहित
सुषदेरो ४ प्रथमहिंपंचामृतनहवाये विविधिवरनअंवरनचढाये ५ अगरतगर
मृगमदअरुचंदन अरुकेसरमिलायरचिवंदन ६ सोगिरिराजहिनंदलगाये वि
विधिभांतिपुनिसुमनमगाये तिनकेरचिभूषनवहुभांती अरपेगिरिकहसहित
जमाती ८ दोहा पुहुपफूलभरिटोपरनऔरहुदियेचढाय सैलनाथकेमदिजनुसु
मनसैलदरसाय चौपाई दीन्हीयेविविविधिविधि धूपा दीपदेषायोअतिहिअनपा
पुनिजेविविधिभांतिपकवाना लैलैरहतेकिपेपयाना २ तेसवगिरिकोअरपनल
गे नंदादिकअतिसैअनुरागे ३ रचीअन्नकीथलथलरासी औरमिठाईसकलसुधा
सी ४ दहीदूधघृतनदोवताई माषनमेवारियान्हढाई ५ तहंयककौतुककियजदुराई
वपुआपनोदुतियप्रगटाई ६ अतिसैव्रहलंववभुजदंडा दिसनवदनपरकासअषं
डा ७ अतिसैपृलजंघपदजानू सीससैलकेश्रृंगसमानू ८ भूषनवसनमुकुटमनि
मालासैलमहिअतिछविसाला ९ दोहा पेषिप्रनिसगुवालसवगोवरधनकोरूप

जनविविधिवजाय चौपाई यहिविधतहेंआरतीउतारी कारनप्रदक्षिननंदविचा
री१ पुनिजेविंजनकछुतहवोचे तिनकोभोजनकरिसुषराचे २ चलेप्रदक्षिनकरन
सुषारी भूषनवसनविविधिविधिधारी लेपिलेपिअंगनअंगरागा लीन्हेसंगविप्र
वडभागा ४ पतितनअरुचांडालनखानै तिनकोदेतअन्नसनमानै ५ गोवनकोनद
ननचरावत ओरहुदीननधनलुटवावत ६ चढीसकटसिंगारीव्रजनारी गावत
केस्नचरित्रसुषारी ७ गिरिकोकरनप्रदक्षिनलागी आसिषदेतविप्रवडभागी ८
दोहा यहिंविधितेगिरिराजकोगोपिनसंजुतगोप देप्रदक्षिनासुषभरेमानेनिजदुष
लोप पुनिग्वालनदेकेस्नजुतव्रजपतिपूरनकाम मंदमंदआवतभयेसांझजानिनि
जधाम इतिश्रीमन्महाराजाधिराजबांधवेसश्रीविस्वनाथसिंहात्मजसिद्धिश्रीमहा
राजाधिराजाश्रीमहराजाश्रीराजावहादुरश्रीकृस्नकृपापात्राधिकारिरघुराजसिं
हजूदेवकृतेश्रीभागवतेआनंदाम्बुनिधोपूर्वार्धचतुर्विंसस्तरंगः २४ ॥ ः ॥श्रीसु
कोवाच दोहा व्रजमेवासवदेषिकेनिजपूजाकोनासहरिदासननंदादिपेकीन्ह्योको
पाप्रकास चौपाई संवर्तकगनमेघअधीसाकरतजोजगकोप्रलेमहीसा १ ताहिहु
रतवासवबोलवायो अतिकठोरअसवचनसुनायो २ लैसिंगरेमेघननिजपासू
व्रजमंडलबोरहुअवआसू ३ नंदगोपकरिममअपमाना कियमषभंगमरोअभि
माना ४ छुद्रगोपकाननकेवासी थोरेहुविभोगर्वकेरासी ५ इनकोधनमदनाहिंस
हिजाता छोटेनछमामहाव्रतपाता ६ हमहूसोंकीन्हीढनहांसी गसीसोहमरेहि
यमहेंगांसी ७ केस्नमनुजकेवलसवगोपा कियोहमारेमषकोलोपा ८ दोहा जैसे
ज्ञाननजहाजतजिनदिमषनावअजान तरनहेतजगजलधिकोहठवसठानतठा
न चौपाई अहैकेस्नअतिहीवाचालाहैकुमतीकठोरअरुवाला १ विनासीलकोसा
मरवेसा विद्याकोताकेनहिंलेसा २ अपनेकोपंडितअतिमानै अनुचितउचितनेक
कुनहिंजानै ३ असेकेस्नमनुजवलभारा हमैनसमुझहिंगोपगवारा ममअप्रियम
मदेषतकीन्ह्यो जग्यभागपरवतकहंदीन्ह्यो सर्वेमानिकेकेस्नभरोसे जीवनचह
तवैरकरिमोसेतातेकेस्नभरोसिनकेरो वढ्योविभोमदजोनघनेरो सोभैआजुहिंक
रिहोंनासा देषतहोंअवकरतमासा यषिवारिगेयाघरमाहीं अपनेसमसानतको
उनाही ९ दोहा जलधरधावहुयहिसमैवरषिघोरजलधार सहितधराधरसमरिसिया
करहुधेनुसंघार चौपाई वोरिदेहुव्रजकीसवधरनी पावहिंफलकीन्हीजोकरनी १ मैं
धेनुवृषभवछराअरुवाछी ववैनअवयेकोव्रजमाछी २ नरनारीसनदतेहिंदेसू र
हिनजायतिनकरकहुंलेसू ३ जलधरकछुनभीतिउरल्यावहु प्रलैकालघाराढर
कावहु ४ हौंऐरावतमेंचढिआजू छियेकुलिसजुतदेवसमाजू ५ रैहोंपीछेपडेतुम्हा
रेसन्मुषऐहैकोनहमारे ६ उनचासोमारुततुवसंगा पठवहुंकरननरव्रजभंगा ७ स

मरथहोयजोयहजगमाहीं रक्षनकरैसोअवरजकोहीं ८ दोहा केस्तववावनहेत।
जेऐंहैंविधिहरआज तौतिनहूंकोजीतिमैंलैहौंसहितसमाज १ श्रीसुकोउवाच॥
चौपाई असकहिसककोपमहछायो मेघनकोवंधनषोलवायो १ अरुउनचासौंवो
युनकोंहीं आपसुदियोमेघसंगजोहीं २ मातलिसोंअसकह्योसुरेसा ल्यावहुमेरोतु
रलगजेसा ३ मातलिनागदियोतुरत्याई तापरभोसवारसुरराई ४ लियेकुलिसकरप
मकठोरा चितवतअरुननेनचहुंवोरा ५ चतुरंगिनीसुरनकीसेना आईसजिकेजोव
लअैना ६ महामेघतनस्यामहजारन सौवरताप्रिसैकेकारन ७ आवहप्रवहआ
दिजेपवना सजेसवैवासवअरिदमना ८ दोहा साजिसैनयहिभांतितहमेघनपो
नसमेत चलोसकअतिवक्रव्हैव्रजनासनकेहेत छंदसंष्यानारी चलेमेघआगेम
हाकोपपागे भयोअंधकाराननभेमेअपारा १ जलेसिंधुसातांमरेतेअघाता करैसोर
भारी जगेंभीतिकारी २ भरेघोरवोरा गिरेंसकरोरा महावेगधाये दुतैव्योमछाये ३
व्रजैसंडषांडा करेंकोप्रचंडा भरेहैंघमंडा वलीहैंअषंडा ४ दसौंदूंदिसानै तमेमोम
हाने भईजामिनीहीं दिपैदामिनीहीं ५ भईभीतिभारी कंपीभूमिसारी कहेंदेवरा
जा करौंआसुकाजा ६ हजैवारिदीन्हे वलवैनकीन्हे हनेगोपग्रामा लहोगेइनामा
७ वंचैंपेकनाहीं कहूंजोपराहीं करेंकैसरक्षा वलीजोप्रतक्षा ८ दोहा यहिविधि
भाषतघनतोंब्रजचौरासीकोस घेरिलियोसुरपतिकुमतिकरिमनमेअतिरो
स १ छंदनराच तहांजलप्रजोरसोंकियोकठोरसोरहै प्रलैसमानभोरव्हैगयोसो
चारिवोरहै छनैछनैप्रकासकोकरैंदमकिदामिनी मनौमहाभयंकरीकरालकाल
जामिनी १ प्रचंडवेगकैतहांपैवव्रवन्नचासहूं चलेदिसानचारितैतजेनिजैनिवा
सहूं हजैधरासुछैगईमहानधूरिधारहे नदेषिनेकहूंपरैजिजैभुजैपसारहे २ तजें
लगंअकासतेजलप्रधारिधारहे अतीवआतुरैवितुंडसुंडकेअकारहें गिरैंलगे
करोरिघोरवोरचारिवोरते महानमेलकेसमानतेअलीवजोरते ३ अघातसोरते
व्रजेअनेकवज्रपातभे रूकोरयोननैनतप्रस्रसव्रानघातभे नदीसतीदिसानिसा
नदोसहूंसुनोपरै ननेकहूंनगीचकानवैनहूंसुनोपरै ४ गंभीरव्हैनदीननीरधार
धावती धरा परैंअवर्तहूंउठैतरंगसोरभर्भरा परैनऊंचनीचठौरजानिगोकुलेम
हीं कलिंदिजाकरारकोविहायकूपरैवहीं ५ वनैनजातआवतोकहूंव्रजैपगैभरें।
घडोनहोतहूंवनेकछूनिहारिलापरै कुरंगऔविहंगचीतकारकोकरैंलगे कहूंभ्रमैक
हूंथिरैकहूंचलैंकहूंभगे ६ अनेकजीवगाजकी गराजसोंअप्रानभे अनेकतासु॥
ज्वालवागभस्मकेसमानभे अनेकतासुजोतिकोविलोकिअंधव्हैगये अनेकजा
तुनीरधारमहूडूवतेभये ७ पएयवच्छवालिधेनुवेलगोष्ठमेगिरे तहूंसिलाप्रहा
रतेनवैठतोवनेथिरेगुवालऔगुवालिनीफरैंहहापुकारहैं नदेहकीनगेहकी ति

न्हैकछूसम्हारहै ८ दोहा जरपिघुसे घरमे सवैतदापिपौनभकोर रहतवनतनहिंनै। कहूंलागतवीरकरोर छूटतोमर विलषानगोपीग्वाल सवकहहिंआयोकाल आ ववचवढीसतनाहि हंमभागिकेहिंथलजाहिं १ नहिंनीककीन्ह्योनंद कियसक्रजागहिंवंद निजसुतकह्योउरआनि दुषलियागिरिमषठानि २ अवहोतहैव्रजकरनास सवतजोजीवनआस ३ असकहतरोवतगोप कियवैसवासवकोप ३ कोवसुतनकोउरलाय गोपीरहींसिरनाय कोउकहैंनारिनपासु भजिआउरीदृतआसु ४ लहिवोरघातकरालगिरतीविसालरैवाल छप्परउड़तलहिपौन टूटतसकटघतभौन ५ फटफटफुटतघटदूर तटतटदुटततरुकर १ कवहूंनभोजिनसोग तेअतिदुषीव्रजलोग ६ भाषहिपरसपरवात जेहिंहितभयोउतपात॥ सोनंदसुतहिंनजीक अवचलवसवकोनीक ७ करिहैंअवसिसारस समरथ्थकान्हवतस वचिहैंनऔरेठौर विननिकटनंदकिसोर ८ दोहा असकहिगोपीग्वाल सवहाहाकरतपुकार यकयेकनकोगहिहुतेगेजहंनंदकुमार चौपाई कांपतगातबोलिनहिंआवत गिरतपरतपुनिपुनिउठिधावत १ गोवनवछरनउरहिं छिपाई गईनंदसुतकेढिंग धाई २ दुषितचहूंकिततेविमिआंहीं कहहिंमनोतुमतजिकहंजांहीं ३ गोपीहरिपदगिरीविहाला कहहिंकरहुरक्षननंदलाला ४ केलनकेलनकाहिगोपपुकारे गोकुलकेहोतुमरषवारे ५ तुम्हरेहिकेहसक्रमषमेटी पूज्योगिरिहिनतहिंकछुसेटी ६ तातेवासवकरिअतिकोपा कीन्हेरतसकलव्रजलोपा ७ देषतषडेकहोनंदलाला रक्षनकरहुनकसयहिकाला ८ दोहा सुनिगोपिनगोपनवचनअतिआरतदुषभीन गोऔवछरावाछुरानिरषिषडेअतिदीन चौपाई वोरनसुहितसलिलकीधारा वरषिरहेघनवारहिंवारा १ झंझायोनचलतचहुंवोरा अस ननिय[illegible]वारा २ औसोनिरषिकैस्तभगवाना महाकोपवासवकरजाना ३ पुनिअसमनमेनाथविचार्‍यो मेवासवकोजागनिवार्‍यो ४ तातेवरषिसासिलचहुंवोरन चहतआजवासवव्रजवोरन ५ मैनिजवलव्रजकीरषवारी करिहौंकहाकरिहिपविधारी भयोविभौमदमत्तसुरेसा मूढनजाहित्रानकलेसा ६ याकोमदमैअवहिउतरिहौं सहजहिंमैव्रजरक्षनकरिहौं दोहा मोरभक्तजेदवहैतिनकेगर्वनहोय सक्रमोहिंजानतनहींरह्योविभौमदमोय तातेकरिवोजोगहैमानभंगयहिकेर नातोअनरथऔसहीकरिहैयहसठफेर चौपाई मेहीहौंव्रजकोरषवारा व्रजकोमेहीअहौंअधारा १ मेहीयेकअहौंव्रजनाथा व्रजकोसुषदुषमेरेहिहाथा २ मोहिदेषिजीवतव्रजवासी सदारहतममदरसनआसी ३ तनमनधनमोहींकोजानै दूजोईसमनहिंनहिंआनै जोइनकोनराषिमैलीन्ह्यो पुहुमीप्रगटिकहातोकीन्ह्यो ५ जगमेमेरदासनकोंहीं दुषदैसकैरुद्रविधिनाहीं

कुद्इ इयह केतिकवाता चाहतव्रजजोकरननिपाता ७ असगुनिगोपिनगोपनकों
ीकह्योचलहुममसंगहिंमाही ८ दोहा असकहिनिजगोहंनलिपेगोवंनग्वालि
नग्वाल गवंनेगोवरधननिकटगिरिधारनगोपाल कवित्त महामदमत्तमघवाकेभे
जेमहामेघमहादुषदेनहेतमहाजलठास्योहै गोवंनकोगोपिनकोगोपनकोतोने

[illegible]
साछितिपरछनेमेछनाकसोउपास्योहै इंद्रगर्वगारिवेकोगोकुलउधारिवेकोगरुयो
गोवरधनगोविंदकरधास्योहै १ दोहा गोपिनगोपनसोंकह्योगिरधारीगोपाल॥
आवहुगिरिनीचेसवैलेगोवंनपहिंकाल १ चौपाई गिरिवरकोगिरिवोभ्रमकरते।
करहुनकछुभ्रमयहांनिजडरते १ नंदववाकेपुंन्यप्रभाऊ मेउठायलीन्होगिरिरा
ऊ २ इहांनवातवर्षकीभीती आवहुकरिमनमाहंप्रतीती ३ गोवरधनकरिहेतुवर
षा प्रगटिभष्योवलिजोनप्रतक्षा ४ नंदववाहेजसुदामाई आवहुगोपगोपिलेधा
ई ५ जवलोंवरषाहोयमहानी तवलोंवसहुइतैसुषमानी ६ सुनिनंदनंदनकी
असवानी गोपीग्वालनाननिजमानी ७ गिरिवरजरजरहरवरभरभर थरथरप
रथरकरइदरदरथर ८ दोहा लाषनगौश्रेवाछुराअरुवाछिहूअनत गोवरधनतरा
मेरहेनहिसंकेतसहंत चौपाई सिगरीसाजसाथलेगोपा वैलनजुतकियसकटा
अरोपा १ पैनाहिंकोहुकोसोंकरभयऊ सवेसुपासतहांव्हेगयऊ २ लगीनकाहू

